चौखम्बा—संस्कृत—ग्रन्थमाला।
( ग्रन्थसंख्या १६ )

# ॥ मीमांसाबालप्रकाशः ॥

( जैमिनीयद्वादशाध्यायार्थ—संग्रहः। )

श्रीमद्पदवाक्यप्रमाणपारावारीणधुरीणमीमांसाद्वै-
तसाम्राज्यधुरन्धर श्रीमद्भट्टनारायणात्मज
भट्टशङ्कर—विरचितः।

अडकरोपनामक-श्रीमुकुन्दशास्त्रिणा परिशोधितम्।



काश्याम्।

विद्याविलास-नाम्नि यन्त्रालये, श्रीयुतबाबूहरिदासगुप्तेन,
मुद्रयित्वा प्रकाशितम्।

सन् १९०२ ईस्वी
वैक्रम सम्वत् १९५९

शुभम्।

# विज्ञापनम् ।

श्रीपरमेश्वराय नमः ।

---

तत्रभवन्तो भगवन्तः परमकारुणिकाः श्री ६ शबरस्वामिकुमारिलभट्टप्रभृतयो महर्षयो विस्तरेण धर्ममीमांसां व्याचख्युः। तेषु मन्दमतीन् व्युत्पित्सून् दुरवगाहतया ऽप्रवर्तमानान् निबन्धविस्तरदर्शनसञ्जातालस्यमात्रेण तत्तत्पठनादावधिकारिणो ऽप्यप्रवर्तमानान् धीमतश्च समनुग्रहीतुकामः (श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धर श्री ६ भट्टनारायणात्मजभट्टशङ्करः) धर्ममीमांसाशास्त्रमहोदधेः सारसुधां समुद्धृत्य पाययन्निव धर्ममीमांसानिबन्धानां शिरोभूषणं मीमांसाबालप्रकाशसमाख्यं निबन्धमुपनिबबन्ध। अयं महाराष्ट्रब्राह्मणः, अस्य च वंशवृक्षः विश्वनाथनारायणमण्डलीकमुद्रापितानेकटीकासनाथमनुस्मृतौ द्रष्टव्यः। तस्य चास्य निबन्धस्य शोधनार्थञ्जीर्णमेकं पुस्तकं महामहोपाध्यायगुरुवर श्री ६ गङ्गाधरशास्त्रिचरणसकाशादुपलभ्य। अपरं च नातिशुद्धम् दुर्लभसंस्कृतपुस्तकसङ्ग्रहशीलस्य श्रीगोविन्ददास—गुप्तमहाशयस्य पुस्तकालयादुपलभ्य एतत्पुस्तकद्वयद्वारा यथामति त्रिचतुरवारं संशोध्य एतत्पुस्तकद्वारा प्राचीनप्रौढनिबन्धदर्शनरसिकजनान् प्रमोदयितुकामस्य श्रीहरिदासगुप्तमहाशयस्यानुमत्या तदीयविद्याविलासनाम्नि यन्त्रालये संमुद्र्य प्रकाशितवानस्मि

अत्र मधुलिह इव साररसं स्वीकृत्य दृष्टिदोषात् मतिमान्द्यात् सीसकाक्षरयोजनप्रमादाद्वा जातस्खलनं समुपेक्ष्य सफलयन्तु मत्परिश्रमम् गुणैकपक्षपातिनः प्राज्ञवरा इति भूयोभूयः प्रार्थ्यते प्रसीदतु चानेन व्यापारेण सर्वान्तर्यामी नारायण इति शुभम् ।

अडकरोपनामको मुकुन्दशास्त्री ।



# बालप्रकाशस्य विषयसूची

विषयाः

ॐ श्रीगणेशाय नमः ।

# मीमांसाबालप्रकाशः ।

अर्थं द्वादशलक्षण्याः संक्षिपत्यत्र शङ्करः ॥
जिज्ञासुभ्योऽतिबालेभ्योऽतिस्फुटं गहनं ततः ॥१॥

लक्षणशब्दो मीमांसाशास्त्रे प्रमाणाध्याययोर्दृष्टः "चोदनालक्षणोऽर्थो धर्मः" "अथातः शेषलक्षणमिति"। तेन द्वादशलक्षणी द्वादशाध्यायी। तस्या धर्मोऽर्थो विषयः। तदुक्तम्।

अथातो धर्मजिज्ञासासूत्रमाद्यमिदं कृतम्।
धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ॥

इति। धर्मशब्देन च गौतमीयादिवन्नापूर्वमुच्यते किं तु तत्साधनं यागाद्येव। तदुक्तं श्रेयस्करभाष्ये, धर्मश्च "फलसम्बद्धं कर्म यागादि वर्ण्यते" इति। अपवादतया चात्राधर्मोऽपि जिज्ञास्यो द्वितीयलक्षणे(१)भेदापवादत्वेनाभेदवादिति न शास्त्रस्य विषयनानात्वं युक्तम्। इह च धर्मजिज्ञासापदं न विचारं लक्षयति। औपनिषदानां तु ब्रह्मजिज्ञासापदं तल्लक्षकमिति(२) वैषम्यम्। धर्मं जिज्ञासितुमिच्छेत्। तस्माद्धर्मो जिज्ञासितव्य इत्यादिभाष्ये, सम्बन्धं क्रिययोर्हि च सूते शास्त्राद्य ते पृथगित्यादिवार्तिके, तद्व्याख्यार्थे च न्यायरत्नाकरे अध्ययनजिज्ञासाक्रिययोः सम्बन्धमथशब्दो ब्रूते ते च शास्त्रादत्यन्तभिन्ने। न हि जिज्ञासाशब्दो मीमांसापर्याय इति श्रौतार्थपरत्वस्यैवोक्तेः। तथा आनन्तर्यवचोव्यक्तिराश्रितैवात्र गम्यतइति वार्त्तिके ऽथशब्द आनन्तर्यार्थो नाधिकारार्थ इत्युक्तम्। जिज्ञासापदस्य च विचारलक्षकत्वे ऽधिकारार्थताप्यविरुद्धेति। तृतीये ऽप्युक्तम्। प्रथमाध्यायप्रथमसूत्रे हि धर्मज्ञानेच्छाया वक्ष्यमाणाया व्याख्येयत्वेनानुपन्यासादनन्तरानुष्ठेयमात्रमेवोपदेष्टव्यमित्यधिकारार्थत्वं नोक्तम्। इह त्वध्यायरूपं वा तदर्थात्मकमेव वा व्याख्येयमधिकर्तुं हि वक्ष्यते

(१) भेदापवादेऽस्यर्थः।
(२) विचारलक्षकमित्यर्थः।

थेपलक्षणमिति ग्रन्थयोराद्ये प्रथमसूत्रे विचारानुपादानादधिकारार्थताऽथशब्दस्य नास्तीत्युक्तम् ।

द्वितीयग्रन्थे तु तृतीयाध्यायाद्यसूत्रे विचारोपादानादधिकारार्थतेति । तस्मात्सर्वस्य धर्मो विषयः । द्वादशानां त्वध्यायानां द्वादशविषयाः । प्रमाणभेदशेषत्वप्रयुक्तिक्रमाधिकारसामान्यातिदेशविशेषातिदेशोहबाधतन्त्रप्रसङ्गाख्याः । समस्तस्य चार्थस्य द्वादशविधस्य वक्ष्यमाणस्य प्रतिज्ञापिण्डोऽयं धर्मजिज्ञासेतीति भाष्यकारो भावाभावविषयाष्टविधजिज्ञासापरतया धर्मजिज्ञासापदं व्याकुर्वन्संक्षिप्य दर्शयति को धर्मः, कथं लक्षणकः, कान्यस्य साधनानि, कानि साधनाभासानि, किं परश्चेति, तत्राष्टविधत्वं तावदाभासजिज्ञासायाः साधनद्वय धर्मस्वरूपतत्प्रमाणताफलेष्वपि योजनेनाभिप्रेतम् । तत्रापि लक्षणशब्दः प्रमाणवचन उपदेशमिवातिदेशं तत्प्रमाणकौ चोहबाधावनिर्दिष्टपदार्थधर्मप्रतियोगिभूतौ संगृह्णाति । लक्षणशब्देनैव चोपदेशातिदेशौ यदतोपदिष्टातिदिष्टपदार्थधर्मभूतौ तन्त्रप्रसङ्गौ संगृहीतौ । साधनशब्देन च साधनाख्याङ्गधर्मभूतौ प्रयुक्तिक्रमौ संगृहीतौ । अत्रैव च सूत्रे धर्ममीमांसाऽऽरभ्या न वेति चिन्त्यते । तदर्थं चाथशब्देन योग्यतयाऽध्ययनानन्तर्यमुक्त्वा धर्मजिज्ञासा कर्तव्येत्युपदेशात्मकजैमिनिसूत्ररूपस्मृत्याऽधीत्य स्नायादिति स्मृतिर्बाध्या न वेति । तदर्थं चाध्ययनविधिः स्वर्गोद्दृष्टार्थं उत फलवदर्थावबोधरूपदृष्टार्थ इति । तत्र स स्वर्गः स्यादिति विश्वजिन्न्यायेन पूर्वपक्षयित्वा दृष्टे सम्भवत्यदृष्टकल्पनानवकाशात्सिद्धान्तितम् ।

ततश्चाध्ययनविधिमूलया जैमिनिसूत्रस्मृत्याऽधीत्य स्नायादिति स्मृतेर्बाधाद्यथावदर्थज्ञानार्थं न्यायनिरूपणात्मिका मीमांसाऽऽरभ्या । तत्राध्ययनविधौ स्वाध्यायमिति द्वितीयया गुणत्वमेव लक्ष्यते ऽन्यथा स्वाध्याये वाजपेयवाक्यवद्य यागे गुणविधौ वैरूप्यापत्तेरिति भवदेवः । तत्र ।

श्रूयमाणस्य वाक्यस्य न्यूनाधिक्यविकल्पने ।
लक्षणावाक्यभेदादिदोषो नानुमिते त्वसौ ॥

इति वार्त्तिकोक्तन्यायेन परिहारात् । चित्राधिकरणे पञ्चदशान्याज्यानीत्यत्र पूर्वपक्षे प्रकरणेन स्तोत्रविनियोगे ऽपि नास्ति मत्वर्थलक्षणेति प्रतिपादनार्थं हीदं वार्त्तिकम् ।

तत्र राणकग्रन्थः विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे लक्षणावाक्यभेदौ आधिक्याभ्युपगमे त्वादिशब्दोक्तमानर्थक्यम् १

यद्वा न्यूनस्याधिकार्थविषयत्वकल्पने लक्षणावाक्यभेदगौणत्वाध्याहारदोषा इत्यर्थः २

यद्वा न्यूनत्वे लक्षणावाक्यभेदौ आधिक्ये चानर्थक्यम् अन्यथात्वकल्पने विपरिणामव्यवहितकल्पनाव्यवधारणकल्पनादोषा इति ३

तत्रोदाहरणानि । तत्र विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे लक्षणेत्यत्रोदाहरणम् "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते"ति । अत्र हि विवक्षितो ऽर्थ उत्तरकालविधिरिष्टबृहस्पतिसवान्तराङ्गकत्व वाजपेयस्य तदपेक्षया न्यूनो ऽर्थः प्रसिद्धस्यैव बृहस्पतिसवस्य वाजपेयोत्तरत्वं तदभ्युपगमे वाजपेयश्रुतौ काललक्षणेति । विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे वाक्यभेद इत्यत्रोदाहरणं "यदाग्नेयो ऽष्टाकपालो ऽमावास्यायां पौर्णमास्यां चाच्युतो भवती"ति । अत्र हि विवक्षितो ऽर्थो द्रव्यदेवताकालत्रयविशिष्टयागविधिस्तदपेक्षया न्यूनो ऽर्थः पूर्णमास्यधिकरणे द्वितीयपूर्वपक्षे शङ्कितो विहिताश्यविहितयोर्द्रव्यदेवतमेव विधीयते न यागविधिरिति तदभ्युपगमे वाक्यभेद इति ।

विवक्षितार्थापेक्षया . आधिक्याभ्युपगमे स्यादित्युक्तमानर्थक्यमित्यत्रोदाहरणम्, "आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोती"ति । अत्र हि "सांग्रहण्या ग्रामकामो यजेते"ति प्रधानवाक्यगतग्रामकामपदानुषङ्गेण विवक्षितार्थापेक्षया ऽऽमनहोमविधेराधिक्याभ्युपगमे ग्रामकामपदानुषङ्गानर्थक्यम् । अत्र व्याख्यान मत्वर्थलक्षणा न सङ्गृहीता स्यादित्यपरितुष्याह "यद्वेति" । न्यूनस्याधिकार्थविषयत्वकल्पने लक्षणेत्यत्रोदाहरणम् सोमेन यजेतेत्यादिमत्वर्थलक्षणा । न्यूनस्याधिकार्थविषयत्वकल्पने वाक्यभेददोष इत्यत्रोदाहरणं "सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकाम" इति । अत्र हि स्वर्गकामपदाध्याहारं विश्वजिन्न्याये चतुर्थे शङ्कितं निरासितुमुक्तं ब्रह्मवर्चसस्यान्वाचयत्वे प्रमाणाभावात् ब्रह्मवर्चसमात्रं फलत्वेन न्यूनस्य स्वर्गस्य कल्पनया ऽधिकार्थत्वं फलद्वयसमावेशाद्वाक्यभेदापत्तिरिति । न्यूनस्याधिकार्थविषयत्वकल्पने गौणत्वदोष इत्यत्रोदाहरणम् । "स्वृष्टीरुपदधाति" "प्राणभृत उपदधाती"ति । अत्र हि सृष्टिशब्देन सृष्टिशब्दवन्त एव मन्त्रा उच्यन्त इति न्यूनस्य गौण्या सृष्टिशब्दवलामपि मन्त्राणां ग्रहणेनाधिकार्थत्वे गौणत्वमेव दोषः । स त्वगत्या व्रीहियवविकल्पवदङ्गीक्रियते । न्यूनस्याधिकार्थविषयत्वे ऽध्याहारदोष इत्यत्रोदाहरणम् "विश्वजिता यजेते"ति । अयमप्यगत्या ऽङ्गीक्रियते । तृतीयव्या-

स्थाने न्यूनत्वे लक्षणावाक्यभेदौ आधिक्ये चानर्थक्यमित्यर्थः । अधिकस्य सतो न्यूनत्वमिति । तत्राधिकस्य न्यूनत्वे लक्षणे यथोदाहरणम् "चतुरवत्तं जुहोती"ति । अत्र हि जुहोतेर्द्रव्योद्देशत्यागविशिष्टप्रक्षेपवचनस्यानयादिवाचकत्वेनैवेतरयोरंशयोः प्राप्तेः प्रक्षेपमात्रपरत्वेन न्यूनत्वे लक्षणा । अधिकस्य सतो न्यूनत्वे वाक्यभेद इत्यत्रोदाहरणम् "वषट्कर्तुः प्रथमभक्ष" इति । अत्र हि प्राथम्यमात्रविधौ भक्षस्यानुवादात् प्राथम्यस्य च विधानादेकपदे चोभयाभ्युपगमाद्वाक्यभेदः । अन्यथात्वकल्पने विपरिणाम इत्यत्रोदाहरणमाप्रेयवाक्यम् । अन्यथात्वकल्पने व्यवहितकल्पनेत्यत्रोदाहरणम् । प्रतितिष्ठन्तीत्यत्र प्रतितिष्ठन्ति रात्रीरुपेयुरित्यन्यथात्वे कल्पिते ये इत्यस्य रात्रिसमभिव्याहृतस्य ये प्रतितिष्ठन्तीति व्यवहितकल्पना । अन्यथात्वकल्पने व्यवधारणकल्पनेत्यत्रोदाहरणम् । "यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेदि"ति । इत्युपोद्घातः ।

एवं द्वादशसु लक्षणार्थेषु जिज्ञास्येषु स्वरूपानन्तरमपि जिज्ञास्यत्वोक्तप्रमाणमानाधीना मेयसिद्धिरिति प्रथमतोऽध्यायनादौ निरूप्यते ।

तच्चानेकविधं विध्यर्थवादमन्त्रनामधेयस्मृत्याचाररूपम् । तत्रार्थवादं पृथक्कृत्य विध्युद्देशापरनाम्नो विधेः फलांशो विध्युद्देश इति भाष्यकारलक्षितस्य धर्मे प्रामाण्यमाद्यपादेनोच्यते । तत्प्रतिज्ञार्थं चोदनासूत्रम् । तदुक्तम् । "चोदना चोपदेशश्च विधिश्चैकार्थवाचिन" इति । तच्च धर्मलक्षणद्वारा सामान्यतो धर्मस्वरूपोक्त्यर्थमपि । तच्चेदमर्थद्वयं वचनव्यक्तिद्वयेनैकेनापि सूत्रेणोच्यते । तत्रान्यतरा शाब्दी अन्यतराऽऽर्थी । तत्र यो धर्म इत्युद्दिश्य स चोदनालक्षणश्चोदनाप्रमाणक इति प्रमाणवचनव्यक्तिः ।

यश्चोदनालक्षण इत्युद्दिश्य स धर्म इति स्वरूपवचनव्यक्तिः ।

तत्र चोदनाप्रमाणकत्वस्य धर्मलक्षणत्वाभिप्रेत्ये ऽपि च प्रवर्त्तमानाविषयत्वेनैव विधये निवर्त्तनाविषयत्वेन चोदनालक्षणत्वादतिव्याप्तिं वारयितुमर्थ इत्यनर्थसाधनत्वाभावो ऽपि विशेषणम् । श्येनयागव्यावृत्त्यर्थं तदिति भाष्यं । तस्य हि फलं हिंसेति । तत्रोत्तरस्यां तावतैव पर्यवसानम् । आद्यायां तु द्वौ नियमौ विवक्षितौ । यो धर्मस्तत्र चोदनैव प्रमाणमित्येकः प्रत्यक्षानुमानबुद्धवाक्यादिव्यावृत्त्यर्थं । यो धर्मस्त-

च चोदनाप्रमाणमेवेत्यपरो नास्तिकाभिमतवेदाप्रामाण्यनिरासार्थः
* इति चोदनासूत्रार्थः *

तत्र प्रथमनियमफलमुपपादयितुं प्रत्यक्षसूत्रम् । "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वादि"ति । तत्र श्रुत्या प्रत्यक्षमात्रस्याप्रामाण्यमुक्तमर्थादितरेषाम् । तदुक्तं भाष्ये । प्रत्यक्षपूर्वकत्वाच्चानुमानोपमानार्थापत्तीनामप्यकारणत्वमिति । तत एव च बुद्धादिपुरुषवचननिराक्रियापि सिद्धेति च । अत्र सर्वज्ञनिरासः प्रत्यक्षनिरासायैवेति * इति प्रत्यक्षसूत्रं समाप्तम् *

द्वितीयनियमसाधनार्थं त्वौत्पत्तिकसूत्रम् । "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशो ऽव्यतिरेकश्चार्थे ऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वादि"ति । अत्र यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्यय इति भाष्योक्तस्य कारणदोषज्ञानस्याप्रामाण्यहेतोरभावः पश्चपदेनाद्यान्त्ययोगेनोक्तः । भाष्योक्तद्वितीयाप्रामाण्यहेतोरभावः अव्यतिरेकश्चेत्यनेन । तदुक्तम् । औत्पत्तिकागिरा दोषः कारणस्य निवार्यते । अबाधो ऽव्यतिरेकेणेति । तत्र शब्द औत्पत्तिको नित्यः । अर्थश्च जात्यात्मा सम्बन्धश्चासङ्केतरूपः सामर्थ्यात्मेत्याद्यवयवार्थः । उपदेशो विधिस्तस्य धर्मस्य ज्ञायते ऽनेनेति ज्ञानम् । ज्ञापक इत्यनेनाज्ञापकत्वरूपस्याप्रामाण्यस्याभाव उक्तः । तदुक्तम् ।

अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैरिति । तथा ।

विध्यनाश्रिते साध्यः पुरुषार्थो न लभ्यते ।
श्रुतस्वर्गादियाथेन धात्वर्थः साध्यतां व्रजेत् ॥
विधौ तु तमतिक्रम्य स्वर्गादिः साध्यतेष्यते ।
तत्साधनस्य धर्मत्वमेवं सति च लभ्यते ॥

इति । अर्थे ऽनुपलब्धे इत्यनेन तु गृहीतग्राहकतया स्मृतेरिवाप्रामाण्यं निरस्तम् । अनपेक्षत्वादित्यनेन च प्रामाण्यस्य स्वतस्त्वं(१)

---

(१) प्रामाण्यस्य परतस्त्वं तु ।

परापेक्ष प्रमाणत्वं नात्मानं लभते क्वचित् ।

मूलोच्छेदकरं पक्षं को हि नामाध्यवस्यति ॥ यदि हि सर्वमेव ज्ञानं स्वविषयप्रामाण्यावधारणे स्वयमसमर्थं विज्ञानान्तरमपेक्षेत तत्र कारणगुणसंवादार्थक्रियाज्ञानान्यपि स्वविषयभूतगुणाद्यवधारणे परमपेक्षेरन् पक्षमपि सर्वेषि न कश्चिदर्थो ज्ञानेनाध्यवसीयेतेति प्रामाण्यमौत्पत्तिकादित्यादिना निराकृतम् भा० ।

कारणगुणसंवादार्थक्रियाज्ञानानर्थान्तरत्वरूपमुक्तम् । प्रामाण्यं स्वार्थतथात्वरूपविषयधर्मः । यन्निमित्तौ ज्ञाने प्रमाणबुद्धिव्यपदेशौ भवतः । तच्च स्वतो गृह्यते ज्ञानेनैव विषयीक्रियते घटादीव अप्रामाण्यं स्वार्थान्यथात्वं बाधकज्ञानकारणदोषज्ञानविसंवादज्ञानैर्गृह्यत इति परतः । तथा तेनैव(१)सूत्रावयवेन लौकिकवाक्ये वक्तृज्ञानहेतुनिश्चयापेक्षत्वं प्रामाण्यप्रतिष्ठाया वेदे तु वक्तुरभावेन तदनपेक्षत्वादेव न तदभावादयथार्थतेत्युक्तम् । तदेतदुभयमनपेक्षत्वादिति सूत्रावयवोक्तत्वात्तद्व्याख्यानावसरे वाच्यमप्यनागतावेक्षणेन वक्ष्यमाणतयैव चोदनासूत्र एव वार्त्तिककृतोक्तम् ।

औत्पत्तिकसूत्रस्य च भाष्ये निरालम्बनवादनिरासेन बाह्यार्थसद्भाव उक्तः । ततश्च चोदनायास्तदर्थस्य तत्फलस्य स्वर्गादेश्च सत्त्वे धर्मप्रामाण्यं युक्तं नान्यथेति । एवं महायानिकसम्मतशून्यवाददूषणमपि । इयांस्तु तन्मतयोर्भेदः निरालम्बनवादे बाह्यो विषयो ऽपि नास्ति । नीलाद्याकारा अपि न सन्ति संविद्गता इति । अत एव तन्निरासावसरे तन्मततात्पर्यमनूदितमाचार्यैः ।

स्वच्छस्य ज्ञानरूपस्य न हि भेदः स्वतो ऽस्ति तत इति ॥

शून्यवादमते तु संविद्गता नीलाद्याकारास्सन्तीति । एवं सिद्धे बाह्ये ऽर्थे यन्माध्यमिकैरुक्तमर्थाभावादेव ज्ञानमपि नास्तीति तदपि हेतुनिरासादेव निरस्तम् ।

एवं स्फोटनिरासो ऽप्यत्र सूत्रे चोदनाया धर्मप्रामाण्यसिद्ध्यर्थमेव । ऊहादिमान्हि धर्मश्चोदनाप्रमेयः । ऊहश्च पदादिधर्मः पदाद्यसत्त्वे कथं प्रमीयेत । एवं पदार्थस्वपह्नवे ऽपि तदाश्रितमूहतन्त्रप्रसङ्गादि । तदुक्तं स्फोटनिरासस्य नैष्फल्यशङ्कापूर्वमाचार्यैः ।

वर्णातिरेकः प्रतिषिध्यमानः ।
पदेषु मन्दं फलमादधाति ॥
कार्याणि वाक्यावयवाश्रयाणि ।
सत्यानि कर्तुं कृत एष यत्नः ॥ इति ।

अनेनैव यथा विधान्तरेणापि धर्मप्रमितिसिद्धिरस्य फलं श्रेयःसाधनधर्मप्रमितिर्हि स्वर्गादिश्रेयस्तत्साधनयागादिपदपदार्थयोर्मृषात्वेन स्यादिति ।

अस्मिन्नेव च सूत्रे ऽनित्यव्यक्तिशब्दार्थत्वे वेदाप्रामाण्यापत्ते-

(१) अनेनेति २ पु० पा० ।

तत्प्रामाण्यप्रतिष्ठापयिषया नित्याकृतिः पदार्थभूता स्थाप्यते आकृतिवादेन । आकृतिश्च मीमांसकानां जातिः ।

जातिमेवाकृतिं प्राहुर्व्यक्तिराश्रीयते ययेति वार्तिकात् । तस्याश्च सौगताभिमतावस्तुरूपतुच्छान्यापोहरूपत्वे पुनर्वेदाप्रामाण्यापत्तेर्भावरूपतोपपादिता अपोहवादेन । ततो वनवादे वनादिवत्परमाण्वादिपुञ्जात्मक एवावयवी नार्थान्तरमित्याशङ्क्य । तस्याप्रत्यक्षत्वेन व्यवहारानुपयोगित्वात्सङ्गतिग्रहाद्यसम्भवेन तन्मूलकवेदाप्रामाण्यावहेति तत्प्रामाण्यसिद्ध्यर्थमेव वनादिदृष्टान्तवैषम्योपपादनेन निरस्ता । ततः पदपदार्थसम्बन्धस्येश्वरकृतसङ्केतात्मकत्वे ऽपि वेदाप्रामाण्यापत्तेस्तत्प्रामाण्यार्थमीश्वरनिरासः सम्बन्धाक्षेपपरिहारेण । ततो यः प्रत्यक्षसूत्रे ऽनिमित्तं विद्यमानोपलम्भनत्वादित्यवयवेनानन्तरफलानुपलब्ध्या चित्रादिचोदनाक्षेपः कृतः स परिहृतः । ततो यस्तेनैव प्रत्यक्षसूत्रावयवेन "स एष यज्ञायुधी आत्मा अञ्जसा स्वर्गं लोकं याति" इत्यादिचोदनानां यज्ञायुधवतः शरीरस्य स्वर्गगमनासम्भवरूपप्रत्यक्षविरोधात्तत्सामान्याच्चाग्निहोत्रादिचोदनानां प्रामाण्याक्षेपः कृतस्तत्परिहार आत्मसाधनेनात्मवादे कृतः । तदेतदुभयमप्यव्यतिरेकश्चेत्यवयवेनैवोक्तमिति ।

तदेवं षोडशाप्यर्थाः सूत्रऔत्पत्तिकादिके ।
प्रामाण्यस्य प्रसिद्ध्यर्थं चोदनाया निरूपिताः ॥

इत्यौत्पत्तिकसूत्रं समाप्तम् ।

कर्मैके तत्र दर्शनादित्यधिकरणे च वेदप्रामाण्यसिद्ध्यर्थमौत्पत्तिकसूत्रस्थौत्पत्तिकत्वरूपनित्यत्वस्य शब्दार्थरूपोभयविशेषणविशिष्टे सम्बन्धे ऽन्वयाद्विशेषणीभूतशब्दनित्यत्वमप्यर्थात्प्रतिज्ञातमेवाक्षिप्य समाधीयते ।

तदिदमष्टादशसूत्रकं शब्दाधिकरणं नाम । ततस्तद्भूताधिकरणेन सूत्रत्रयघटितेन करणासम्भवाद्धर्मं प्रमित्यशक्तिं चोदनानामाशङ्क्य पदार्थकरणत्वप्रतिपादनेन चोदनाप्रामाण्यमेवोपपादितम् । ततो वेदांश्चैके सन्निकर्षं पुरुषाख्या इति षट्सूत्रेण वेदाधिकरणेन रघुवंशादिवत् पौरुषेयत्वं चोदनानामाशङ्क्य निरस्तम् । तदेवं कृत्स्नेनाध्यायाद्यपादेन चोदनाप्रामाण्यमेव द्वितीयसूत्रप्रतिज्ञातं साधितम् । तदुक्तम् ।

इति प्रमाणत्वमिदं प्रसिद्धं युक्त्येह धर्मं प्रति चोदनायाः ।
अतः परं तु प्रविभज्य वेदं वेधा ततो वक्ष्यति तस्य यो ऽर्थः ।

इति ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरंधरश्रीभट्टनारायणात्मजभट्टशङ्करकृतमीमांसासारसङ्ग्रहे बालप्रकाशे प्रथमपादार्थानुक्रमणसङ्क्षेपः।

---

अत परमधिकरणरचनाभाष्यवार्त्तिकशास्त्रदीपिकादिग्रन्थेषु स्फुटैव। क्व चित्तु मीमांसकसिद्धान्ताः शास्त्रे तत्र तत्र विप्रकीर्णा नातिस्फुटाश्च बालव्युत्पत्त्यर्थमुद्धृत्योच्यन्ते। तत्र प्रमाणं तावन्मीमांसकानां विभक्तविभागेनानेकविधम्।

तथा हि। प्रत्यक्षमनुमानं शब्द उपमानमर्थापत्तिरभाव इति षट्। तत्र प्रत्यक्षं षड्विधम्। चाक्षुषादिभेदात्। अनुमानं द्विविधम्। सामान्यतोदृष्टं विशेषतोदृष्टं च। द्विविधमपि पुनर्द्विविधं स्वार्थं परार्थं च। केवलान्वयिकेवलव्यतिरेकिभेदौ तु नेष्टौ।

लिङ्गिज्ञानं च तद्धि स्यात्त्रिरूपाल्लिङ्गतो न तत्॥

इत्यनुमानं त्रैरूप्यवर्जितस्य लिङ्गत्वासम्भवोक्तेः। परार्थानुमानवाक्यस्य च तार्किकाणामिव न पञ्चावयवाः। किं तु त्रय एव। तदुक्तम्।

तत्तु पञ्चतयं केचिद् द्वयमन्ये वयं त्रयम्।
उदाहरणपर्यन्तं यद्वोदाहरणादिकम्॥

इति प्रत्यक्षानुमानोपमानाभावाख्यानि चत्वारि लौकिकान्येव। अर्थापत्तिर्द्विधा। दृष्टार्थापत्तिः श्रुतार्थापत्तिश्च। उत्तरापि द्विविधा। लौकिकी वैदिकी च। शब्दोऽपि द्विविधो लौकिको वैदिकश्च। वैदिकोऽपि द्विविधः। उपदेशातिदेशभेदात्। उपदेशोऽपि द्विविधः। विधिर्निषेधश्च। विधिनिषेधभेदान्वक्ष्याम॥ २०॥

पुनरुपदेशोऽनेकविधः। शब्दान्तरमभ्यासः सङ्ख्या संज्ञा गुणः प्रकरणान्तरं चेति द्वैतीयकानि कर्मभेदकानि षट्।

श्रुतिर्लिङ्गं वाक्यं प्रकरणं क्रमः समाख्या चेति तार्तीयानि विनियोजकानि षट्।

श्रुतिरर्थः पाठक्रमः स्थानक्रमो मुख्यक्रमः प्रवृत्तिक्रमश्चेति पाञ्चमिकानि क्रमप्रमाणानि षट्।

प्रत्यक्षविधिरभावविधिर्विकारः स्वशब्दो निषेधानुवादश्चेति नावमिकानि कार्यापत्तिप्रमाणानि पञ्चेति। अतिदेशास्तु सप्तविधो वक्ष्यते॥ ३०॥

श्रुतिरपि चतुर्विधा । विधिः प्रतिषेधोऽभिधात्री विनियोक्त्री च ।

लिङ्गं द्विविधम् । शब्दसामर्थ्यमर्थसामर्थ्यं च श-ब्दसामर्थ्यमपि द्विविधम् । मन्त्रस्य कर्मसमवेतार्थप्रकाशनसामर्थ्यमेकवाक्यतोपगमनसामर्थ्यं च तत्रोत्तरं लिङ्गवाक्यविरोधाधिकरणे भाष्यकृता व्यवहृतं पूर्वलिङ्गबाध्यता चास्योक्ता(१) । ननु स्योनं त इत्यस्य शब्दस्य यथैवोपस्तरणाभिधानसामर्थ्यमेवमुत्तरेणैकवाक्यतामुपगन्तु सामर्थ्यम् । सामर्थ्यं च लिङ्गमित्युच्यते । तस्माद्विद्यमाने वाक्ये लिङ्गमेव बाधितं भवतीति सत्यमेवम् । एतदपि लिङ्गम् । लिङ्गमपि स्वयमेतदेव लक्षणकं विप्रकृष्टार्थमेव भवति । लिङ्गादेकवाक्यता । तस्मादभिधानसामर्थ्यम् । ततः श्रुत्यर्थ इति विप्रकृष्टार्थतेति ग्रन्थेन ।

वाक्यमपि द्विविधम् । महावाक्यमवान्तरवाक्यं चेति । तदुक्तम् ।

स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया ।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥

इति । तत्राद्यं प्रयोगविधिरूपं नित्यानुमेयमेव कल्पिताङ्गवाक्यैकवाक्यताको हि प्रधानविधिरेव प्रयोगविधिरिति । द्वितीयं " समिधो यजति " " दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत "इत्यादि । अवान्तरवाक्यमपि द्विविधं विधिर्मन्त्रश्च । अर्थवादस्तु तात्पर्याभावे ऽपि स्तुतिलक्षकवाक्यार्थप्रतिपादकत्वमात्रेण पृथग्व्यपदिश्यते । प्रकरणमपि द्विविधम् । महाप्रकरणमवान्तरप्रकरणं च । तत्राद्यं प्रधानस्य । द्वितीयं प्रधानस्याङ्गस्य वा । तथाद्यं प्रकृतेर्विकृतेश्च । एवं द्वितीयमपि । तत्र प्रकृतेरसन्दंशोद्भूतिकम् । यथा दर्शपूर्णमासादेः । विकृतेर्महाप्रकरणं तु सन्दंशेनापि भवत्यसन्दंशेनापि । तत्राद्यं यथा, राजसूये राजसूयाय क्षेनामुत्पुनाति राजसूयेनेजानः सर्वमायुरेतीति सन्दंशेनोद्भूतं क्रमप्रकरणबलाबलाधिकरणे शास्त्रदीपिकायामुक्तम् । असन्दशो ऽपि विकृतेर्महाप्रकरणं यथा । यत्र विकृतौ प्राकृतक्रियानुवादेन किं चिद्विहितं तत्तत्प्रकरणेन गृह्यते । यथा प्रयाजे प्रयाजे कृष्णलं जुहोतीति । अहीनात्मकद्वादशाहे च द्वादशदीक्षा द्वादशोपसद इति द्वादशत्वं च । तदुक्तं श्रुतिलिङ्गाद्यधिकरणे ।

इतिकर्तव्यतांशस्थो येनोद्दिश्योपसत्क्रियाम् ।
द्वादशत्वविधिस्तेन कथंभावेन गृह्यते इति ॥

(१) तस्योक्तेति २ पु० पा० ।

अत्र च क्रियामुद्दिश्येत्युक्तेर्विकृतौ द्रव्योद्देशेन आत्यादिविधौ औदुम्बरो यूपो भवतीत्यादौ न प्रकरणग्राह्यतेत्युक्तम् । अतएवोक्तं चित्राधिकरणे ऽपि ।

भावान्तरक्रियायोगादृते वाक्योपकल्पितात् ।
गुणाद्द्रव्ये कथम्भावैर्गृह्णन्ति प्रकृताः क्रियाः ॥

इति । न चौदुम्बरवाक्ये यूपलक्षितनियोजनसम्बन्धो वाक्यीयइति वाच्यम् । आनर्थक्यपरिहारस्य सन्निधिनैव सिद्धेः । यूपपरिच्छेदिकायाऔदुम्बरजातेरार्थापत्तिकनियोजनान्वयात् । अन्यथावघातादेरपि व्रीहिलक्षितयागान्वयस्य वाक्यीयत्वापत्तेः । यत्र तु प्रमाणान्तराक्रियान्वयालाभस्तत्रैव लक्षितक्रियान्वयं वाक्यविधिरायास्यते वर्णमय्यादिवाक्ये इति ।

एवं च वक्ष्यमाणेषु वार्त्तिकादिग्रन्थेषु यत्प्राकृताङ्गानुवादेन विधीयतइत्यादिषु अङ्गशब्दः क्रियापर एवेति ध्येयमिति ।

सन्दंशेन च विकृतेर्महाप्रकरणं राजसूय इव न केवलं वाचनिकं विकृत्यङ्गं सन्दंशेनैव भवति । किं तु सन्दंशस्यानेकविधत्वादनेकविधम् । तथा हि ।

प्राकृताङ्गानुवादेन विहिताभ्यां सन्दष्टं पदसंयुक्तमपि विकृतौ श्रुतं तदपि प्रकरणेन गृह्यते । प्राकृताङ्गानुवादेन विहितयोः पूर्वपश्चात्तनयोः प्रकरणग्रहयोग्यत्वे मध्ये च तद्विच्छेदकहेत्वभावात् । तथा विकृतेः पूर्वमसंयुक्तं किंचिद्विहितं ततः पूर्वं तु प्राकृताङ्गानुवादेन यद्विहितं ततो ऽसंयुक्तं यत्तद्विकृतिप्रकरणेन गृह्यते । तथा विकृतेरनन्तरमसंयुक्तं किंचिद्विधाय प्राकृताङ्गानुवादेन कस्मिंश्चिद्विहिते तत्पूर्वमसंयुक्तं प्रकरणेन गृह्यते ।

तदिदं भेदत्रयं बलाबलाधिकरणवार्त्तिके उक्तम् ।

यस्यां तु विकृतौ प्राकृतं किंचिदङ्गं सङ्कीर्त्य तस्य पुरस्तात्परस्ताद्वा वैकृतमङ्गमाम्नायते तत्र कथम्भावगृहीताङ्गमध्यवर्तित्वात्प्रकरणपाठो विज्ञास्यतइति । तदेतद्वार्त्तिकं सोमेश्वरेणानन्तरभेदत्रयपरत्वेन योजितम् ।

तथा विकृतेः पूर्वमसंयुक्तं किंचिद्विहितं ततः पूर्वं विकृत्यनुवादेन यदि विहितं ततो संयुक्तं यत् तद्विकृतिप्रकरणेन गृह्यते । तथा विकृतेरनन्तरमसंयुक्तं किंचिद्विधाय विकृत्यनुवादेन कस्मिंश्चिद्विहिते तत्पूर्वमसंयुक्तं प्रकरणेन गृह्यते ।

तदिदं भेदत्रयं विकृत्यनुवादेन विहितस्य प्रकरणग्राह्यतोस्यैवार्थादुक्तं भवति । अस्य च भेदत्रयस्य पूर्वोक्तस्य च भेदत्रयस्यो-

दाहरणानि मृग्याणि ।

तथा सांग्रहणीं विधाय । तदङ्गप्राकृतपरिधिपरिधाने ध्रुवोऽसीत्यादींश्च त्रीन्मन्त्रान् वैकृतान्विधाय "आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति" इत्यामनहोमा असंयुक्ता विहिताः । ततस्तेषां यत्प्रयाजानां पुरस्ताज्जुहुयात् बहिरात्मानं सजातानां दध्यात् यदनुयाजानां परस्तात्स्वर्गं लोकमभ्यारोहेत् मध्ये जुहोति मध्यत एव सजातानामात्मानं धत्ते इति प्रयाजानुयाजैस्सह क्रमो विहितः । तेन प्राकृताङ्गसम्बन्धित्वेन विधानात्सांग्रहणीप्रकरणानुवृत्तेरामनहोमाः प्रकरणेन गृह्यन्ते ।

तदेतच्चतुर्थे तन्त्रसारे फलयज्ञोक्तहेतुत्वादितरस्य प्रधानं स्यादित्यधिकरणं उक्तं

माहेन्द्रस्तोत्रं प्रत्यभिषिच्यत इत्यत्र तु अभिषेकादेरभिषेचनीयप्राकृताङ्गसम्बन्धित्वेन विधाने ऽपि न तेन प्रकरणमनुवर्त्य तन्मध्यविहितमभिषेकादि गृह्यत इति सम्भवति तन्मध्ये ऽभिषेकादिविध्यभावादिति तत्पूर्वाधिकरणे ऽभिहितमिति । अत एव मिश्रा अपि न्यायरत्नमालायामामनहोमानां प्रकरणग्राह्यतामाहुः । विकृतिष्वपि यत्प्राकृताङ्गमध्ये पठितं यथामनहोमादि तस्य प्रकरणेन ग्रहणमिति ग्रन्थेन ।

भट्टसोमेश्वरस्तु बलाबलाधिकरणे । क्रमस्य सत्यपि सांग्रहण्यादेस्तिस्र आहुतीर्जुहोतीत्यादिभिरेकवाक्यत्वोपपत्तेरिति ग्रन्थेन क्रमादेवामनहोमानामङ्गतामाह । तदपि शब्दादभ्युपेत्यवादमात्रमिति ज्ञेयम् ।

यदपि मिश्रैः शास्त्रदीपिकायाम् । चतुर्थे(१) फलयज्ञोक्तहेतुत्वादित्यत्र सन्निधिग्राह्यत्वमुक्तं तदप्यभ्युपेत्यवादमात्रम् । अत एव तन्त्ररत्ने प्रकरणग्राह्यतामुक्त्वा सन्निधिनापि तद्धिकरणसिद्धिरुक्ता । तदेवं यत्र प्राकृताङ्गानुवादेन प्रादेशोपसत्त्यघट्टिधिरुक्तरूपः सप्तविधः सन्दंशो वा तत्रैव विकृतौ प्रकरणं विनियोजकमन्यत्र सन्निधिरेवेति सिद्धम् ।

एवं प्रधानस्य महाप्रकरणं प्रकृतेरसन्दंशोद्भूतिकं विकृतेस्तु सन्दंशोद्भूतिकमपि निरूपितम् ।

अवान्तरप्रकरणं तु सन्दंशोद्भूतिकमेव तच्च प्रकृतेर्नास्त्येव प्रकृत्यङ्गस्य तु प्रयाजानामाभिक्रमाधिकरणे उक्तम् । विकृतेस्त्ववान्तरप्रकरणं सन्दंशोद्भूतिकं सप्तमे प्रणयनाधिकरणे वरुणप्रघासानामुक्तम् ।

(१) ४ चतुर्थाध्यायस्य ४ पादे आमनहोमानां सांग्रहण्यङ्गतायां ६ चतुर्थाधिकरणे

तत्र हि उपाश्चावपन्तीति वरुणप्रघासावान्तरप्रकरणाधीतमपि न वैश्वदेवे उत्तरवेदिमुपवपन्ति न शुनासीरीये इति पर्युदासैकवाक्यतावलाद्वैश्वदेवान्तरप्रकरणं बाधित्वा चातुर्मास्यानामयात्वेति वाद इत्युक्तम् । इति प्रकरणनिरूपणम् ।

क्रमो ऽपि द्विविधः । पाठसादेश्यमनुष्ठानसादेश्यं च पाठसादेश्यमपि द्विविधम् । यथासंख्यपाठः, सन्निधिपाठश्च ।

समाख्यापि द्विविधा । लौकिकी वैदिकी च । पुनरपि समाख्या द्विविधा सामान्यसमाख्या, विशेषसमाख्या च ।

विधिरपि द्विविधः प्रत्यक्षः कल्प्यश्च । प्रत्यक्षो ऽप्यनेकधा वक्ष्यते । कल्प्यो ऽपि नानास्मृतिकल्प्य आचारकल्प्यो विधिकल्प्यो ऽर्थवादकल्प्यो मन्त्रकल्प्यश्च । तत्र विधिकल्प्यो यथा विशेषणविधिः । अर्थवादकल्प्यस्तु द्विविधः । स्वतन्त्रार्थवादकल्प्यो विध्यन्तरशेषार्थवादकल्प्यश्च । आद्यो ऽपि त्रिविधः । फलार्थवादकल्प्यः सिद्धवत् कीर्तनार्थवादकल्प्यः, उपाख्यानार्थवादकल्प्यश्च । अन्त्यो ऽपि द्विविधः । एककर्तृकोपाख्यानरूपपरकृतिकल्प्यो ऽनेककर्तृकोपाख्यानरूपपुराकल्पकल्प्यश्च ।

तत्र फलार्थवादकल्प्यो यथा "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती"ति ।

सिद्धवत्कीर्तनार्थवादकल्प्यो यथा "त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च । अत्र ह्येवावपन्त्यत एवोद्वपन्ती"ति ।

परकृतिकल्प्यो यथा "ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्" इति । इन्द्रस्येदमुपाख्यानं तस्मादिन्द्रो ऽपिभेविष्युपक्रमात्तस्य प्रायच्छदिति क्रियायां कर्तृत्वेनानुषङ्गात् ।

पुराकल्पकल्प्यो यथा । "तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्ति"ति ।

विध्यन्तरशेषार्थवादकल्प्यो यथा । "उपरि हि देवेभ्यो धारयती"ति ।

मन्त्रकल्प्यो ऽपि द्विविधः मन्त्रगताख्यातस्यैव लेट्त्वकल्पनात् । विधियुक्तवाक्यान्तरकल्पनाच्च । तत्राद्यो यथा "वसन्ताय कपिञ्जलानालभत" इति ।

द्वितीयो यथोपांशुयाजादौ याज्यानुवाक्यासूक्तवाकादिमन्त्रकल्प्यो देवतादिविधिः यथा वा "उच्चा दिवि दक्षिणावन्तो ऽस्थुर्ये अश्वदाः सह ते सूर्येणे"त्यश्वदानफलविधिः । तदेतद्विरोधाधिकरणभट्टटीकाव्याख्यानान्ते सोमेश्वरेणोक्तम् ।

अथ प्रत्यक्षविधिभेदाः प्रायश उच्यन्ते । ते च केचित्स्मार्त्ता अपि सम्भवन्त. प्रत्यक्षभेदप्रदर्शनेनैवोक्तप्राया इति न पृथगुच्यन्ते । के चित्स्मार्त्ता एव सम्भवन्तीति तत्र तत्र वक्ष्यन्ते ।

पुनर्विधिर्द्विविधः । अर्थकर्मविधिर्गुणकर्मविधिश्च । गुणकर्मविधिरपि त्रिविधः। अदृष्टार्थो दृष्टार्थ उभयार्थश्च । उत्तरौ द्विविधौ । प्रतिपत्तिरूपौ अप्रतिपत्तिरूपौ च। तत्र दृष्टार्था प्रतिपत्तिर्यथा । "चात्वाले कृष्णाविषाणां प्रास्यती"ति । उभयार्था प्रतिपत्तिर्यथा । शाश्रयिकर्मस्विष्टकृदादि । अप्रतिपत्तिरूपं दृष्टार्थं गुणकर्म यथा "व्रीहीनवहन्ती"ति । अप्रतिपत्तिरूपमुभयार्थं गुणकर्म यथा पशुपुरोडाशयागाद्याश्रयिकर्म ।

पुनरपि विधिश्चतुर्विधः ।

उत्पत्तिविधिर्विनियोगविधिः प्रयोगविधिरधिकारविधिश्च ।

ततोत्पत्त्यादिविधिश्चतुर्विधो ऽपि प्रत्येकं द्विविधः । क्रत्वर्थः पुरुषार्थश्च ।

तत्र क्रत्वर्थ उत्पत्तिविधिर्यथा । "समिधो यजती" त्यादिः ।

पुरुषार्थ उत्पत्तिविधिर्यथा "अग्निहोत्रं जुहोती"त्यादिः ।

क्रत्वर्थो विनियोगविधिर्यथा । "व्रीहीन्प्रोक्षती"त्यादिः ॥

पुरुषार्थो विनियोगविधिर्यथा । द्रव्यार्जनविधिः ।

क्रत्वर्थः प्रयोगविधिर्यथा ऽऽरम्भणीयादिविधिः

आतिदेशिककालदेशाद्येकवाक्यतापन्नः ।

पुरुषार्थः प्रयोगविधिरपि द्विविधः । अवान्तरप्रयोगविधिर्महाप्रयोगविधिश्च ।

तत्राद्यो यथा । "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेते"त्यादिः । अत्र च फलवाक्ये करणत्वेनैव प्रयोगावच्छेदेन कर्मणो विधेयत्वात्तस्य करणत्वाक्षिप्तमङ्गसाहित्यमन्योन्यमपि विवक्षितम् । कालस्यापि च विधेयत्वात्तदेकत्वमपि विवक्षितं, विधेयत्वमेव च विवक्षाबीजं नोपादेयत्वं तद्विशेषणत्वं चेति । तट्टीकायामुक्तम् ।

नोपादेयत्वमेवैकं विवक्षाकारणं मतम् ।

विशेषणविवक्षायां कारणं हि महद्भिः ॥

इति । एवं मुख्यम् अतत्त्रिकस्य त्रिकस्यैकप्रयोगतासिद्धिरेकाद्शोक्ता पौर्णमास्यधिकरणवार्त्तिकोपपादितापपद्यः ।

महाप्रयोगविधिर्यथा " समे दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"ति । अत्रापि षण्णामेकप्रयोगतासाधकः । पूर्वोक्तो अखिलो ऽपि

न्यायस्तुल्य । तस्य फलमेक मदुल्प ।

अत्वर्थो ऽधिकारविधिरपि द्विविध । नैमित्तिक समर्दोष-निर्घातार्थो ऽनैमित्तिक सन्दोषनिर्घातार्थो ऽपि च ।

तत्राद्यो यथा " भिन्ने जुहोती"ति । एतदुदाहरणं शास्त्रदीपिकायां दशमे(१) समुच्चयस्त्वदोषनिर्घातार्थेऽ॑त्यस्त्रोक्तम् । तत्र विध्यतिक्रमे हि दोष । अङ्गनाशे च विध्यतिक्रम ।

कपाल चामान्नापात्तमङ्गम । तेन कपालभङ्गे ऽङ्गभ्रेषाख्य दोषस्तन्निर्घातार्थं प्रायश्चित्तहोम । अत एव षष्ठ (४पा ४अ ) "ऽर्थसमवायात् प्रायश्चित्तमेकदेशे ऽपी" त्यत्रैकदेशभङ्गप्रायश्चित्तहोम इति पूर्वपक्षहेतुर्होमो ऽय भिन्नसंस्कारो भेददोषनिर्हरणादित्युक्त । न च भेददोषो नेति सिद्धान्तहेतुरुक्त । किं तु हेत्वन्तरमेव नित्यानित्यसंयोगविरोध । एतदस्माभि शास्त्रदीपिकाप्रकाशे उक्तम । तस्माद्दोषनिर्घातार्थनैमित्तिकोदाहरणमेतत्प्रतिभाति अङ्गभ्रश्यमानमन्यानि भवेति ।

द्वितीयो द्विविध । विहितातिक्रमनिमित्तको निषिद्धाचरणनिमित्तकश्च ।

तत्राद्यो यथा " यदाहुतो यस आर्तिमियाद् भू स्वाहे"ति गार्हपत्ये जुहुयादित्यादि । शूद्रवदादिनिषिद्धाचरणे ऽन्यस्य प्रवृत्तेर्द्वितीयोदाहरणमपीदमेव ।

पुरुषार्थो ऽधिकारविधिस्त्रिविध ।

काम्यो नैमित्तिक सङ्कलितश्च । काम्यो ऽपि द्विविध । कर्मफलसम्बन्धपर गुणफलसम्बन्धपरश्च ।

तत्राद्यो यथा " दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"त्यादि ।

द्वितीयो यथा " दध्नेन्द्रियकामस्य जुहुयादि"त्यादि ।

नैमित्तिको ऽपि द्विविध नियतनिमित्तक अनियतनिमित्तकश्च ।

तत्राद्यो यथा "यावज्जीवमग्निहोत्रं जुहोती"त्यादि ।

द्वितीया यथा । " यस्याहिताग्नेरग्निर्गृहान्दहेत् क्षामवते ऽग्नये पुरोडाशमष्टाकपाल निर्वपेदि"त्यादि ।

तृतीयो ऽपि द्विविध निमित्तजन्यदोषनाशफलसङ्कलित इतरफलसङ्कलितश्च ।

तत्राद्यो ऽपि द्विविध विहितातिक्रमनिमित्तको निषिद्धाचरणनिमित्तकश्च ।

---

(१) दार्शपूर्णमं दोषनिर्घातार्थानि निमित्त कर्माङ्गानि भिन्ने जुहोतीत्यादीनि तेषां प्रयाजादीनामपूर्वीयविधानात्समुच्चय इति समुदाहरणमेतदिति भा०

तत्राद्यो यथा "यो ऽमावास्यां पौर्णमासीं चातिपातयेदग्नये पथिकृते ऽष्टाकपालं निर्वपे"दित्यादिः ।

निषिद्धाचरणनिमित्तको यथा । "यद्येकं यूपमुपस्पृशेदेष ते वायो" इति ब्रूयादित्यादिः ।

इतरफलसम्बलितो यथा । "वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात" इत्यारभ्य "यस्मिन् जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान्भवती"त्यन्तो जातेष्टिविधिः ।

पुनरपि विधिरेकादशविधः ।

सामान्यविधिर्विशेषविधिः प्रतिप्रसवविधिरभ्यनुज्ञाविधिरुपसंहारविधिर्व्यवस्थाविधिः पर्युदासविधिरभावविधिः साधारण्यविधिरुत्कर्षविधिरपकर्षविधिश्चेति । इह चाभ्यनुज्ञाविधिः प्रतिप्रसवभिन्नो ऽपि अस्ति । यथा ।

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः । इति ॥

तथा प्रतिप्रसवरूपो ऽप्यस्ति । "क्रीतराजको ऽभोज्यान्न" इति । तथा प्रतिप्रसवो ऽप्यभ्यनुज्ञाविधिभिन्नो ऽप्यस्ति "पूषा प्रपिष्टभाग" इति । अतस्तौ पृथगुपात्तौ । यद्यपि चोपसंहारविधिर्विशेषविधिभेद एव । प्रतिप्रसवविधेरपि च सामान्यविधिविशेषविधिभेदौ सम्भवतस्तथापि भेदं विना ऽपि सामान्यसम्भवात् गोबलीवर्दन्यायेन पृथगुद्देशः ।

एकादशविधो ऽपि विधिर्द्विविधः । क्रत्वर्थः पुरुषार्थश्च ।

तत्र क्रत्वर्थः सामान्यविधिर्यथा "यदाहवनीये जुहोती"ति । पुरुषार्थः सामान्यविधिर्यथा पुत्रकामेष्टिः ।

क्रत्वर्थो विशेषविधिर्यथा "पदे जुहोती"ति ।

पुरुषार्थो विशेषविधिर्यथा "यः कामयेत वीरो म आजायेते"ति स चतुर्होतारं जुहुयादि"ति । वीरपुत्रकामनायां हि चतुर्होतृहोमेन बाधात् पुत्रसामान्यकामस्यैव पुत्रेष्टिः ।

क्रत्वर्थः प्रतिप्रसवविधिर्यथा "पूषा प्रपिष्टभाग इति । पुरुषार्थः स यथा, ग्रहणे सूतके ऽपि श्राद्धविधिः स्मार्त्तः ।

पुनः प्रतिप्रसवविधिः पञ्चविधः । लुप्तार्थप्रतिप्रसवः । भूतानिषिद्धप्रतिप्रसवः । पर्युदस्तप्रतिप्रसवः नियमविधिना फलतो व्यावर्तितं यत्तद्विषयः प्रतिप्रसवः । परिसंख्यया व्यावर्तितं यत्तद्विषयश्चेति ।

तत्राद्यो यथा "पूषा प्रपिष्टभाग" इति तार्त्तीयः । दायामिक-

श्च " कृष्णलश्चरौ घृते श्रपयती "ति ।

द्वितीयो यथाराहुतः स्मार्तः ग्रहणे सूतके ऽपि श्राद्धविधिः ।

स्मार्तकर्मपरित्यागो राहोः रन्यत्र सूतकइति । राहोरन्यत्र निमित्तं यत्स्मार्तकर्म श्राद्धादि तस्य सूतके परित्यागो न राहुनिमित्तकस्मार्तस्येत्यर्थः ।

श्रौतो ऽपि "न हिंस्यात्सर्वाभूतानी"ति निषिद्धस्य प्रतिप्रसवो ऽग्नीषोमीयं पशुमालभेत " " वायव्यं श्वेतमालभेते"ति । पर्युदस्तप्रतिप्रसवो यथा भट्टसोमेश्वरमते "नप्रथमयज्ञे प्रवृञ्ज्यादि"त्यस्य पर्युदासरूपस्तत्प्रतिप्रसवो "अग्निष्टोमे प्रवृणक्ती"ति ।

नियमविधिव्यावर्तितप्रतिप्रसवो यथा । वृतैरेवार्त्विज्यं कर्तव्यमिति । चरणनियमे ऽनावृतव्यावृत्तौ सत्यामवृतः सामिधेनीरन्वाहेति होतुरवृतस्यापि प्रतिप्रसवः ।

परिसंख्याव्यावर्तितप्रतिप्रसवो यथा । दशमे पशोरेकादशावद्यमित्यत उत्तरे ऽधिकरणे हृदयस्याग्रे ऽवद्यतीत्यादौ परिसंख्येति यथासूत्रं भाष्यकृतो मतम् । भट्टसोमेश्वरेण तु पशुसोमाधिकरणे तदधिकरणार्थ एवं वर्णितः । एकादश वै पशोरवदानानीति परिसंख्या । अतस्तद्याङ्गान्तराणि यागे व्यावर्तितानीति तद्द्वारा स्विष्टकृत्यपि शेषकार्ये व्यावर्तितान्येव तत्र " त्र्यङ्गैः स्विष्टकृतं यजती " त्यङ्गान्तरेषु त्रयाणां प्रतिप्रसवः । क्रत्वर्थो ऽभ्यनुज्ञाविधिर्यथा । यदि सोमविक्रयी प्रतिविवदेत पूषतैनं वरत्राकाण्डेनाक्षाणं नाशयेयुर्लकुटैर्मल्लीरित्येके, नित्यवदेके, एवं समामनन्तीत्यापस्तम्बसूत्रे ।

पुरुषार्थो ऽभ्यनुज्ञाविधिर्यथा । क्रीतराजको ऽभोज्यान्न इति। पुनरभ्यनुज्ञाविधिर्द्विविधः । कुतो ऽप्यव्यावृत्तं यत्तद्विषयः, कुतो ऽपि व्यावृत्तं यत्तद्विषयश्च । तत्राद्यो यथा ।

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥

इति । द्वितीयः पञ्चविधः ।

निषिद्धविषयः पर्युदस्तविषयो ऽनियमव्यावर्तितविषयः परिसंख्याव्यावर्तितविषय उपसंहारव्यावर्तितविषयश्चेति ।

तत्राद्यो द्विविधः सामान्यरूपो विशेषरूपश्च । आद्यो यथा मनूक्ते "न दीक्षितस्यान्नमश्नीयादि"ति निषिद्धे ।

जीवितात्ययमापन्नो यो ऽन्नमत्ति यतस्ततः ।
आकाश इव पङ्केन न स पापेन लिप्यते ॥

इति । द्वितीयो यथा क्रीतराजको ऽभोज्यान्न इति । उभयोश्च

प्रयोजनमल्पदोषत्वं निर्दोषत्वं चेत्युक्तं वार्त्तिके ।

सामान्येनाऽप्यनुज्ञानाद्विशेषश्च विशिष्यते ।
विशेषो ऽत्यन्तनिर्दोषः स्तोकदोषेतराक्रिया ॥

इति । एवं पर्युदस्ताभ्यनुज्ञाविधिरपि द्विविधः । सामान्यरूपो विशेषरूपश्च ।

तत्राद्यो यथा "न दीक्षितस्यान्नमश्नीयाद्"इत्यस्य पर्युदासपक्षे ऽग्नीषोमीये संस्थिते । यजमानस्य गृहे अशितव्यमिति ।

द्वितीयो यथा ऐतरेयब्राह्मणे "अशितव्यं वपायां हुतायामि"ति । उभयोश्च प्रयोजनं बहुलफलत्वं पर्युदासविधेरित्याह भट्टसोमेश्वरः ।

नियमविधिव्यावर्त्तिताऽभ्यनुज्ञा यथा । विप्रादेर्द्रव्यार्जनोपायनियमैर्व्यावर्त्तिता क्षत्रियादिवृत्तिरापद्यभ्यनुज्ञायते ।

अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा ।
जीवेत्क्षत्रियधर्मेणेति ।

परिसंख्याव्यावर्त्तिता ऽभ्यनुज्ञाविधिः यथा "पञ्च पञ्चनखा भक्ष्या" इत्यनेन व्यावर्त्तितानां मार्जारादीनामभ्यनुज्ञाविधिः प्राणात्ययपरत्वादि ।

उपसंहारव्यावर्त्तितविषयो ऽभ्यनुज्ञाविधिर्यथा । "भवत्पूर्वां ब्राह्मणो भिक्षेते"ति । सामान्यविधेरुपसंहारेण ब्राह्मणेषु चरेद्भैक्षमित्यनेन व्यावर्त्तितस्य क्षत्रियादेरभ्यनुज्ञाविधिश्चातुर्वर्ण्यं चरेद्भैक्षमिति । क्रत्वर्थ उपसंहारविधिर्यथा "ऽऽग्नेयं चतुर्धा करोती"ति ।

पुरुषार्थः स यथा । ब्रह्महा द्वादशाब्दानीति सामान्यं पूर्वैर्थायोर्वेदाध्यायिनं हत्वेति विशेषे उपसंह्रियते ।

पुनरप्युपसंहारो द्विविधः । उपसंहार्यस्योपसंहारविषये नियमतः प्राप्तावनियमतः प्राप्तौ चेति आद्योदाहरणान्युक्तान्येव द्वितीयोदाहरणं तु "यजुर्युक्तं रथमध्वर्यवे ददाती"ति । दशमे हि प्राकाशावयजुर्युक्तरथौ ऽध्वर्युभागस्य निवर्त्तक इति पूर्वपक्षं कृत्वा प्राकाशावपूर्वौ विधीयमानौ युक्तं यदध्वर्युभागं बाधेते इह तु सप्तदशसप्तदशकानि प्राकृतदक्षिणाबाधेन परस्परसहितान्येव दक्षिणात्वेन विहितानि तत्र यजुर्युक्तस्यापि प्राप्तमेव दानं स त्वध्वर्यवे ऽन्यस्मै वा दातव्यः प्राप्तो ऽध्वर्यावुपसंह्रियते । इति सिद्धान्तितम् ।

क्रत्वर्थो व्यवस्थाविधिर्यथा "वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायामि"ति । "चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहो-

श्यामावास्यामि"ति च ।

पुरुषार्थो व्यवस्थाविधिर्यथा तयोर्ह पार्वणेष्वोदिष्टव्यवस्थाविधिः ।

पुनर्व्यवस्थाविधिस्त्रिविधः । उभयप्राप्तावनुभयप्राप्तावन्यतरप्राप्तौ चेति ।

आद्यो यथा वार्त्रघ्नीवृधन्वत्योः । आज्यभागक्रमे पाठाल्लिङ्गाच्चोभयप्राप्तेः । द्वितीयो यथा । चतुर्होतृपञ्चहोतृमन्त्रयोः तयोः प्रकरणेनाम्नानात् । यथा वा "यदग्नये च प्रजापतये च सायं जुहोति" "सूर्याय च प्रजापतये च प्रातरि"ति ब्राह्मणेन देवताविधिपक्षेऽग्निसूर्ययोरप्राप्तेः ।

तृतीयो यथा याशिष्ठानां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषामिति । अत्र हि विधिपाठक्रमात्तनूनपादेव द्वितीयः प्राप्तो न नाराशंसः । तथा यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान्गृह्णीयाद्यदि बृहत्सामा शुक्राग्रानिति अत्रापि हि पाठत ऐन्द्रवायवाग्रतैव प्राप्ता न शुक्राग्रतेति पुनरपि व्यवस्थायाः द्वैविध्याद् द्विविधो व्यवस्थाविधिः । न्यायगम्याऽव्यवस्था वाचनिकी च । तत्राद्या यथोत्पवनावघातादेराज्यौषधयोः । वाचनिकी तु व्यवस्था सप्तधा तेन सप्तविधस्तद्विधिः ।

देशतो व्यवस्था । कालतो व्यवस्था । कर्तृतो व्यवस्था । फलतो व्यवस्था । निमित्ततो व्यवस्थेति ।

देशतो व्यवस्था यथा वरुणप्रघासेषु उत्तरे विहारेऽध्वर्युरुद्धर्यान्यासादयति मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्निति ।

स्मार्तमुदाहरणं यथा ।

"नर्मदोत्तरभागे तु कर्तव्यं सिंहपुच्छके ।
"कुलीरे संस्थिते भानावुपाकुर्यात्तु दक्षिणे ॥

इति बृहस्पतिः ।

कालतो व्यवस्था यथा । "वसन्ते ब्राह्मणोऽग्निमादधीत" "ग्रीष्मे राजन्यः" "शरदि वैश्यो" "वर्षासु रथकार आदधीते"ति ।

स्मार्तमुदाहरणं यथा ।

"दिवा संध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
"कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः ॥

इति । कर्तृतो व्यवस्था यथा "पयोव्रतं ब्राह्मणस्य" "यवागू राजन्यस्या" "ऽऽमिक्षा वैश्यस्येति" । तथा "आहवनीय ब्राह्मणस्य

ब्रह्म साम कुर्यात्पार्थुरश्मं" राजन्यस्य रायोवाजीयं वैश्यस्येति । तथा "युवं हि स्थः स्वर्पती" इति द्वयोर्यजमानयोः प्रतिपदं कुर्यादेते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्य इति ।

संस्कार्यतो व्यवस्था यथाज्यौषधसान्नाय्यधर्माणाम् ।

स्मार्तं तूदाहरणम् ।

"गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
"गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विश इति ॥

कर्मतो व्यवस्था यथा ।

रथन्तरे प्रस्तूयमाने संमीलयेद् बृहति सगुणं मनसा ध्यायेदिति । स्मार्तोदाहरणं तु बृहस्पतिः ।

इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः ।
नैमित्तिके कालकामौ काम्ये तु धुरिलोचनौ ॥
पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतावित्यादि । मनुः ।
पिण्ड्ये स्वदितमित्येवं वाच्यं गोष्ठे तु सुश्रुतम् ॥
संपन्नमित्यभ्युदये दैवे रोचितमित्यपीति ।

फलतो व्यवस्था यथा । "मृन्मयेन प्रतिष्ठाकामस्य प्रणायेत्" "कांस्येन ब्रह्मवर्चसकामस्येति" ।

स्मार्तोदाहरणं तु । ब्रह्मयज्ञ एव फलविशेषार्थमृग्यजुःसामाध्ययनविधिः ।

निमित्ततो व्यवस्था यथा "यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान्ग्रहान्गृह्णीयाद्यदि बृहत्सामा शुक्राग्रानि"ति । स्मार्तोदाहरणं तु ।

नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता ।
निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते ॥

इति मनुः ।

तथान्यतरकोटिव्यवस्थाया यत्रेत्यन्तरस्यार्थिकी व्यवस्था भवति सापि भावविषया ऽभावविषया चेति द्विविधा ।

तत्राद्या यथा । "आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाऽग्नीषोमीयो भवति" यदेवादः पौर्णमासं हविस्तत्तर्ह्यनुनिर्वपेत्तर्हि स उभयदेवतो भवतीत्यग्नीषोमीयपुरोडाशो कृतसोमयागपुंविषयत्वेन व्यवस्थापिते ऽर्थादग्नावो ऽकृतसोमयागपुंविषयत्वेन व्यवस्थितो भवति । पुर्वेद्युरमावास्यायां वेदिं करोतीत्यमावास्यायां पूर्वेद्युर्वेदिकरणे व्यवस्थापिते ऽर्थादचिरमियासनोत्तरं वेदिकरणं पौर्णमास्यां व्यवस्थितं भवति । तदिदमुदाहरणद्वयं प्रथमे स्थितम् । तथा पूर्वमि-

त्यत्र पूर्वम् उत्कर्षो ब्राह्मणस्येत्यत्रोत्तरम् ।

क्रत्वर्थः पर्युदासविधिर्यथा ।

" यजतिषु ये यजामहं करोति नानुयाजेष्विति "

पुरुषार्थः पर्युदासो यथा ।

नेक्षेतोद्यन्तमादित्यमित्यादिः ।

पुनः पर्युदासविधिर्द्विविधः । पर्युदासस्य स्वातन्त्र्यात्परविशेषणत्वाच्च । तत्राद्ये नेक्षेतेत्येवोदाहार्यम् । द्वितीयस्तु द्विविधः । पर्युदासस्योद्देश्यविशेषणत्वाद्विधेयविशेषणत्वाच्च । तत्रोद्देश्यविशेषणत्वेनानुयाजेष्वित्युदाहार्यम् । विधेयविशेषणत्वाद्यथा "नार्षेयं वृणीते न होतारं वृणीते " इति । पुनरपि वक्ष्यमाणनिषेधवोडशत्ववत्पर्युदासो ऽपि षोडशविधः ।

तथा हि । प्रकृतौ विकृतौ अप्रकृतिविकृत्यात्मके च कर्मणि समानविधानः पर्युदासविधिर्नानुयाजेषु ये यजामहमिति । अत्र चातिदेशिकद्वारा प्रतीक्षणात्समस्तयो वै प्रजापतिर्यज्ञे यज्ञे ऽन्वायत्त इत्यत्र वार्तिककृदुक्तस्य द्विरुक्तता न्यायापवादस्य साम्यात् ।

एवं प्रकृतिगतारादुपकारिपर्युदासो विकृतिगतारादुपकारिपर्युदासः । अप्रकृतिविकृत्यात्मककर्मगतारादुपकारिपर्युदासः । प्रकृतिगतादृष्टार्थसन्निपातिपर्युदासः । प्रकृतिगतप्रतिपत्तिव्यतिरिक्तसन्निपातिदृष्टार्थपर्युदासः । प्रकृतिगतप्रतिपत्तिपर्युदासः । विकृतिगतोपदिष्टस्य पूर्ववत्त्रिविधस्य सन्निपातिनः पर्युदासत्रयः ।

विकृतिगतातिदिष्टस्य पूर्ववत्त्रिविधस्य सन्निपातिनः पर्युदासत्रयः ।

अप्रकृतिविकृत्यात्मककर्मगतोपदिष्टसन्निपातिनः । पूर्ववत्त्रिविधस्य पर्युदासत्रय इति द्वादश ।

एषामुदाहरणानि यथासम्भवं मृग्याणि । क्रत्वर्थो भावे विधिर्यथा स्विष्टकृदर्थावत्तनाशआज्यविधि "यां वै कां चिद्देवतामन्तरितस्तस्या आवृश्चते आज्येनैता देवताः परिसंख्याय यजेते"ति । तथा अन्यभावे तु निम्नस्य पाणावेवोपपादयेदिति ।

पुरुषार्थो भावे विधिर्यथा । " सत्रायागूर्य विश्वजिता यजेते "ति ।

साधारण्यविधिर्द्विविधः विनियोगसाधारण्यविधिरनुष्ठानसाधारण्यविधिश्चेति ।

तत्राद्यो यथा । " यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्ये"ति यथा वा बर्हिषो बर्हिर्धर्माणां च वेदा वेदिधर्माणां च वि-

धिरङ्गप्रधानसाधारणः ।

द्वितीयो यथा । उपदेशेनाग्नीषोमीये ऽतिदेशेन च सवनीयानुबन्ध्ययोरङ्गभूतस्य यूपस्यानुष्ठानसाधारण्यार्थो दीक्षासु यूपं छिनत्तीत्यपकर्षविधिरिति ।

उत्कर्षविधिर्यथा । आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति" "स एष औपवसथ्ये ऽहन् द्विदेवत्यः पशुरालभ्यत" इत्यग्नीषोमीयस्य क्रयसन्निधावुत्पन्नस्योत्कर्षविधिः ।

(१) साधारणविधिव्यतिरिक्तो ऽपि यथा " तिष्ठन्तं पशुं प्रयजन्ती"ति ।

पुनरपि सामान्यादिविध्येकादशकं यथा सम्भवं द्विविधम् ।

दृष्टार्थमदृष्टार्थं च । तत्रादृष्टार्थौ सामान्यविशेषविधी यथा उदाहृतायेयाहवनीयपदविधी । दृष्टार्थौ तु सोमफलचमसविधी । प्रतिप्रसवविधिस्तूदाहृतो द्विविधो ऽप्यदृष्टार्थ एव । दृष्टार्थस्तु प्रतिप्रसवविधिर्यथा " पशु सञ्ज्ञपयती "ति । अभ्यनुज्ञाविधिस्तु सर्वो ऽपि दृष्टार्थ एव न त्वदृष्टार्थो ऽपीति । उपसंहारविधिस्तु पूर्वोक्तः क्रत्वर्थो दृष्टार्थः । पुरुषार्थस्तु पूर्वोक्तो ऽदृष्टार्थः । व्यवस्थाविधिस्तु प्रागुक्तः सर्वो ऽप्यदृष्टार्थ एव । यद्यपि वार्त्रघ्नीवृधन्वत्योराज्यभागदेवताभूताग्निसोमप्रकाशनार्थत्वाद्दृष्टार्थतैव तथापि तुल्यार्थयोर्युगलयोर्व्यवस्थाविधिरदृष्टार्थ एव ।

दृष्टार्थो व्यवस्थाविधिर्यथा आर्षसंख्याविशिष्टव्यवस्थाविधिस्त्वसंख्यार्षयुक्तगोत्रज्ञानरूपदृष्टार्थ इत्युक्तं स्मृत्यधिकरणन्यायसुधायाम ।

पर्युदासविधिस्तु प्रागुक्तो द्विविधो ऽपि पुरुषार्थः अदृष्टार्थ एव । दृष्टार्थस्तु पर्युदासः " यजतिषु येयजामहं करोति नानुयाजेष्वि "ति । अत्र च यद्यप्यनूयाजव्यतिरिक्तेष्वित्यंशो न दृष्टार्थस्तथापि विधेयपेयजामहांशे यागप्रकाशकत्वेन दृष्टार्थत्वात्पर्युदासविधिर्दृष्टार्थ इत्युच्यते । अभावविधिस्तु पूर्वोदाहृतयोर्मध्ये क्रत्वर्थो यः स दृष्टार्थः पुरुषार्थस्त्वदृष्टार्थः । पुनरपि सामान्यादिविध्येकादशकं जातिद्रव्यगुणक्रियाविषयत्वेन यथासम्भवं चतुर्धा । जात्यादिविषयत्वमपि उद्देश्यांशे विधेयांशे उभयांशे चेति जात्यादिविषयमपि विध्येकादशकं प्रत्येकं त्रिविधमिति द्वात्रिंशदुत्तरं शतम्भेदा भवन्ति ।

एषामुदाहरणान्यन्वेष्याणि ग्रन्थगौरवात्तु न प्रदर्शितानि ।

(१) अपकर्षविधिरित्यधिकं २ पु० ।

पुनरप्यष्टविधो विधिर्धात्वर्थमात्रविधिः सगुणधात्वर्थविधिः किंचिदुद्दिश्य धात्वर्थविधिस्तथैव विशिष्टधात्वर्थविधिर्धात्वर्थोद्देशेनान्यविधिर्धात्वर्थे ऽन्ययोः सम्बन्धविधिर्धात्वर्थानुरक्तेन प्रत्ययेनान्ययोः सम्बन्धविधिर्मुक्त्वा धात्वर्थमन्ययोरेव सम्बन्धविधिश्चेति । अत्र दूषणभूषणं द्वितीयाव्याख्यायाप्रस्तावे वक्ष्यते ।

पुनरपि त्रिविधो विधिरपूर्वविधिर्नियमविधिः परिसंख्याविधिश्च ।

त्रिविधो ऽप्यसौ चतुर्विधः ।

जातिविधिर्द्रव्यविधिर्गुणविधिः क्रियाविधिश्च ।

तत्र जातेरपूर्वविधिर्यथा "खादिरं वीर्यकामस्य यूपं कुर्वीते"ति ।

द्रव्यस्यापूर्वविधिर्यथा "गोदोहनेन पशुकामस्य प्रणयेदि"ति गोदोहनशब्दस्य यौगिकत्वेन द्रव्यवाचित्वात् ।

गुणस्यापूर्वविधिर्यथा "यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचः सदो मिनुयादि"ति ।

क्रियापूर्वविधिर्यथा ऽ"ग्निहोत्रं जुहोती"ति । देवताविधिर्होमाधिकरणीभूताहवनीयादिविधिश्चापूर्वविधावेवान्तर्भूतः । देवताया यागसिद्ध्यादृष्टार्थत्वे ऽपि विध्येकप्रमाणत्वात् । आहवनीयादेरप्यधिकरणत्वेन दृष्टार्थत्वे ऽपि होमविधिनानाक्षिप्तत्वेनादृष्टार्थत्वस्याधार(१)ग्निहोत्राधिकरणवार्तिक उक्तत्वात् । अतो ऽदृष्टार्थत्वं नियमविधिलक्षणं दीक्षितोक्तमज्ञानमूलमेव । तदेवं द्विविधो ऽपूर्वविधिः पुन सिद्धो दृष्टार्थः अदृष्टार्थश्च । देवताविधिरपि तद्धितचतुर्थीमन्त्रवर्णद्वितीयार्थवादभेदात्पञ्चविधः ।

तत्रान्ये स्फुटाः । मार्थवादिको ऽर्थवादभेदेषु वक्ष्यते । अध्ययनविधिरप्यपूर्वविधिर्दृष्टार्थश्च । न ह्ययं नियमः स ह्यर्थज्ञानस्वरूपे वा स्यात्क्रत्वपूर्वे वा ।

नाद्य. न ह्यध्ययनेनैवार्थज्ञानमिति नियमः सम्भवी । उपायान्तरेणापि तद्दर्शनात् । न द्वितीयः । अनारभ्याधीतत्वेन क्रत्वपूर्वानुपस्थितेः । अव्यभिचारिद्वारेण हि क्रतूपस्थितिः स्यान्न चात्र तदस्ति भावे वा पर्णतादिवाक्रत्वङ्गत्वापत्तिः । अत एवाध्ययने नियमापूर्वं नास्ति शूद्रव्यावृत्त्या ॥ फलतो नियमव्यवहार इत्येतत्सर्वं न्यायरत्नमालायामुक्तम् ।

पुनरप्यपूर्वविधिर्द्विविधः । क्रत्वर्थः पुरुषार्थश्च । तत्राद्यो य-

(१) अध पा० १ पु० मा० ।

यो "समिधो यजती"त्यादिः ।

द्वितीयो यथा "अग्निहोत्रं जुहोती"त्यादिरिति । नियमविधिस्तु त्रिविधः । प्रतिनिधिनियमः प्रतिपत्तिविधिस्तदुभयव्यतिरिक्तश्चेति । प्रतिनिधिनियमोऽपि तावदपूर्वविधिवदेव जातिद्रव्यगुणक्रियाविषयत्वेन चतुर्विधः । तत्र जातिप्रतिनिधिनियमो यथा पूतीकविधिः । द्रव्यप्रतिनिधिनियमो यथा सत्रे "यदि सत्राय दीक्षितानां प्रमीयेत योऽस्य नेदिष्ठः स्यात्तं तस्य स्थाने दीक्षयित्वेति" । नेदिष्ठशब्दस्य युवालपयोः कनन्यतरस्यामिति युवशब्दादेशनेदविधानाद्यौगिकत्वेन द्रव्यवाचित्वात् । "यद्युपाकृतः पशुः पलायेतान्यं तद्वर्णं तद्वयसमि"ति तु कातीयं, न द्रव्यस्य गुणस्य वा प्रतिनिधिनियमः । यद्वा वै पशोर्देन्ताः पुनर्जायन्ते अथ स मेध्यो भवतीति वयोवस्थाविशेषावच्छिन्नस्य कृष्णसारङ्गो ऽग्नीषोमीय इत्यादिगुणयोगिनश्च मुख्यद्रव्यस्य प्रधानेन प्रयुक्तत्वाद्व्रीहिनाश इव व्रीह्यन्तराणाम् ।

गुणप्रतिनिधिनियमो यथा कातीयानां कृष्णसारङ्गाभावे लोहितसारङ्गविधिरग्नीषोमीये पशौ "यदि कृष्णसारङ्गं न विन्देदपि लोहितसारङ्गः स्यादि"ति शतपथात् ।

क्रियाप्रतिनिधिनियमो यथा ऽऽपस्तम्बः "यदि यजमानः प्रसवेत्प्रजापतेर्विभान्नामलोक इति ध्रुवायां यजमानभागमवधाय समिष्टयजुषा सह जुहुयादिति । अत्र होमः प्रक्षेपमात्रं देवताभावात् । तथाहिताग्निपात्रप्रतिपत्तेर्दक्षिणे हस्ते जुहूमासादयतीत्यादायाः प्रतिनिधिः पतिताहिताग्निपात्रेष्वन्या स्मर्यते ।

पात्राणि [illegible] दहेदग्नौ यजमाने वृथा मृत इति ।

तथा द्विजाभावे श्राद्धान्नभोजनस्य प्रतिनिधिः स्मर्यते । हेमाद्रौ देवलः ।

निधाय वा दर्भवटूनासनेषु समाहितः ।
प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत् ॥
निर्दिश्याप्यन्नमुद्धृत्य यत्र पात्रं ततो गतिः ।
पात्राभावे क्षिपेदग्नौ गवे दद्यादथाप्सु वेति ॥

प्रतिनिधिनियमः सर्वः क्रत्वर्थ एव न पुरुषार्थोऽपीति न द्विविधः । तथा प्रतिनिधिनियमः सर्वोऽपि दृष्टार्थ एव नादृष्टार्थोऽपीति न द्विविधस्त्रिविधो वेति । प्रतिपत्तिविधिस्तु क्रियाविधिरेव न जातिद्रव्यगुणविधिरिति न चतुर्विधः ।

तथा प्रतिपत्तिविधिर्द्रव्योद्देश्यक एव [illegible] जातिगुणक्रियोद्देश्यक इति नोद्देश्यचातुर्विध्यादपि चतुर्विधः । पुनश्च प्रतिपत्तिः क्रत्वर्थे-

थ न पुरुषार्थेति न द्विविधस्तद्विधिः । पुनरपि प्रतिपत्तिविधिर्दृष्टार्थो दृष्टादृष्टार्थोभयार्थश्च नादृष्टमात्रार्थोऽपीति न त्रिविधः ।

तत्राद्यो यथा "चात्वाले कृष्णविषाणां प्रास्यती"त्यादि ।

द्वितीयो यथा स्विष्टकृद्विधिरिति । पुनश्च द्विविधा प्रतिपत्तिः साक्षाद्विनियुक्तप्रतिपाद्यविषया साक्षाद्विनियुक्तोपादानानुषङ्गसिद्धप्रतिपाद्यविषया च । तत्राद्योदाहृतैव ।

द्वितीया यथा । शकृत्प्रविध्यतीति । प्रतिनिधिप्रतिपत्तिभिन्नव्यतिरिक्तोऽपि नियमविधिः प्रतिनिधिविधिवज्जात्यादिविषयत्वेन सावधतुर्विधः । तत्र जातेर्नियमविधिर्यथा कपिञ्जलान् गच्छेति । गोपदयदेव हि प्रयवाक्यमाङ्स्याधिकरणवार्तिके अद्रव्यशब्दत्वादिति सूत्रे ऽन्यथासिद्धग्रन्थे उदाहृतम् । द्रव्यस्य नियमविधिर्यथैकहायन्येति । गुणस्य यथारुणयेति । क्रियाया यथा व्रीहीनवहन्तीति ।

सोऽयं प्रतिनिधिप्रतिपत्तिविधिव्यतिरिक्तो नियमविधिः पुनर्द्विविधः क्रत्वर्थः पुरुषार्थश्च ।

अनन्तरोदाहृतश्चतुर्विधः क्रत्वर्थः । पुरुषार्थो यथा । ऋतौ भार्यामुपेयादिति प्राङ्मुखोऽन्नानि भुञ्जीतेति च । पुनः सोऽयं नियमविधिस्त्रिविधः । दृष्टार्थोऽदृष्टार्थो दृष्टादृष्टोभयार्थश्च । तत्र पक्षप्राप्तभार्यानियमो नैमित्तिकः स चा ऽऽयृतौ भार्यामुपेयादित्यादिर्दृष्टादृष्टोभयार्थः ।

इह हि प्रयाजकस्यैव तादर्थ्यमुच्यते नियमादृष्टस्याप्रयोजकत्वादप्यप्राप्तादृष्टार्थत्वात् प्राङ्मुखत्वादरपि भोजननिरपेक्षेणादृष्टमात्रेणाप्रयुक्तत्वादप्राप्तदृष्टार्थतैव । गमन तु भार्यामुखानिच्छयापि कुर्याद् ऋतौ निमित्ते अदृष्टाय प्रयुङ्क एव विधिः । सुखेच्छु प्रति तूदास्त इति दृष्टादृष्टोभयार्थोऽयम् ।

केवलादृष्टार्थस्तु नियमविधिर्यथा प्रकृतौ वैफलिपक्ष्यापूर्वद्रव्यान्तरपृष्ठयोरदृष्टार्थयोरन्यतरस्य क्वचिद्विकृतौ नियमः श्रूयते इति। अपूर्वनियमविधिवच्च परिसंख्याविधेरपि जात्यादिविषयाण्युदाहरणानि मृग्याणि ।

पुनः परिसंख्याविधिर्द्विविधः । शेषपरिसंख्या शेषिपरिसंख्या च आद्या यथा "इमामगृभ्णन्नि"ति ।

द्वितीया यथा गृहमेधीये पञ्चम पक्षः । यत्तु भट्टसोमेश्वरेण पशुसोमाधिकरणे शेषपरिसंख्योदाहरणमुक्तम् न्यायात्सर्वांशयवप्राप्तावप्येकादशधं पयोरवदानानीत्यस्यानन्यप्रयोजनत्वाद्यवयवान्तरप-

रिसंख्यार्थत्वाभ्युपगमेन दाशमिकः सिद्धान्त इति । तदेतदस्माभि-र्दशमे पशोरेकहविष्ट्वमित्यतोऽष्टमेऽधिकरणे दूषितम् ।

मिश्रा हि तत्रास्य छिद्रिरवद्यतीति संख्याविधिनैकवाक्यता-मेवाहुः । यदि परं हृदयादिवाक्यानामेवेमामगृभ्णन्निति तत्फल-तः परिसंख्यात्वं तत्रत्यभाष्यकृदुक्तं वरम् । तदपि विशसनेऽपि प-शुप्रत्यभिज्ञानाद्धृदयादिवाक्याभावे पशोरेव मध्यात्पूर्वार्धाच्च सकृद-वदानं प्राप्नुयान्नावयवेभ्य इति निरस्तम् ।

यत्तु तत्र मिश्रैः पशोर्विशसनेन साधनत्वायोगात्सर्वावयवे-भ्योऽवदानप्रसक्तिरुक्ता सा ऽऽपातत एवेत्यप्युक्तं तत्रैव । तदुक्तमा-कृत्यधिकरणवार्त्तिके पश्वादिष्वपनीताङ्गेषु विशेषबुद्ध्यभावात्सामा-न्यरूपैव विशसनादिविशिष्टा बुद्धिर्भवेदिति ।

पुनः परिसंख्या द्विविधा शाब्दी आर्थी च । तत्राद्या निषे-धरूपैवेति भट्टसोमेश्वरः ।

एवकारेण शाब्दीपरिसंख्येति मिश्राः ।

यथा "त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च अत्र ह्येवावपन्त्यत एवोद्वपन्ती"ति ।

आर्थी तु द्विविधा प्राप्तपरिसंख्या या त्रिदोषा, अप्राप्तपरिसं-ख्या च या तद्धीना सा च फलतः परिसंख्येति गीयते । तत्राद्याया भाष्यवार्त्तिकोक्तं सिद्धान्ते उदाहरणं नास्त्येव । पूर्वपक्षे तु गृहमे-धीये पञ्चमे पक्षेऽस्ति । भाष्यकारान्तरमते तु सिद्धान्तेऽपि क्व चि-दङ्गीकृता । यथा दशमे ऽङ्गिरसां द्विरात्रे श्रुतं "वैखानसं पूर्वे ऽहन्साम भवति षोडश्युत्तर" इति । तत्र द्विरात्रोक्तमाद्यानामतिरात्रसंस्थत्वात्प्र-कृत्यतिरात्रतः षोडशिविकल्पे प्राप्ते उत्तरेऽह्न्यतिरात्रस्य गृह्यत इति वा-क्यान्तरेणानारभ्याधीतेन नियतषोडशीत्युत्तर इत्यनेनाङ्गिरसां द्वि-रात्र एव परिसंख्यायते तेन द्विरात्रान्तरे विकल्प इति भाष्यकारा-न्तरोक्तः सिद्धान्तः ।

शबरस्वामिभिस्तु परिसंख्या नाङ्गीकृता त्रिदोषत्वात् । वैखा-नसविधेस्त्वयमर्थवादः षोडश्युत्तर इतीत्यङ्गीकृतमिति । सप्तदशारत्निज इत्यपि न प्राप्तपरिसंख्या । यद्यपि न वा परिसंख्यानादिति ( अ० ३ । पा० ७ । सू० ३३ । ) सूत्रकृता तत्र परिसंख्यात्वमेवोक्तं भाष्यकृता च तथैव व्याख्यातम् । तथापि वार्त्तिककृताधिकरणान्ते सप्तदशश्रुते-रुपसंहारार्थतैवोक्ता । तदेतदुपपादितमस्माभिः शास्त्रदीपिकाप्रकाशे ।

तस्मात्प्राप्तपरिसंख्योदाहरणं स्मार्त्तमेव " पञ्च पञ्चनखा भ-क्ष्या " इति । अप्राप्तपरिसंख्योदाहरणं त्विमामगृभ्णन्निति ।

पुनः परिसंख्या द्विविधा क्रत्वर्था पुरुषार्था च । पूर्वोक्तानि श्रौतान्याद्योदाहरणानि ।

द्वितीयोदाहरणं तु स्मार्तमेव "पञ्च पञ्चनखा भक्ष्या" इति ।

पुनः परिसंख्या द्विविधा दृष्टार्था अदृष्टार्था च । तत्रेतरनिवृत्त्यंशः सर्वत्राप्यदृष्टार्थ एव । विधेयांशस्तु क्व चिद्दृष्टार्थः । क्व चिददृष्टार्थः । आद्यो यथा इमामगृभ्णान्पञ्च पञ्चनखा भक्ष्याः त्रीणि हवे यज्ञस्योदराणीति । मन्त्रभक्षणावापोद्वापानां दृष्टार्थत्वात् ।

अदृष्टार्थोदाहरण तु गृहमेधीये "पञ्चमे पक्षे "इति । पुनरपि परिसंख्या द्विविधा नियमतस्तत्र चान्यत्र च प्राप्तावनियमतस्तत्र चान्यत्र च प्राप्तौ चेति । तत्राद्योदाहरणमिमामगृभ्णन्नित्यादि श्रौतम् ।

द्वितीयोदाहरणं तु स्मार्तं पञ्च पञ्चनखा भक्ष्या इति।पुनरपि विधिर्नवविधः । अध्याहारेण विपरिणामेन व्यवहितकल्पनया व्यवधारणकल्पनया गुणकल्पनया ऽनुषङ्गेण यदिशब्दपरित्यागेन द्व्यध्याहारेण हेतुहेतुमतोर्लिङिति तत्राद्याः पञ्चार्थवादाधिकरणपूर्वपक्षे आशङ्कामिषेण भाष्यएवोक्ताः ।

अथोच्यत अध्याहारेण वा विपरिणामेन वा व्यवहितकल्पनया वा व्यवधारणकल्पनया वा गुणकल्पनया वा कश्चिदर्थः कल्पयिष्यतइति । अनुषङ्गस्त्वनुषङ्गाधिकरणे ( अ० २ । पा० १ । अ० १६ । ) सिद्ध । यदिशब्दपरित्यागादयस्तु त्रयो रथन्तराधिकरणपूर्वपक्षे ऽवेष्ट्यधिकरणसिद्धान्तोपयोगितया भाष्ये वार्तिके ( अ० २ । पा० ३ । अ० २ ) चोक्तं । यदिशब्दपरित्यागो द्व्यध्याहारकल्पनाव्यवधानेन संबन्धो हेतुहेतुमतोश्च लिङिति । अत्र व्यवधानेन सम्बन्ध पूर्वोक्ताव्यवहितकल्पनैव । यदिशब्दश्च यच्छब्दादेरप्युपलक्षणमिति नवैव भेदाः । तत्राद्यचतुष्टयलक्षणार्थः प्राचां सार्धश्लोकः ।

> अध्याहारो ऽश्रुताक्षेपो व्यत्यासो व्यवधिः पदैः ।
> मतो विपरिणामो ऽसौ प्रकृतिप्रत्ययान्यथा ॥
> वाक्यान्यथात्वकरणं व्यवधारणकल्पनेति ।
> तत्राध्याहारोदाहरणं, यथा विश्वजिता यजेतेति ।

अत्र हि चतुर्थे स्वर्गकामपदाध्याहार उक्त. । व्यवहितकल्पना यथा रात्रिसत्राधिकरणे प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्तीत्यत्र ये प्रतितिष्ठन्ति ते एता रात्रीरुपयन्तीत्यन्वयकल्पनादुक्ता । विपरिणामस्याप्येतदुदाहरणं प्रतितिष्ठासन्ति उपेयुरिति विपरिणामोक्तेः ।

व्यवधारणकल्पना यथा वेदोपक्रमे "उच्चैर्ऋचा क्रियत" इत्यत्रो-

पसंहारे वेदविषयत्वकल्पना वाक्यपादाद्ये उक्ता । तथाश्वप्रतिग्रहेष्ट्यधिकरणे दानविषयोपक्रमबलेन यावतो ऽश्वान्प्रतिगृह्णीयादित्युपसंहारस्य प्रतिग्राहयेदिति दानविषयत्वकल्पनोक्ता । नन्वाद्ये व्यवधारणकल्पनोदाहरणं गुणकल्पनैवास्ति द्वितीये प्रकृतिप्रत्ययान्यतरस्यान्यथात्वाद्विपरिणाम एवेति को भेदो व्यवधारणकल्पनायाः यदपि तल्लक्षणं वाक्यान्यथात्वकरणमिति तदपि वाक्यार्थस्यान्यथात्वकरणेन तच्च प्रतितिष्ठन्तीति विपरिणामोदाहरणे ऽप्यविशिष्टम् । यदि तु विपरिणामव्यावृत्त्यै वाक्येनैकवाक्यताप्रसङ्गेनोपक्रमेणान्यथात्वं व्यवधारणकल्पनालक्षणम् । प्रतितिष्ठन्तीति विपरिणामे तु वर्तमानस्यापाद्युपेयुरिति चाग्रिमफलापेक्षितविधेयैकवाक्यत्वादेव चान्यथात्वं न केन चिदुपक्रमेणेत्युच्यते । तदपि न ।

फलचमसवाक्ये हि " यदि राजन्यं वा वैश्यं वा याजयेदि" त्युपक्रमात्तमस्मै भक्षं प्रयच्छेदित्युपसंहारे तेन यजेतेति कल्पनाङ्गाऽप्ये च सैषा व्यवधारणकल्पनायुक्तिर्निर्विवादा व्यवधारणकल्पना । वार्त्तिके तु तदधिकरणान्ते एतेन पूतीकानभिषुणुयादित्यादीनि व्याख्यातानीत्युक्तेर्यदि सोमं न विन्देत पूतीकानभिषुणुयादित्यस्याप्युदाहरणतोक्ता तत्र यागोपक्रमाभावादव्याप्तिः स्यात् उच्यते ।

यदि सोमं न विन्देतेत्युपक्रमादेव तत्रापि पूतीकानां यागसाधनता कल्प्यते । यागसाधनीभूतः सोमो यदि न लभ्येतेत्युक्ते हि इदमवगम्यते । किं चिदत्र यागसाधनं विधित्सितमग्रे ऽस्तीति । अन्यथा सोमालाभेऽकिंचनविधिरेव स्यादिति । गुणकल्पना यथा "स्वधीयपद्धाति प्राणभृत उपदधाती"ति । पूर्वपक्षे लिङ्गा अप्युत्तरत्र प्राणभृच्छब्दोपेता अपि मन्त्रा गौण्या वृत्त्योक्ता विधीयन्ते इति । तथा "श्येनचितं चिन्वीत स्वर्गकाम "इति प्रकृतचयनाश्रितः श्येनसादृश्यं गुणः फलाय विधीयते । अत्र हि 'कर्मणि हन' इत्यत उपपदार्थे कर्मणीत्यनुवर्तमाने 'कर्मण्यग्न्याख्यायामि'ति कर्मणि क्विब्विधेः श्येनं चीयमानमिति प्रतीतिः सामानाधिकरण्योपपत्त्यै श्येनसदृशमिति गौण्या कल्प्यते । पुरुषार्थोदाहरणं त्वेतत् ।

अनुषङ्गेण विधिस्तु द्विविधः- पुरस्तादनुषङ्गः परस्तादनुषङ्गश्च ।

तत्राद्यो यथा "यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेद्यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवमि" त्यत्र ऐन्द्रं वैश्वदेवमित्यतः परं मध्ये निधायेत्याद्यनुषज्यते ।

मधुरूक्‌मन्त्रेष्वधिकरणवार्तिके । राजन्यस्यापि ब्राह्मणवैश्य-पदेव कर्मान्तरेण प्रयोगान्तरेण वा सम्बन्ध इत्युक्त्वा एवं च तस्यापि मध्यनिधानवाक्यं तन्त्रप्रयोगे सत्युपपद्यत इति ।

परस्तादनुषङ्गो यथा । "अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेते"त्यत्र एतेनेत्यादिपूर्ववाक्यत्रये ऽनुषज्यते । यदि शब्दपरित्यागेन विधिस्तु यद्यपि वार्तिके यदि ब्राह्मणो यजेतेत्यत्र उत्तरपक्षोत्थापनाय पूर्वापरितोषमिषेण दूषितः परित्यागाद्वरमध्याहृत्य पूरणमिति मत्वा ।

अथ वा यदि रोचेतेति दर्शयतीति ग्रन्थेन तथापि यदिशब्द-समानार्थकयच्छब्दपरित्यागोदाहरणं यदाग्नेयो ऽष्टाकपाल इत्यादेव यदिशब्दपरित्यागस्थाने ऽभिषिच्योदाहार्यम् । यद्वा वच्यध्याहारसम्भवे यदि शब्दपरित्यागो न युक्तः व्यवधानेन सम्बन्धसम्भवे वच्यध्याहारो ऽप्ययुक्तः हेतुहेतुमल्लिङ्सम्भवे व्यवधानेन सम्बन्धो ऽप्ययुक्त इति वार्तिके उक्तम् । अतो यत्र वच्यध्याहारव्यवहितकल्पनाहेतुमल्लिङ्कल्पनरूपपक्षत्रयं न सम्भवति तद्यदिशब्दपरित्यागे उदाहार्यम् । यथा "यदातुरः स्यान्मनसा वाचा वा संन्यसेदि"ति । अत्र हि यदि रोचेत रथन्तरसामा सोमः स्यादितिवद्यदि रोचेत आतुरः स्यादिति वच्यध्याहारो न सम्भवत्यातुरताया अविधेयत्वात् । एव व्यवधानेन सम्बन्धो न सम्भवति । स हि गृह्णीयादिति लिङः 'काममवेद्मे ऽकवि'तीत्यङ्गीकृत्य यद्यैन्द्रवायवाग्रान्ग्रहीतुमिच्छेद्रथन्तरसामा सोमः स्यात्कार्य इतिवद्यदि मनसा वाचा वा संन्यसितुमिच्छेदातुरः स्यादिति कल्प्येत ।

न चैतत्सम्भवति आतुरताया अविधेयत्वादेव एवं यदातुरः स्यादित्यत्र हेतुहेतुमतोर्लिङिति पक्षो ऽपि न सम्भवति । ऐन्द्रवाय-वाग्रान्ग्रहान्गृह्णीयादिति हेतुमल्लिङ्पक्षे हि ग्रहणरूपफलस्य हेतुः रथन्तरसामा सोमः कार्य इति यदिह मनसा वाचा वा संन्यस्येदिति हेतुमल्लिङ्पक्षे संन्यासरूपफलस्य हेतुरातुरः कार्य इत्यर्थो वाच्यः । न चैतत्सम्भवति । आतुरताया अविधेयत्वादेव ।

न च हेतुलिङ्सम्भवः । तदा हि रथन्तरसामा सोमः स्या-दिति हेतौ लिङ् ग्रहान्गृह्णीयादिति विधावेव । ततश्च रथन्तरसाम-सोमहेतुकं ग्रहाग्रत्वं कार्यमितियदिह यदातुरः स्यादिति लिङ् हेतौ संन्यस्येदिति विधौ ततश्चातुरताहेतुकः संन्यासः कार्य इत्यर्थो वाच्यः ।

न चासौ सम्भवति सोमयागस्य हि शेषित्वात्प्रयोजकत्वा-

चं हेतुत्वं सम्भवति न त्वातुरताया अशोपित्वादनिमित्तत्वाच्च । तस्मादातुरवाक्ये रुच्यध्याहारव्यवधानसम्बन्धहेतुहेतुमल्लिङ्पक्षाणामसम्भवादातुरवाक्यं यदि शब्दपरित्यागस्यैवासङ्कीर्णमुदाहरणमिति ।

रुच्यध्याहारपक्षस्तु यद्यपि वार्तिके यदि ब्राह्मणो यजेतेत्यत्र उत्तरपक्षोत्थापनाय पूर्वापरितोषव्याजेन दूषितः ।

अध्याहारादपि स्वपक्षवृत्तिरेव व्यवहितकल्पनया लघीयसी धर्मेमाश्रयाद्यादिति ग्रन्थेन तथापि यत्र लिङ्द्वयाभावाद्व्यत्ययेन सम्बन्धस्य कामप्रवेदने च गृह्णीयादिति लिङिच्छां प्रत्यापयतीति वार्तिकोक्ततृतीयपक्षस्य हेतुहेतुमतोर्लिङिति चतुर्थपक्षस्य चासम्भवस्तत्र रुच्यध्याहारः सम्भवत्येव । तादृशमुदाहरणं मृग्यम् ।

व्यवहितकल्पनापक्षोऽपि यद्यपि यदि ब्राह्मणो यजेतेत्यत्र वार्तिककृता हेतुहेतुमतोर्लिङिति पक्षसम्भवे निराकृतः । विनैव व्यवहितकल्पनयाऽस्य पक्षो भवत्यलयत्तर इति मन्वानो हेतुहेतुमतोर्लिङित्युपन्यस्यतीति ग्रन्थेन तथापि यत्र हेतुहेतुमतोर्लिङित्यस्य विषयो नास्ति प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्तीति लट्प्रयोगात्तत्र व्यवहितकल्पनोदाहरणं सम्भवतीत्यतः पूर्वमुदाहृतम् । हेतुहेतुमतोर्लिङित्यस्योदाहरणं तु यदि ब्राह्मणो यजेतेत्याद्येव ।

तत्र हेतुः कारणं हेतुमान्फलम् । तथापि विधाद्वयं ब्राह्मणो यजेतेति हेतौ लिङ् अभिघारयेदिति विधावेव । तेनायमर्थः ब्राह्मणकर्तृकयागहेतुकं मध्यनिधानपूर्वकमभिघारणं कार्यमिति । न चाश्रियमाणो यागो हेतुत्वं प्रतिपद्यत इत्यर्थाद्विहितो भवतीति । अथ वा हेतुमत्यभिघारयेदिति लिङ् ब्राह्मणो यजेतेति विधावेव । अनुक्तमपि च यागस्य हेतुत्वं हेतुमदाक्षेपात्संनिधेश्च भविष्यति । तत्रायमर्थः । मध्यनिधानपूर्वकहोमपूर्वकाभिघारणरूपफलहेतुभूतो ब्राह्मणकर्तृको यागः कार्य इति ।

प्रतिषेधोऽपि द्विविधः । प्रत्यक्षः कल्प्यश्च । प्रत्यक्षोऽनेकधा दृश्यते ।

कल्प्योऽपि सप्तधा स्मृतिकल्प्यः आचारकल्प्यः निषेधकल्प्यः अर्थवादकल्प्यः मन्त्रकल्प्यः प्रायश्चित्तकल्प्यो दण्डकल्प्यश्च ।

तत्र स्मृतिकल्प्यो यथा ।

सगोत्रां न परिणयेत्यादिः ॥

आचारकल्प्यो यथा हरिवासरपरिमाणिते काले पारणानिषेधः ।

निषेधकल्प्यो यथा विशिष्टनिषेधाद्विशेषणनिषेध ।

अर्थवादकल्प्या द्विविध स्वतन्त्रार्थवादकल्प्या विध्यन्तरशेषार्थवादकल्प्यश्च । आद्यो ऽपि द्विविध दोषार्थवादकल्प्य सिद्धवत्कीर्तनार्थवादकल्प्यश्च । आद्यो यथा स्मार्ते ।

मिथ्याभिशंसने दोषो द्वि समो भूतवादिन ।
मिथ्याभिशस्तदोषश्च समादत्ते मृषा वदन्निति ॥

द्वितीयो यथा ऽश्वमेधप्रकरणे तस्मा " ब्रह्म जात दशरात्रीनं जुह्वती"ति ।

जातं यागमनुकस्योद्दिष्य तदनन्तरम् " दशरात्रं गौर्न दोह्ये"ति सिद्धवत्कीर्तनान्यथानुपपत्त्या निषेध कल्प्यते । " यदाग्नेयो ऽष्टाकपालो ऽमावास्यायां पौर्णमास्यां चाच्युतो भवती"ति विधिवदिति ।

विध्यन्तरशेषार्थवादकल्प्यो यथा तस्मा"दारुण्यमेनाहनीया"दिति विधिशेषेण न यावत माषान्हविर्गृह्णीत्यनेन माषनिषेध कल्प्यते "उपरि हि देवेभ्यो धारयती"ति विधिवदिति ।

मन्त्रकल्प्या ऽपि निषेधो विधिवद्द्विधा मन्त्रगतस्यैव मन्त्रोक्त वर्तमानापदेशस्य निषेधत्वकल्पनात् निषेधयुक्तवाक्यान्तरकल्पनाच्च । आद्योदाहरणं मृग्यम् ।

द्वितीयो यथा " मा यमन्न विन्दते अप्रचेता " इति ।

प्रायश्चित्तकल्प्यो यथा । तदाहुर्य आहिताग्निर्यदि सूतकान्नमश्नीयात्का तत्र प्रायश्चित्तिरिति सो ऽग्नये तन्तुमते ऽष्टाकपालं पुरोडाशं निर्वपेदि’ति ।

दण्डकल्प्यो यथा कर्मप्रदीपे ।

यजनीये ऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते ।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये ॥

इति नैव दक्षिणा श्रुतिगमभावात् । अत्र च पूर्वदिने ऽन्वाधाने दण्डविधिरेव कल्प्य तेन तु निषेध कल्प्यत इति ।

स्मृत्यादिकल्प्या ऽपि निषेधा यथासम्भव जातिव्यक्तिगुणक्रियाविषयत्वेन चतुर्विध ।

तत्राद्यो यथा श्राद्धे चणकादिनिषेध । मरीचि ।
कुलत्थाश्चणकाः श्राद्धे न देयाश्चैव कोद्रवा इति ।

व्यक्तिनिषेधो यथा श्राद्धएव रोग्यादिनिषेध । याज्ञवल्क्य ।
रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथेति ।

रोग्यादिशब्दस्य यौगिकत्वात् ।

गुणनिषेधो यथा मरीचिः ।

कटुकानि च सर्वाणि विरसानि तथैव चाति ।

क्रियानिषेधो यथा वृद्धमनुः ।

ऋतुकाले नियुक्तो वा नैव गच्छेत्स्त्रियं क्वचिदिति ।

पुनः स्मार्तादिनिषेधो द्विविधः क्रत्वर्थः पुरुषार्थश्च । तत्राद्यो यथा उक्त एव चतुर्विधः ।

पुरुषार्थो ऽपि जातिद्रव्यगुणक्रियानिषेधभेदेन चतुर्विधः । तत्र पुरुषार्थो जातिनिषेधो यथा मसूरादिनिषेधः । यथा हि भोजनाश्रितं प्राङ्मुखत्वं विधीयते न भोजनं एवमत्रापि भक्षणाश्रितं मसूरादेव निषिध्यते न भक्षणम् ।

पुरुषार्थो द्रव्यनिषेधो यथा ।

उच्छिष्टं न भक्षयेदिति । उच्छिष्टशब्दस्य यौगिकत्वेन द्रव्यवाचित्वात् ।

पुरुषार्थो गुणनिषेधो यथा ।

शुक्तं न भक्षयेदिति कालपरिवासजाम्लरसस्य शुक्तशब्दार्थत्वात् । पुरुषार्थस्तु क्रियानिषेधः स्मार्तो यथा मनुः ।

सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ।

तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥

इति । पुनः स्मार्तादिनिषेधो द्विविधः । अदृष्टार्थो दृष्टार्थश्च । पूर्वोदाहृतः सर्वो ऽप्यदृष्टार्थ एव । दृष्टार्थो यथा विवाहे अरोगिणीमित्यादिः । तदुक्तं विज्ञानेश्वरेण रोगिण्यादिषु तु दृष्टविरोध एवेति ।

क्रत्वर्थो ऽपि स्मार्तादिनिषेधो द्विविधः । पुरुषार्थमात्रविषयकः क्रत्वर्थमात्रविषयकश्च । आद्यो यथा श्राद्धव्रतादौ मैथुनादिनिषेधः ।

द्वितीयो यथा श्राद्धे विहितस्यापि मांसस्य निषेधः । कलौ

अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु ।

देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जयेत् ॥

इति निगमः । तथा ।

शामित्रं चैव विप्राणामिति ।

पुरुषार्थस्तु स्मार्तादिनिषेध एकविध एव पुरुषार्थमात्रविषयक इति । क्रत्वर्थमात्रविषयकस्तु नास्त्येवोदाहरणाभावात् ।

पुरुषार्थमात्रविषयकः पुरुषार्थनिषेधो द्विविधः । रागप्राप्तविषयकः विधिप्राप्तविषयकश्च । आद्यो यथोदाहृतो मानवः सुरानिषेधः ।

द्वितीयः यथा षष्ठे ( अ० ६ । पा० १ । अ० ६ ) तस्या बाध-

दुक्तमित्यधिकरणे स्त्रिया अध्ययननिषेध इति ।

प्रत्यक्षो निषेधः । श्रौतः सो ऽपि चतुर्विधः । जातिनिषेधो गुणनिषेधः क्रियानिषेधश्चेति ।

तत्र जातिनिषेधो यथा "तस्माद् बर्हिषि रजतं न देयमि"ति ।

व्यक्तिनिषेधः । श्रौतो यथा नासोमयाजी सन्नयेदिति असोमयाजिपदस्य यौगिकत्वात् । कर्तृनिषेध एव चायं न क्रियानिषेधः । तथात्वे विहितक्रियानिषेधात्तेनैव विकल्पसिद्धौ दशमे तदुत्तमे ऽपनयेदिति प्रतिप्रसववलेन विकल्पोक्तिरयुक्ता स्यादिति ।

गुणनिषेधः श्रौतो यथा । षष्ठे सप्तमपादे आधाने एका देया द्वादश देया इत्यादिविधायाम्नातमपरिमितं देयमिति तत्र पूर्वपक्षितमयं पूर्वोक्तसर्वसंख्याप्रतिषेध इति स्थितोदाहरणं तु मृग्यम् ।

क्रियानिषेधः श्रौतो यथा । "नातिरात्रे षोडशिनं गृह्णाती"ति ।

पुनः श्रौतो निषेधो द्विविधः क्रत्वर्थः पुरुषार्थश्च । तत्र पूर्वोदाहृतश्चतुर्विधो ऽपि क्रत्वर्थः । पुरुषार्थो ऽपि जातिद्रव्यगुणक्रियानिषेधभेदेन चतुर्विधः ।

तत्र पुरुषार्थो जातिनिषेधो यथा षष्ठे ऽनारभ्याम्नातः "न कलञ्जं भक्षयेन्न लशुनं न गृञ्जनमि"ति । अत्रापि जातिमात्रनिषेधो मसूरनिषेधोक्तयुक्त्या ।

द्रव्यनिषेधः प्रत्यक्षो यथा । " न मलवद्वाससा सह सम्वदेदि "ति । मलवद्वासः शब्दस्य यौगिकत्वात् ।

गुणनिषेध पुरुषार्थः प्रत्यक्षो यथा । रजस्वलाव्रतेषु न खर्वेण पात्रेण पिबेदिति परिमाणनिषेधः ।

पुरुषार्थः श्रौतः क्रियानिषेधो यथा "न हिंस्यात्सर्वाभूतानी"ति मञ्जूटीकायां वार्त्तिककृतोक्तः । प्रत्यक्षश्च निषेधः सर्वो ऽप्यदृष्टार्थ एव दृष्टार्थस्तु नास्त्येव ।

क्रत्वर्थश्च श्रौतो निषेधस्त्रिविधः पुरुषार्थमात्रविषयकः क्रत्वर्थमात्रविषयक उभयविषयश्च ।

आद्यो ऽपि द्विविधः रागप्राप्तविषयो विधिप्राप्तविषयश्च ।

तत्राद्यो यथा ।

स्त्र्युपायमांसभक्षादिपुरुषार्थमपि स्थितः ।
प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् ॥

इति व्याकरणाधिकरणउक्तः । विधिप्राप्तपुरुषार्थमात्रविषयः क्रत्वर्थो निषेधो यथा "दीक्षितो न ददाति न जुहोती"ति । तदेतद्दशमे उक्तम् । क्रत्वर्थमात्रविषयको यथोदाहृत एव "नातिरात्रे षोडशिनं

गृह्णाती"ति ।

क्रत्वर्थपुरुषार्थोभयविषयः क्रत्वर्थः श्रौतो निषेधो यथा ।

दर्शपूर्णमासाङ्गे "नानृतं वदे"दि"ति ।

प्रतिषेधो ऽपि "व्रीहिभिर्यक्ष्य" इति सङ्कल्प्य यवैर्यजमानस्य यत्स्यद्व्रीहिसङ्कल्परूपमनृतं क्रत्वर्थं प्रसज्येत तद्विषयो ऽपि भवति, भवति च पुरुषार्थरागप्राप्तानृतवदनविषये ऽपी त्युक्तं तृतीये । अक्रमेक्रतुसंयुक्तं संयोगाद्धित्यानुवादः स्यादित्यत्र (अ० ३ । पा० ४ । अ० ४ ) पुरुषार्थस्तु श्रौतनिषेध एकविध एव पुरुषार्थमात्रविषय इति । क्रत्वर्थमात्रविषयकस्तु पुरुषार्थो निषेधो नास्त्येव उदाहरणासम्भवात् स ह्यनारभ्याधीतो ऽपि न पुरुषार्थः फलकल्पनाप्रसङ्गात् । क्रत्वर्थस्तु युक्तः, क्रत्वव्यभिचारिक्रत्वर्थनिषेधद्वारा क्रतोरुपस्थितेः ।

पुरुषार्थमात्रविषयकः पुरुषार्थः श्रौतनिषेधो ऽपि द्विविधः । रागप्राप्तविषयो विधिप्राप्तविषयश्च ।

आद्यो यथा "न हिंस्यात्सर्वाभूतानी"ति । तथा पञ्चनखभयो"र्न कलञ्जं भक्षयेत्" । तस्माद्यूपो नोपस्पृश्य इत्येतौ रागप्राप्तकलञ्जभक्षणयूपोपस्पर्शननिषेधौ पुरुषार्थावित्युक्तम् ।

द्वितीयो यथा असोमयाजिनः सान्नाय्यनिषेधः सो ऽपि कर्तृनिषेधेन फलितः ।

पुनरपि प्रतिषेधः षोढा । सामान्यप्रतिषेधो, विशेषप्रतिषेधः, प्रतिप्रसवरूपः प्रतिषेधो, अभ्यनुज्ञारूप प्रतिषेधः, उपसंहाररूपः प्रतिषेधः, व्यवस्थारूपः प्रतिषेधश्चेति ।

तत्राद्यो यथा "न हिंस्यात्सर्वाभूतानी"ति ।

द्वितीयो यथा "ब्राह्मणं न हन्यादि"ति ।

तृतीयो यथा न हिंस्यादित्यस्य गां न हन्यादित्यस्य वा गौरनुबन्ध्य इति बाधे प्रसक्ते पुनः कलौ प्रतिप्रसवो ऽक्षतागो पशुश्चेति ।

अभ्यनुज्ञारूपः

प्रतिषेधो यथा । एष पन्था एतत्कर्मेत्यैतरेये ऽपि द्वितीयारण्यके तस्मात्काल एव दद्यात्काले न दद्यादिति । अत्र काले दारिद्र्यावस्थारूपे न दद्यादिति न दाने दोषः प्रतिपाद्यते न हि भोजनमात्रपर्याप्तवतो ऽभ्यतिथ्याद्यागमने तस्मै तद्दत्वा स्वयमनशनं कुर्वतो ऽपि दोषो युज्यते तथात्वे ।

सक्तुप्रस्थस्य यो विप्रा न यज्ञः सदृशो मतः ।

इत्याद्युपाख्यानविरोधात् । तस्मात्काले न दद्यादित्यभ्यनुज्ञैवेति तत्राददत ईषद्दोष इति ।

उपसंहाररूपः प्रतिषेधो यथा ।

मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनादिति सामान्यनिषेधः ।

पृथक् चितिं समारुह्य न विप्रा गन्तुमर्हतीत्यनेन विशेषे उपसंह्रियते । एतदर्थोदाहरणं तु हेमाद्रौ पैठीनसिः ।

वृन्ताकनालिकापौतीकुसुम्भाश्मन्तकाश्चेति शाकानामभक्ष्या इति । तदिदं वृन्ताकसामान्यनिषेधकम् ।

कण्टकं श्वेतवृन्ताकं कुष्माण्डं च विवर्जयेदिति देवलवचनेन विशेषे उपसंह्रियते ।

व्यवस्थितः प्रतिषेधो ऽपि सप्तधा । देशतो व्यवस्थितः, कालतो व्यवस्थितः, कर्तृतो व्यवस्थितः, कर्मतो व्यवस्थितो, निमित्ततो व्यवस्थितः, संस्कार्यतो व्यवस्थितः, फलतो व्यवस्थितश्चेति ।

तत्र देशतो व्यवस्थितो निषेधो यथा ।

कृष्णपक्षादिकं मासं नाङ्गीकुर्वन्ति के चन ।
ये ऽपीच्छन्ति न तेषामपीष्टो विन्ध्यस्य दक्षिणे ॥

इति । त्रिकाण्डमण्डने ।

कालतो व्यवस्थितो निषेधो यथा ।

सायम्प्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कुर्यादिति ॥

कर्तृतो व्यवस्थितो निषेधो यथा नासोमयाजी सन्नयेदिति ।

कर्मतो व्यवस्थितो निषेधो यथा । कातीयसूत्रे ।

प्रजाकामस्य प्रथमसप्तदशाप्यो ऽतिरात्रो नाम प्रथमः ।
ज्येष्ठस्य ज्योतिर्नैयस्य विधुवाघाम द्वितीयः ।
भ्रातृव्यवतो गौर्नाम तृतीयः ।
स्वर्गकामस्याभयाविनो वा आयुर्नाम चतुर्थः ।
ऋद्धिकामस्य ज्योतिष्टोमातिरात्रो नाम पञ्चमः ।
पशुकामस्य विश्वजिदतिरात्रो नाम षष्ठः ॥
ब्रह्मवर्चसकामस्य त्रिवृदतिरात्रो नाम सप्तमः ।
वीर्यकामस्य पञ्चदशातिरात्रो नामाष्टमः ॥
अन्नाद्यकामस्य सप्तदशातिरात्रो नाम नवमः ।
प्रतिष्ठाकामस्य एकविंशातिरात्रो नाम दशमः ।
अप्तोर्यामातिरात्रो नामैकादशः ।
अभिजिदतिरात्रो नाम भ्रातृव्यवतो द्वादशः ।
सर्वस्तोमातिरात्रो नाम बुभूषतस्त्रयोदश इति ।

त्रयोदशानिराशान् वक्ष्यमाणांस्त्रयोदशातिरात्रानित्युपक्रम्य तेषां चत्वारो ऽषोडशिकाः प्रथमा इति सूत्रेण चतुर्ष्वेव व्यवस्थितः षोडशिनिषेधः कृत इति ।

निमित्ततो व्यवस्थितो निषेधो यथा ।
स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतकइति ॥

राहोः राहुसूतकादन्यत्रान्यसूतके स्मार्तकर्मपरित्याग इत्यन्वयाश्रयणात् । नन्वस्यार्थान्तरं पूर्वमुक्तम् । सत्यम् । तथाप्यर्थद्वयबोधकस्मृत्यन्तरगतवाक्यद्वयबलेन तात्पर्यग्राहादस्योभयार्थत्वाविरोधाद्धेमाद्रिणा तथा व्याख्यातम् ।

संस्कार्यतो व्यवस्थितो निषेधो यथा । आश्वलायनसूत्रे होमकर्मेषु परिस्तीर्येति सर्वत्र परिस्तरणं विधाय कृताकृतमाज्यहोमेषु परिस्तरणमित्यकृतशब्देन निषेधोऽन्यत्र व्यवस्थयोक्तः ।

फलतो व्यवस्थितो निषेधो यथा । "यो ब्राह्मणायावगुरेत्तं शतेन यातयेद्यो निहनेत्सहस्रेण यो लोहितं कुर्याद्यावतः प्रस्कन्द्य पांसून्संगृह्णीयात्तावतः संवत्सरान्स्वर्गं लोकं न प्रजानीयात्तस्मान्न ब्राह्मणायावगुरेन्न हन्यान्न लोहितं कुर्यादि"ति । निषेध्यफलान्येव हि निषेधफलानि तेषु चात्र निषेधा व्यवस्थिताः ।

षड्विधो ऽपि चायं सामान्यादिनिषेधः श्रौतस्मार्तादिभेदेन प्रत्यक्षकल्प्यभेदभिन्नः । तत्र तत्रास्माभिर्यथासम्भवं श्रौतस्मार्तोदाहरणान्युक्तानि । तथा क्रत्वर्थपुरुषार्थभेदयोरपि सामान्यादिषड्विधनिषेधेषु सम्भवाद्यथासम्भवं क्रत्वर्थपुरुषार्थोदाहरणान्यप्यस्माभिः क्व चित्कानि चिदुक्तानि इतराण्यपि मृग्याणि ।

यो ऽपि श्रौतः स्मार्तो वा क्रत्वर्थक्रियायाः प्रतिषेध इति प्रतिषेधभेदः पूर्वमुक्तः सो ऽपि क्रत्वर्थक्रियाणां षोडशविधत्वात्षोडशविधः ।

तथा हि प्रकृतौ विकृतौ अप्रकृतिविकृत्यात्मके च कर्मणि समानविधानो निषेधो यथा ।

शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यध इति सर्वत्रोपदिष्टकुदेषु निषेधः । तथा आरादुपकारकक्रियानिषेधः सन्निपत्योपकारकक्रियानिषेधश्च ।

तत्राद्यो ऽपि त्रिविधः । प्रकृतिगतो विकृतिगतो ऽपूर्वकर्मगतश्च ।

तत्राद्यो यथा "न प्रथमयज्ञे प्रवृञ्ज्यादि"ति ।

विकृतिगतो ऽपि द्विविधो ऽतिदिष्ट-विषय उपदिष्टविषयश्च ।

आद्यो यथा " न तौ पशौ करोतीत्याज्यभागनिषेधः ।

वैकृतोपदिष्टारादुपकारकविषयो निषेधो यथा । कातीयसूत्रे अग्नीषोमीये पशौ "स्वाहा देवेभ्यः" "देवेभ्यः स्वाहा" इतिमन्त्राभ्यां परिपशव्ये आहुती आरादुपकारिके सञ्ज्ञपनपूर्वापरकालयोर्विधाय न चैते जुहोतीति निषिद्धे ।

अपूर्वकर्मण्युपदिष्टारादुपकारकक्रियानिषेधो यथा दाशमि-क अग्न्याधेये वारवन्तीयादिसामगानं निषिध्यते " न ब्रह्मा सा-मानि गायती"ति । अत्र ब्रह्मणः सामगानस्याप्राप्तेरनुवादमात्रत्वात् सा-मगाननिषेधासिद्ध्या सामगानमित्याद्यङ्गानुवादमात्रस्यानर्थक्या-त्सामगाननिषेधपर्याय ब्रह्मशब्दस्तु ब्राह्मणपरोऽनुवाद इत्युक्तं दशमे ।

सन्निपत्योपकारकक्रियानिषेधोऽपि त्रिविधः । प्रकृतिगतो विकृतिगतः प्रकृतिविकृत्यात्मककर्मगतश्च ।

तत्र प्रकृतिगतसन्निपातिक्रियानिषेधोऽपि द्विविधः । अदृष्टार्थविषयो दृष्टार्थविषयश्च ।

दृष्टार्थविषयोऽपि द्विविधः । प्रतिपत्तिभिन्नद्रव्यसंस्कारविष-यः प्रतिपत्तिविषयश्च ।

एवमेवापूर्वकर्मगतोऽपि त्रिविधः । विकृतिगतोऽप्येवमेव त्रिविधः ।

स तु त्रिविधोऽपि विकृतिगतो निषेधः पुनर्द्विविधः । उप-दिष्टविषयोऽतिदिष्टविषयश्च । तदेवं द्वादशनिषेधभेदाः सिद्धाः ।

तथा तु द्वादशानामुदाहरणानि दर्श्यन्ते ।

तत्र प्रकृतिगतसन्निपात्यदृष्टार्थक्रियानिषेधो यथा ।

मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च ।

नाच्छिष्टो भवति द्विज इति । सोमे पुनरुच्छिष्टत्वेनादृष्टार्थ-स्य सन्निपातिन आचमनस्य निषेधः ।

प्रकृतिगतप्रतिपत्तिव्यतिरिक्तदृष्टार्थसन्निपातिक्रियानिषेधो य-था । अग्निहोत्रहोमे हुतेऽग्निमुपतिष्ठत इति विधाय तस्मान्नोपतिष्ठेते-ति शतपथे दृष्टार्थाग्निसंस्कारकसन्निपात्युपस्थाननिषेधः ।

प्रकृतिगतप्रतिपत्तिनिषेधो यथा अग्निहोत्रहवण्याश्च लेह इति फलौ निषेधः ।

अप्रकृतिविकृत्यात्मककर्मगतसन्निपात्यदृष्टार्थक्रियानिषेधो य-था कातीये ऋतुनक्षत्रसम्भारसामवपनचातुष्प्राश्यजागरणेध्मपू-र्वोर्ध्वान्वारम्भणसार्पराज्ञीर्न वा कुर्यादिति वपननिषेध आधाने ।

अप्रकृतिविकृत्यात्मककर्मगतप्रतिपत्तिव्यतिरिक्तदृष्टार्थसन्निपातिक्रियानिषेधो यथा अनन्तरोक्तकालीयसूत्रगतएव रात्रौ पदार्थरक्षणार्थत्वेन दृष्टार्थस्य सन्निपातिनो जागरणस्य निषेधः।

अप्रकृतिविकृत्यात्मककर्मगतप्रतिपत्तिनिषेधो यथा।

आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेत्याधानकर्तृसंस्कारास्तच्छरीरप्रतिपत्तिरूपो विहितस्तस्यात्महनने निषेधो भविष्योत्तरे।

स्वेच्छया मरणं विषादित्यादिनात्मघात्यादीनुक्त्वा न तेषां स्नानसंस्काराविति संस्कारशब्देन दाहो निषिद्धः।

विकृतिगतोपदिष्टादृष्टार्थसन्निपातिक्रियानिषेधो यथा ऽतिरात्रे षोडशिग्रहणनिषेधः।

पशुसोमाधिकरणे क्रमसमुच्चयदर्शनोपपत्त्यै ग्रहयागानामदृष्टार्थत्वोक्तेः।

तथा शतपथे ऽग्नीषोमीये पशौ तदाहुर्नोपकुर्यात्साग्निं मन्थेदित्युपाकरणनिषेधः।

तथा कल्पसूत्राधिकरणे। अन्यार्थैर्ब्राह्मणैरन्यान् ज्ञापयन्त्यर्थनिर्णयानिति वार्त्तिकव्याख्याने न्यायसुधाकृतोक्तं प्राश्य घृतं शंसेयथा ह्यग दृष्टमनो वा रथो वा ऽक्तो वर्तत एवं हैवाक्तो वर्ततइति घृतप्राशनविधिशेषभूतब्राह्मणज्ञापितः

आचमननिषेध आश्वलायनसूत्रे। नाचामेद्विज्ञायते देवरथो वा एष यद्धोता नाक्षमद्भिः करवाणीति।

सो ऽयं निषेधः आचान्तेन कर्त्तव्यमित्यनेन क्षुताद्विनिमित्तकस्यैवोद्दिष्टनिमित्तकस्यापि विहितस्य।

स च विधिरतिदिष्टेष्वप्यङ्गेषु शस्त्रादिषु उपदेशत एव प्रवर्त्तते न द्विरुक्तताप्त्यापादितिदेशतः कर्त्तव्यत्वेनोद्दिश्याचमनविधानात् कर्तव्यतायाश्चातिदिष्टेष्वप्यौपदेशिकत्वात्। अन्यथा चैक एवाचमनविधिर्विकृतौ प्रधानांशे औपदेशिको ऽङ्गांशे त्वातिदेशिक इति वैरूप्यमापद्येतेति।

विकृतिगतदृष्टार्थप्रतिपत्तिव्यतिरिक्तसन्निपातिक्रियानिषेधो यथा शतपथीयः पूर्वोक्तो ऽग्नीषोमीयपशौ विहितस्याग्निमन्थनस्य निषेधो नाग्निं मन्थेदिति।

विकृतिगतोपदिष्टप्रतिपत्तिनिषेधो यथा भागावदानानि क्लोमं प्लाशं हृदं यजमानाय पुरीततमध्वर्यवेइत्यादीनि तान्यनारभ्य विहितानि अग्नीषोमीयमायातानीति कर्कोक्तेः।

पुनस्तेनोक्तं शाखान्तरे अग्नीषोमीये प्रतिषेधाद्विकारपशुनुपग-

च्छन्तीति । तेन निरूढे उपदेशादेव प्राप्तानि तेषां निरूढ एव निषेधः ।

शतपथे क्लोमप्लीहाध्यूध्नीपुरीततं चेच्छाश्निति । अत एव तत्र विकल्प इति ।

विकृतिगतातिदिष्टोद्दिष्टार्थसन्निपातिक्रियानिषेधो यथा । वाजसनेयिमते ।

पूर्णमासविकृतित्वेन संमतेषु दर्विहोमरूपेष्वपि त्रैयम्बकहोमेषु शतपथे श्रूयते ते वा अक्ताः स्युः तस्मादनक्ता एव स्युरिति स सो ऽयं प्राकृतस्याञ्जनस्य निषेधः । अत एव तन्मूलकं कात्यायनसूत्रम् अक्तान्येति ।

अतिदिष्टदृष्टार्थसन्निपातिनिषेधो यथा । पृषति वा एतदृचो ऽक्षरं यदेनदूहति तस्मादृचं नोहेदित्यूहनिषेधात्प्राकृतयाज्यानुवाक्यावृजनिषेधः ।

विकृतिगतातिदिष्टप्रतिपत्तिनिषेधो यथा पिण्ड्यायां शतपथे तासु ःहूयावेव जिघ्रन्ति न प्राश्नन्तीति मन्थस्येडोपह्वानानन्तरमवघ्राणं विधाय प्राशनं निषिद्धम् । अत एव कर्केणोक्तं न प्राश्नन्तीति प्रतिषिध्य प्रतिप्रसवः प्राशितव्यं स्येव वयं मन्यामहइतीति । न स्वेतद्युक्तम् । न गिरागिरेति ब्रूयादितिवन्निषेधानुवादस्यावघ्राणस्य प्राशनस्थानापत्त्यर्थत्वात् । निषेधानुवादं विनापि वा स्थानापत्तावघ्राणप्राशनविधिभ्यामेव विकल्पसिद्धौ निषेधस्यैयर्थ्येन तस्यावघ्राणपक्षे·मित्यानुवादमात्रत्वात् । अतो ऽन्यदुदाहरणं मृग्यम् ।

ननु यथा ऽपूर्वविधिर्नियमविधिः परिसंख्याविधिरिति विधित्रैविध्यमुक्तमेवमपूर्वनिषेधो, नियमरूपो निषेधः, परिसंख्यारूपो निषेध, इति निषेधत्रैविध्यं कस्मान्नोक्तम् ।

न चोदाहरणासम्भवान्नोक्तमिति वाच्यम् । उदाहरणोपपत्तेः । तथा हि । अपूर्वनिषेधोदाहरणं ताव"न्नातिरात्रे षोडशिनं गृह्णाति" "दीक्षितो न जुहोती"त्यादि । अत्र यद्यपि षोडशिग्रहणादिस्वरूपं विध्यन्तरेण प्राप्तं तथाप्यनिष्टसाधनत्वमपूर्वं बोधयन्त एते ऽपूर्वनिषेधा स्युः । यथाग्निहोत्रस्योत्पत्तिविधितः स्वरूपप्राप्तावपि तस्येष्टसाधनत्वमपूर्वं बोधयन्नग्निहोत्रं जुहुयात्स्वर्गकाम इति फलविधिरपूर्वविधिरिति ।

नियमरूपनिषेधोदाहरणं तु । अभिषवणफलके प्रकृत्य श्रुतं न सन्तृणत्ति असन्तृण्णे हि हनू इति । अत्र हि सन्तर्दनासन्तर्दनयोरन्यतरेणाप्यभिषवसिद्धेराक्षेपत उभयोः पाक्षिकप्राप्तौ सन्तर्द-

ननिषेधो सन्तर्दिनं नियमवत्तदप्राप्तिपक्षं पूरयन्नियमनिषेधः स्यात् । परिसंख्यारूपनिषेधोदाहरणं तु वामनपुराणे ।

नन्दासु नाऽभ्यङ्गमुपाचरेत क्षौरं च रिक्तासु जयासु मांसम् ।

पूर्णासु योषित्परिवर्जनीया भद्रासु सर्वाणि समारभेत ॥

इति सामान्यनिषेधे ऽपि विशेषनिषेधः । बृहस्पतिः ।

अमावास्येन्दुसङ्क्रान्तिचतुर्दश्यष्टमीषु च ।

नरश्चण्डालयोनौ स्यात्तैलस्त्रीमांससेवनादिति ॥ तस्मा दपूर्वनिषेधनियमपरिसंख्यारूपनिषेधत्रैविध्यमपि सम्भवति तत्किमिति नोक्तमिति चेत् । उच्यते । परिसंख्यासूत्रं सर्वत्र हि परिसंख्याशब्दादेवकाराद्वा विना न श्रुत्या परिसंख्यानियमो वा बोध्यत इति वार्त्तिकम् ।

तत्र वेदादौ परिसंख्येति कुत्राप्यभावाद्वर्जनबुद्धिः परिसंख्या तद्वाचकः शब्दो नञिति व्याख्यातं न्यायसुधायाम् ।

ततश्च निवृत्त्यर्थो निषेधः सर्वो ऽपि श्रौतपरिसंख्यात्वेनैवोक्तः। तेन प्रवर्त्तकयोर्विध्योरेवापूर्वविधित्वनियमविधित्वे संमते इति न निषेधस्यापूर्वविध्यादिवद्भेदत्रयमुक्तमिति ।

नन्वेवमपि निषेधस्य कथं परिसंख्यात्वम् । तत्र चान्यत्र च प्राप्ते परिसंख्येति कीर्त्यतइति परिसंख्यालक्षणे परिसंख्याख्यविषयस्य तदविषयस्य च प्राप्तौ तदविषयव्यावर्त्तकं शास्त्रं परिसंख्येति परिसंख्यालक्षणोक्तेः ।

निषेधे च स्वविषयस्यैव निषेध्यस्य व्यावृत्तेरिति चेत् न ।

निषेधस्यापि परिसंख्यात्वप्रतिपादकवार्त्तिकानुरोधेन तत्र चान्यत्र चेति वार्त्तिकस्यैवं तात्पर्यमुन्नीयते यस्य कस्यापि कथंचित्प्राप्तस्य प्राप्स्यमानस्य वा व्यावृत्तिफलकं यच्छास्त्रं सा परिसंख्येति । तेन न कश्चिद्दोष इति ।

विधिः प्रतिषेधश्च पुनः प्रत्येकं पञ्चविधः । लिङ्लोट्कृत्यकृत्यार्थपञ्चमलकारभेदात् ।

पञ्चविधो ऽपि विधिः पुनर्द्विविधः श्रौतः स्मार्त्तश्च ।

एवं निषेधो ऽपि द्विविधः श्रौतः स्मार्त्तश्च ।

तत्र श्रौतो लिङ् यथा "ज्योतिष्टोमेन स्वर्गकामो यजेते"ति ।

श्रौतो लोट् "यथा एकधास्य त्वचमाच्छ्यतादि"ति । अयं च मन्त्रगतो ऽपि लोट् विधौ ज्ञेय एकेन प्रकारेण त्वगाच्छेदस्याप्राप्तेः ।

श्रौतः कृत्यो यथा "स्वाध्यायो ऽध्येतव्य" इति । यद्यपि विधौ

कृत्यो न स्मर्यते तथापि प्राप्तविषयप्रवर्तनारूपप्रैषे स्मृतस्य तव्यादे-रप्राप्तविषयप्रवर्त्तनारूपो विधिर्लक्ष्य । तदुक्तम् ।

प्रवर्त्तनस्मृति प्राप्त प्रैष इत्यभिधीयते ।
अप्राप्तप्रेरण सर्वं विधित्व प्रतिपद्यते । इति ॥

विधौ कृत्यार्थतवैप्रत्ययाद्युदाहरणेषु तवैप्रत्ययो यथा । अन्वेतवै अन्वेतव्यम् । केन् अवगाहे । अवगाहितव्यम् । केन्य । शुश्रूषेण्य । शुश्रूषितव्य । त्वन् कर्त्वं हवि कर्त्तव्यम् । एव जातीयका । विधौ श्रौत पञ्चमलकारो यथा समिधो यजतीत्यादि ।

पञ्चमत्वं च लेटो बुधा ज्ञेयम् । अच्प्रत्याहारे यद्यप्येकार एकुस्तथापि लकारानुबन्धकस्य लकारस्याभावादनुबन्धकेषु लकारेषु एकारानुबन्धकस्य लेट पञ्चमत्व लकारानुबन्धभूतेष्वक्षरेषु एकारस्य पञ्चमत्वात् ।

यद्वा धातुसम्बन्धे प्रत्यया इति तृतीये धात्वधिकारे क्रियासमभिहारे लोडिति लोड्विहित । ततश्छन्दसि लुङ्लङ्लिट इति लकारत्रय विहित तता लिङर्थे लडिति लेड्विहित ।

अतस्तृतीयधात्वधिकारे लकारचतुष्टयादुत्तर विहितत्वात्पञ्चमलकारोऽयम् । एतच्च विधानापेक्ष पूरणप्रत्यय अथ "षष्ठीं चितिं चिनुत" इत्यत्र । तदेतत्पञ्चमे प्रतिपादितमिति ।

श्रौत प्रतिषेधे लिङ् यथा । न चतुर्स्त्रिरावर्तिति स्यादिति । श्रौत प्रतिषेधे लोट् यथा । मृग्यम् । श्रौत प्रतिषेधे कृत्यो यथा । "तस्माद् बर्हिषि रजत न देयमि' ति । श्रौत प्रतिषेधे पञ्चमलकारो यथा । "न सत्स्यामि दीक्षिता न जुहोती" त्यादि । श्रौत प्रतिषेधे तवैप्रत्ययो यथा "तस्माद्ब्राह्मणेन न म्लेच्छितवै" इति । तदुक्त व्याकरणाधिकरणन्यायसुधायाम् । एव केन् नावगाहे नावगाहितव्यमिति काशिकायाम् । एव केन्यत्वनौ मृग्यौ । स्मार्त्तो विधौ लिङ् यथा मनु ।

अग्निहोत्र तु जुहुयादाद्यन्ते द्युनिशो सदेति ।

स्मार्त्ते विधौ लोट् यथा । मृग्यम् । स्मार्त्तेविधौ कृत्यो यथा ।

चरितव्यमतो नित्य प्रायश्चित्त विशुद्धय इति ।
तवैप्रत्ययाद्युदाहरणानि स्मृतिषु प्रायो नापलभ्यन्ते ॥

स्मार्त्ते विधौ पञ्चमलकारो यथा । मनु ।

महायज्ञैश्च यज्ञैश्च ब्राह्मीय क्रियते तनु ।
प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ॥

इति । अत्र कर्त्तव्याविधातव्यामित्यर्थं ।

अत्रापि विधौ प्रतिषेधे वा क्रत्वर्थपुरुषार्थभेदसम्भवात्तदुदाहरणान्यपि यथासम्भवं मृग्याणि एवमुत्तरत्रापि ज्ञेयम्। इति विधिनिषेधभेदाः।

इतः परमभिधात्र्यादयः श्रुतिभेदा उद्दिष्टास्तेषामपि भेदा इदानीमभिधीयन्ते।

अभिधात्रीश्रुतिः पञ्चविधा। धातुः, प्रातिपदिकं, कृदादिप्रत्यय, उपसर्गो, निपातश्चेति।

धातुरपि द्विविधः। "भूवादयो धातव" इति विहितधातुसञ्ज्ञः "सनाद्यन्ता धातव" इति च।

प्रातिपदिकमपि द्विविधम्। "अर्थवदधातुरप्रत्ययः प्रातिपदिकमि"ति सूत्रसञ्ज्ञं "कृत्तद्धितसमासा"श्चेति च।

प्रत्ययस्तु चतुर्विधः। सुप्तिङ्कृत्तद्धितभेदात्। उपसर्गनिपातयोस्तु वाचकत्वमित्येकः पक्षः। नञ्सूत्रीयायां नञो निवर्त्तनावाचिरयोक्तेः पर्युदासे च नञो लक्षणोक्तेर्मुख्याभावे च गाव्यादीनामिव लक्षणानुपपत्तेः। तयोर्द्योतकत्वमित्यपरः पक्षः। आकृत्यधिकरणे यदर्थद्योतकौ तौ तु वाचकः स विचार्यतरत्युक्तेः।

द्योतकत्वपक्षेऽपि द्योत्यस्य तदन्वयानुविधानात्तयोर्वाचककल्पनैवेति न श्रुतित्वविघातः पदस्येव प्रकृतिप्रत्ययार्थयोरन्वितयोरभिधानपक्षेऽपि विनियोजकश्रुतित्वाविघातः।

विनियोक्त्रीश्रुतिस्तु अष्टधा।

विधिश्रुतिः परस्मैपदश्रुतिरात्मनेपदश्रुतिः सुबन्ततिङन्ताद्येकपदरूपा योपश्लेषलक्षणेति गीयते। एकप्रत्ययरूपा। कारकविभक्तिः। उपपदविभक्तिषु तादर्थ्यचतुर्थी। शेषषष्ठी चेति।

तत्र विधिश्रुतिर्यथा। यजेतेत्यादौ सा स्वविषयीभूतां भावनामपुरुषार्थरूपं यागमुपेक्ष्य पुरुषार्थरूपे स्वर्गादौ भाव्ये विनियुङ्क्ते।

परस्मैपदरूपा तु श्रुतिस्तृतीये "तथा कामो ऽर्थसंयोगादि" त्यधिकरणे (अ० ३। पा० ८ अ० ५।) सिद्धान्तसाधकतयोक्ता मिथेः। मिनुयादिति परस्मैपदश्रुत्याध्वर्युव्यापारः परार्थः श्रूयते तया श्रुत्या विरोधाद्यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचैः सदा मिनुयादिति तत्सामानाधिकरण्यं कामयतेर्बोध्यत इति।

आत्मनेपदश्रुतिर्यथा ऽऽदधीतेत्यात्मनेपदश्रुत्या ऽऽधानसाध्याग्निसाध्यकर्मफलानामाधातृगामिता भवतीत्युक्तं षष्ठीप्रयोगे पुरुषश्रुतेरित्यधिकरणे तन्त्ररत्ने ऽन्यार्थेनाभिसम्बन्ध इतिसूत्रे। सौर्यादीनां

स्वाधानगतेनात्मनेपदेनाधानकर्तुरेव फलमित्यादिना सुबन्तात्मकैकपदरूपा एकप्रत्ययरूपा च विनियोक्त्री क्रमेण बाध्यबाधकभावेनोक्ते यथा ।

तथा पश्वङ्गमेकत्वं पदश्रुत्या प्रतीयते ।
समानप्रत्ययश्रुत्या बलीयस्या क्रियाङ्गतेति ॥

तिङन्तात्मकैकपदरूपा विनियोक्त्री श्रुतिर्यथा । यजेतेत्यादिका श्रुतिर्भावनायां धात्वर्थस्य करणत्वं प्रतिपादयति । एकप्रत्ययरूपा तु श्रुतिर्यथा पशुनेति प्रागुक्ता सुप्रूपा, यजेतेति तिङ्रूपा च तथा हि कर्त्रेकत्वादिसंख्या भावनायां विनियुज्यते श्रुत्या । अत्र च तौतातितमते अभिहितान्वय उत्सर्गः । तद्यथाख्यातस्यानेकार्थकप्रत्यये कर्त्रेकत्वविधिभ्यामन्वितायाः भावनायास्तिङि सुपि च पशुनेत्यादौ एकत्वलिङ्गाभ्यामन्वितस्य करणादिकारकस्य देवतातद्धिते च देवतया ऽन्वितस्य द्रव्यस्याभिधानाङ्गीकारात् । तदुक्तं तन्त्ररत्ने पदैकत्वाधिकरणे (अ० ४। पा० १। अ० ५) किं चैकेनाभिधानेन युगपदभिधीयमाने सख्या कारके मिथो ऽन्विते एवाभिधीयेते अन्यथा युगपदभिधानायोगादक्षादिशब्देष्वदर्शनादतो ऽभिधानादेव कारकतया प्रतीयमानस्यैकत्वस्य क्रियार्थत्वं श्रौतमेवेति । न्यायरत्नमालायां चाङ्गनिर्णये उक्तम् ।

यत्रानेकार्थाभिधानमेकेन शब्देन युगपत् भवति विभक्त्येव लिङ्गसंख्याकारकाणां तत्र तेषामन्वितानामेवाभिधानम् । अनन्वितानामनेकेषामर्थानामेकेन शब्देन युगपदभिधानस्यैकशेषमन्तरेणासम्भवात् अक्षशब्देनेव विदेवनादीनाम् । अन्यथा गामानयेति वचां को विद्वत्किमक्षमानयेति नियुक्तो विदेवनादीनामन्यतममानयेत्स सन्दिहीत सन्दिग्धे च किं परो ऽयं प्रयुक्त इति । तस्मादन्विता ऽभिधानम् ।

तत्रापि प्रतीतिबलेन कारकं प्रधानम् लिङ्गसंख्ये गुणतः सुपि तिङ्यपि भावनाप्रधानं कर्तृसंख्यादिगुणभूतम् । देवतातद्धिते द्रव्यं प्रधानं देवतागुणभूतेत्यादि । तथा चोक्तमभियुक्तैः । यदा कर्मादयो विभक्त्यर्थास्तदैकत्वादयो विशेषणत्वेनेति । तथा भावप्रधानमाख्यानमिति । अन्विताभिधानवादान्ते तु मत्वर्थीयान्तेष्वप्यन्विताभिधानमुक्तम् । मत्वर्थीया अपि विशिष्टमेवाभिदधति न हि तेषां वाक्यान्तरं निरूप्यते हिरण्यमालिन ऋत्विज इत्यत्र विशेषणभूता हिरण्यमाला तावत्प्रकृत्यैवोक्ता ऋत्विजो ऽपि विशेष्याः स्वशब्देन मतुप्तु किमभिदध्यादन्यद्विशिष्टादिति । तत्रैव पदे ऽप्यन्विताभिधानं न

धेति मतद्वयमुक्तम् । तत्र हि कथं तर्हि भाष्यकारेण प्रातिपदिकार्थमुच्चरन्ती द्वितीयाविभक्तिः प्रातिपदिकार्थो विशेषक इत्याहेति प्रत्ययस्यान्विताभिधायित्वमुच्यतइति गुरुमतेन शङ्कित्वाद् द्वेधा समाहितम् ।

अपरपक्षे वा कथं सर्वशब्दानामन्विताभिधायित्वे सति विशेषेण प्रत्ययस्य तत्कथ्यते तेन ग्रन्थानुगुण्याच्छब्दान्तराणां स्वरूपमात्राभिधायित्वं प्रत्ययस्य त्वन्विताभिधायित्वमिति व्यवस्थाप्यम् ।

यद्वानेनाप्यन्विताभिधायित्वं प्रत्ययस्य नोच्यते किं तर्हि प्रत्ययेन स्वार्थो ऽभिधीयमानः प्रथमावगतप्रकृत्यर्थानुरक्त एवावगम्यतइति तत्रान्वयव्यतिरेकाभ्यां प्रकृतेः प्रत्ययस्य च स्वस्वार्थे ऽनुरागांशे च प्रकृतिप्रत्ययसमभिव्याहारस्यैव पदान्तरसमभिव्याहारस्यैव पदार्थानुरागे निमित्तत्वं विविच्यते । अतो ऽनुरागांशस्य समभिव्याहारादेव प्रतीतिसिद्धेर्न प्रत्ययस्य तत्र शक्तिः । स तु स्वार्थमात्रमेवाभिधत्ते तदुक्तं शब्दे ।

प्रकृतिप्रत्ययौ ब्रूतः प्रत्ययार्थं सहेति यत् ।
भेदेनैवाभिधाने ऽपि प्राधान्येनैतदुच्यते ॥
नान्यावयवशक्तिभ्यां शक्तिः का चित्पदाश्रया ।
विद्यते यत एकस्माद्विशिष्टार्थगतिर्भवेत् ॥
नित्यं विशिष्टपदार्थे प्रत्ययो यत्प्रवर्तते ।
तत्पूर्वेतरविज्ञातप्रकृत्यर्थविशेषणादिति ॥

अत्र द्वितीयपक्ष एव पारमार्थिक इत्येवं परतया शब्दान्तराधिकरणसिद्धान्तवार्त्तिकं भट्टसोमेश्वरेण व्याख्यातम् । यस्मात्तु प्रकृतिप्रत्यययोः स्वार्थाभिधाने स्मृतेराचाराच्च नित्यं विवक्षितक्रमत्वेन पूर्वप्रयुक्तप्रकृत्यर्थव्यापृतेषु प्रतिपत्तृषु प्रत्ययाः सन्निपतन्तस्तत्कृतानुबन्धमेव स्वार्थं वदन्ति तस्मान्न कदा चित्प्रत्ययार्थः शुद्धो लभ्यते यथोक्तं प्रातिपदिकार्थमुच्चरन्ती द्वितीया विभक्तिः प्रातिपदिकार्थो विशेषक इत्याहेतीति सो ऽयं सुबन्ततिङन्तपदयोरुक्तः प्रकारः । पाचकादिकृदन्ते ऽप्युक्तः ।

पाके तु पचिरेवाह कर्तारं प्रत्ययो ऽप्यकः ।
पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्य चित् ॥ (१)

अयमेव प्रकारो देवतातद्धिते मत्वर्थीयादावपि च सम्भवति । अतः पदश्रुतेर्बलीयस्या विधिश्रुत्या हि भावना अवरुद्धा न यागादिभाव्यमालम्बितुं क्षमेत्यादिः । स्वर्गकामाधिकरणादौ मिथ्यादीनां पदे

(१) केनाप्यभिधीयत इति पाठान्तरम् ।

श्रुतिरयव्यवहारो नान्विताभिधाननिबन्धनः । किं तु विशिष्टाभिधानमात्रनिबन्धनः । न च विशेषणाभिधानं विना कथं विशिष्टाभिधानमिति वाच्यम् ।

विशिष्टग्रहणं नेष्टमगृहीतविशेषणम् ।
अभिधानभिधाने तु न केन चिदिहाश्रिते ॥

इतिकर्त्रधिकरणवार्तिकोक्तरीत्या तदुपपत्तेः । ननु यजेत पशुनेत्यादिपदं विशिष्टाभिधानमात्रायेच्छ्रुतिस्ततः समाख्याया अपि तथौक्याच्छ्रुतित्वापत्तिस्तेन तदधिकरणे तस्याः श्रुतित्वमापद्य पार्क [?] पचिरेवाहेति हरिकारिकोपन्यासेनान्यथानभिधानाच्छ्रुतित्वाभावोक्तिरयुक्ता सत्यमभ्युच्चययुक्तिरेवैषा तत्रोक्ता या स्थितः परं तत्र युक्तियथा अथापि समाख्या सम्बन्धमभिदध्यात्तथापि न सा तत्र प्रमाणमिति सैव श्रुतित्वनिरासहेतुर्मुख्यः । किं च पारार्थ्यसूत्रे प्रमिहितं न श्रुत्यादयः पारार्थ्यमभिदधतीति ब्रूमः किन्तर्हि विधिसहिताः पारार्थ्यं बोधयन्तीत्यादि तेन विध्यभावादपि न समाख्यायाः श्रुतित्वमिति समञ्जसं सर्वम् । एवं प्रत्ययश्रुतिः पदश्रुतिश्च निरूपिता ।

अथ कारकविभक्तिरूपा श्रुतिर्निरूप्यते ।

ननु सुप्तिङ्प्रत्यययोः कारकविभक्तेश्च को भेदो येन सा पृथङ् निरूप्यते उच्यते ।

सुपादिश्रुतिः स्वोक्तानामेवार्थानामन्योन्यं विनियोक्त्री।
कारकविभक्तिस्तु प्रातिपदिकार्थक्रिययोरस्वार्थयोरपि विनियोक्त्रीतिभेदः ।

तत्र कारकविभक्तिरनेकधा। तत्र "कर्मणि द्वितीये"त्यनुशिष्टा व्रीहीन्वहन्तीत्यादिः कर्मणि द्वितीया "तृतीया च होश्छन्दसी"त्यनुशिष्टा यवाग्वा जुहोतीत्यादिः कर्मणि तृतीया। "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनी"त्यनुशिष्टा ग्रामाय यातीत्यादिः कर्मणि चतुर्थी । "कर्तृकरणयो स्तृतीये"त्युदिता " सोमेन यजेत " "ब्राह्मणेन निष्कारणः षडङ्गो वेदो ऽध्येयो ज्ञेयश्चे " त्यादि

करणे कर्तरि च तृतीया।"सञ्ज्ञो ऽन्यतरस्यां कर्मणी"त्युदिता पित्रा पितरं वा सञ्जानीते इत्यादिः

कर्मणि तृतीया । "चतुर्थीसम्प्रदाने" इत्युक्त्वा "मैत्रावरुणाय दण्डं प्रयच्छती"त्यादिः सम्प्रदाने चतुर्थी ।

"क्रियार्थोपपदस्य च कर्मणि स्थानिन"इत्युक्त्वा फलेभ्यो यातीत्यादिः कर्मणि चतुर्थी "मन्यकर्मण्यनादरे विभाषाऽप्राणिषु"त्युक्ता

तत्रैव सैव। "अपादाने पञ्चमी"ति विहितास्तृणान्यपचिनोतीत्यादि-
रपादाने पञ्चमी "करणे च स्तोकार्थकृच्छ्रकतिपयस्यासत्त्ववचनस्ये"-
ति विहिता स्तोकेन स्तोकाद्वा मुक्त इत्यादिः

करणे पञ्चमी। "दिवस्तदर्थस्ये"ति चोदिता शतस्य दीव्यतीत्या-
दि"र्विभाषोपसर्गे"इति च चोदिता शतस्य प्रतिदीव्यतीत्यादिः। "प्रे-
ष्यब्रुवोर्हविषो देवतासम्प्रदाने"इति च विहिता "अग्नये छागस्य हविषो
वपाया मेदसः प्रेष्यानुब्रूही"ति चेत्यादिर्यजेश्च करणे इति च विहिता
आज्यस्य यजतइत्यादिः।

करणे षष्ठी। "चतुर्थ्यर्थे बहुलं छन्दसी"ति चोदिता "पुरुष-
मृगश्चन्द्रमसे गोधाकालकादार्वाघाटस्ते वनस्पतीनामि"त्यादिः।

सम्प्रदाने षष्ठी।

"कृत्वोर्थप्रयोगे कालेऽधिकरण"इति चोदिता पञ्चकृत्वो द्वि-
र्वाह्नो भुङ्क्ते इत्यादिरधिकरणे षष्ठी।

"कर्तृकर्मणोः कृती"ति चोदिता कृष्णस्य कृतिः जगतः कर्ते-
त्यादिः कर्त्तरि कर्मणि च षष्ठी।

"उभयप्राप्तौ कर्मणी"ति चोदिता विचित्रमगोपेन गवां दोह
इत्यादिः कर्मणि षष्ठी।

"सप्तम्यधिकरणे चे"त्युपदिष्टा। "समे दर्शपूर्णमासाभ्यां यजे-
ते"त्यादिरधिकरणे सप्तमी। इति कारकविभक्तिरूपा श्रुतिर्निरूपिता।
तादर्थ्यचतुर्थी यथा सर्वेभ्यो ज्योतिष्टोमः सर्वेभ्यो दर्शपूर्णमासा-
वित्यादिः।

शेषषष्ठी द्विविधा गुणत्वे प्राधान्ये च। तत्राद्या "यथाज्य-
स्यैव तावुपांशु पौर्णमास्यां यजन्नि"त्यादिः।

प्राधान्ये षष्ठी यथा "तिस्र एव साह्नस्योपसदो द्वादशाहीन-
स्ये"त्यादिः।

भट्टसोमेश्वरमते त्वन्या अपि विनियोक्त्र्यः श्रुतयः।

इतिकरणः इषे त्वेति शाखां छिनत्तीत्यादिः। तथा धातुस-
म्बन्धविहितो णमुल् अभिकामं जुहोतीत्यादिः।

तादृश एव क्त्वाप्रत्ययोऽपि तत्रापि द्वयी गतिः पूर्वस्योत्तरा-
ङ्गत्वमुत्तरस्य वा पूर्वाङ्गत्वम्। तत्राद्योदाहरणं यथा। मूलतः शाखां
परिवास्योपवेषङ्करोतीति। उपवेशाख्यस्याङ्गं परिवासनम्।

द्वितीयोदाहरणं यथा। "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते"ति।

एवं तदादेशो ल्यपपि। तस्याधारमाघार्येत्यादिः। एवं "तुमुन्-
ण्वुलौ क्रियायां क्रियार्थायां" "भाववचनाश्च" "अण् कर्मणि चे"ति

विहितास्तुमुनादयः ।

एवं "संख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुजि"ति विहित कृत्वसुच् । एवं "द्वित्रिचतुर्भ्यः सुजि"ति सुच्प्रत्ययो ऽपि "वेदिरसि बर्हिषे त्वे"ति त्रिर्वेदिं प्रोक्षतीत्यादिः ।

एवं लृट् "आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावार-प्स्यमान" इति क्रियार्थायां क्रियायामुपपदे ऽनुशिष्टेन लृटा श्रुत्यैवा-रम्भाङ्गत्वादिष्टेः ।

पार्थसारथिमते तु इतिकरणादिसत्त्वे वाक्यीयो विनियोगो श्रौतः तत्रेतिकरणस्य तावत् तथात्वानमवीति वेदिरयधिकरणे (अ० ३ । पा० २ । अ० ३) सिद्धान्ते श्रुतिरेव निरस्ता शास्त्रदीपिकाया-म् । क्त्वाप्रत्यये तु वाक्यीयमङ्गत्वमुक्तं चतुर्थे तन्त्ररत्ने तच्चाफलं सफलवाजपेयसमभिव्याहृतं वाक्याद्वाजपेयाङ्गमिति ।

तथा चतुर्थ एव उपदेशाधिकरण उक्तम् । न च परिधास्येति क्त्वाप्रत्ययादुपवेषकरणार्थं परिधासनं वाक्यसंयोगाद् बलीयस्या द्वि-तीययेत्यादि ।

यत्तु धातुसम्बन्धविहितश्च क्त्वाप्रत्ययो वाजपेयबृहस्पतिस-वयोरेव सम्बन्धमाचष्ट इति तत्परमतं क्रियान्वयस्य वाक्यार्थस्योपप-त्तौ वाच्यत्वायोगात् । "धातुसम्बन्धे प्रत्ययाः" इति तु साधुत्वान्वाख्या-नमात्रार्थं क्रियान्तरसमभिव्याहार एव णमुलादेः साधुता यथा क्रि-यायोग एव प्रादेरुपसर्गस्येति । अभिक्रमाधिकरणवार्त्तिके ऽपि ( अ० ३ । पा० १ अ० १ ) अभिक्रमणं प्रकृतक्रियामात्राङ्गं होमाङ्गमेव वेति भाष्यकृन्मते संशयमुक्त्वा संयुक्तश्रवणात्तमाक्षिप्य तद्धेतुं वदता कर्मणो ऽमूर्तत्वाद्वाक्येन च सम्बन्धोपादानादिति वाक्यीयम-ङ्गत्वमुक्तं न श्रौतम् ।

तत्रत्यसिद्धान्ते ऽपि सर्वथा तावदभिक्राममित्येतत्पदं न क्रि-यान्तरमन्तरेण निराकाङ्क्षं भवतीत्येवोक्तं न क्रियासम्बन्धं प्र-तीतीति ।

तथा यावज्जीवाधिकरणवार्तिके ( अ० २ । पा० ४ । अ० १ ) यावज्जीवपदाख्यातश्रुतिद्वयस्यासम्भवः । मत्पक्षे भवतस्त्वत्र लक्षणा-वृत्तता भवेदिति यावदव्ययजीवधातुश्रुतिभ्यामेव निमित्तत्वसिद्धान्त उपपादितः न तु णमुल्श्रुत्येति ।

"संख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच्" "द्वित्रिचतुर्भ्यः सुच्" "तुमुन्ण्वुलौ क्रियायां क्रियार्थायामि"त्येता अपि शब्दस्मृतयो "धातुसम्बन्धे प्रत्ययाः" इति वदेव व्याख्येयाः ।

"वेदिरसि बर्हिषे त्वे"ति त्रिर्वेदिं प्रोक्षतीति मन्त्रावृत्त्यानावृत्तिचिन्तार्थकादशाधिकरणे ऽपि क्रियावृत्तौ हि सुच् विधीयतइति ग्रन्थो वाक्यीयक्रियान्वयाशय एव ।

यत्तु नवमे (पा० १ । अ० १०) "अग्नावैष्णवमेकादश कपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमान इत्यारम्भणीयाविधौ लृट्प्रत्ययो ऽपि श्रुत्यैव तादर्थ्यस्याभिधायक इति सिद्धान्ते मिश्रैरुक्तं तत्परमतमेव अतएवाग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इति लृट्श्रुतावेव पञ्चमे ( पा० ३ । अ० ११ ) मिश्रैर्वाक्यीयो विनियोग उक्तः ।

निरपेक्षेण वाक्येन दीक्षार्थेष्टिर्विधीयते इति ।

तन्त्ररत्ने ऽपि परेणाचंद्रनादित्यधिकरणे पञ्चमे (पा० ३ । अ० ११ ) उक्तम् । आग्नावैष्णवो वाक्येन दीक्षिष्यमाणपदसमभिव्याहारेण दीक्षार्थ इति । "सोमेन यक्ष्यमाणो ऽग्निमादधीते"त्यत्रापि वाक्यीयमेवाधानान्तरकालस्य सोमाङ्गत्वं लृटो श्रुतित्वावेव ।

यद्प्यत्र तन्त्ररत्ने यक्ष्यमाण इति च दीक्षिष्यमाण इतिच क्रियार्थायां क्रियायामुपपदे लृट्प्रत्ययः सोमेन यष्टुमित्यर्थ इति तदपि क्रियान्तरयोगएव लृटः साधुत्वोक्तिद्वारा वाक्यीयविनियोगोपपादनार्थमेवेति सङ्क्षेपः ।

एवं "तुमुन्ण्वुलौ क्रियायां क्रियार्थायामि"ति विहितयोस्तुमुन्ण्वुलोर्यत्र प्रयोगः यष्टु याति याजको यातीत्यादिः

एवं तदग्रिमसूत्रेण । "भाववचनाश्चे"त्यनेन क्रियायां क्रियायामुपपदएव विहितानां घञादीनां यत्र प्रयोगः यागाय याति भूतये यातीत्यादिः । एवं तदुत्तरसूत्रेण "अण् कर्मणि च"त्यनेन क्रियार्थायां क्रियायामुपपदएव विहितस्याण्प्रत्ययस्य यत्र प्रयोगः गोदायो व्रजतीत्यादिस्तत्र सर्वत्र वाक्यीय एवान्वयो न श्रौत. । इतिश्रुतिनिरूपणम् । लिङ्गादिभेदास्तु पूर्वमेव निरूपिताः ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीमट्टनारायणात्मजभट्टशङ्करकृते मीमांसाबालप्रकाशे सकलविधिभेदनिरूपणम् ।

अथार्थवादभेदा निरूप्यन्ते ।

तत्रार्थवादस्त्रिविधः । गुणवादः अनुवादः भूतार्थवादश्च । तदुक्तम् ।

विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥

इति । विरोधे प्रमाणान्तरेण अवधारिते प्रमाणान्तरेण निश्चिते । तयोर्विरोधावधारितत्वयोर्हानाभावे (१) ।

तत्र विरोधे गुणवादः स्यादित्यस्योदाहरणं यथा । "धूम एवाग्नेर्दिवा ददृशे नार्चिरि"त्यादि । धूममात्रदर्शनस्यार्चिरदर्शनस्य चार्चिषोऽपि दर्शनेन विरुद्धत्वात् दूराद्भूयस्त्वेन च दर्शने विरोधे सामान्यवाचिनो दृशेरौपचारिकत्वात् ।

अनुवादोऽवधारित इत्यस्योदाहरणं तु नृसिंहाश्रमैरुक्तम् । "अग्निर्हिमस्य भेषजमि"ति तत्स्वाध्यायाध्ययनवेधुर्यादैविध्यात् । अत्र वैदिकानां मन्त्रार्थप्रसिद्धेस्तस्या एव च द्वैतीयकमन्त्राधिकरणे मन्त्रार्थस्याप्रयोजकत्वोक्तेर्विध्यन्तरैकवाक्यत्वाभावाच्च । तस्माद्वायुर्वै क्षेपिष्ठा देवतेत्याद्येव

अनुवादोऽवधारितइत्यत्रोदाहरणम् ।
भूतार्थवादस्तद्धानादित्यत्रौपनिषदा उदाहरन्ति ।

देवताविग्रहभोजनतृप्तिप्रसादफलदातृत्वप्रतिप्रतिपादकानर्थवादान् "प्रजापतिरात्मनो वपामुदखिदत्" । "आहुतिभिरेव हुताद्देवान्प्रीणाति त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयन्ती"त्यादीन् तदयुक्तम् ।

नयमे विग्रहादिपञ्चकनिरासात् । तदेतन्नवमार्थमपक्षे वक्ष्यामः । तस्मादत्र विरोधाभावेऽपि गुणवादाङ्गीकाराद्भूतार्थवादस्तद्धानादित्यत्र ।

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं यत्तत्सुखं स्वः पदस्पदमित्येवोदाहार्यम् ।

इदं च न लक्षणं विशेषणचतुष्टयव्यावर्त्याभावात् किं तु स्वरूपकथनमात्रं विशेषणचतुष्टयेनापि हि सांसारिकसुखवैलक्षण्यमस्य ब्रुवता सुखत्वावान्तरजातिः स्वर्गत्वमुपलक्ष्यते तद्धि दुःखाभिन्नमिदं तु न तथा एवं सांसारिकं राज्यादिसुखं पर्यायवधिप्रमाणाभावाच्छत्रुकृतापहारादिशङ्काग्रस्तम् । इदं त्वर्थवादादिप्रमाणतो वर्षादियावत्कालभोग्यतया प्रमितं न तन्मध्येऽपहारादिशङ्का-

(१) ज्ञानाभावे इ० पु० पा० ।

प्रसम् ।

तथेदमनन्तरमविच्छिन्नं सन्ततं वर्षादिपर्यन्तमितरत्तु न तथा । किं तु सुखदुःखोभयरहितावस्थयाविच्छिन्नम् । यथेदमभिलापमात्रेणोपनीतमुपस्थितेन स्रक्चन्दनवनितादिविषयापेक्षमितरत्तु विषयापेक्षमेव ।

यद्वेदं प्रयत्नानपेक्षाभिलापमात्रोपनीतविषयमितरत्तु प्रयत्नोपनीतविषयमिति । अत एवाकृत्यधिकरणे ।

अस्त्यर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम् ।
अपूर्वदेवतास्वर्गैः सममाहुर्गवादिषु ॥

इति वैयाकरणमतनिरासावसरे तदुक्तदृष्टान्तवैषम्योक्त्यर्थे कार्यसामर्थ्यमिन्द्रादिनिर्मिश्रसुखसन्ततिरिति वार्त्तिके निर्मिश्रसन्ततिपदाभ्यामाद्यतृतीयविशेषणार्थावेव स्वर्गत्वजात्युपलक्षणार्थमुक्तौ ।

तद्व्याख्याने भट्टसोमेश्वरेण तु तद्वार्त्तिकव्याख्यार्थवार्त्तिके केवलमेव सुखमित्युक्ते दुःखामिश्रत्वमेव स्वर्गत्वसामान्योपलक्षणत्वेनोक्तं सन्ततिरूपं तु चिरकालताख्यं दुःखामिश्रत्वेनैवाक्षिप्यते इति वदता अलौकिकसुखविशेषमात्रपरत्वं तदुपात्तमित्युक्तमिति । भूतार्थवादस्तद्धानादित्यत्रोपनिषदो ऽप्युदाहरणं ता अपि हि विध्युपयोगिस्वर्गस्वरूपनिरूपणार्थार्थवादवच्छ्रूयणादिविध्युपयोग्यात्मस्वरूपनिरूपणार्थत्वेन वाक्यशेषा एव । अत एव भावार्थपादे विंशतिमर्थवादभेदान् "तच्चोदकेषु मन्त्राख्या" "शेषे ब्राह्मणशब्दः" इत्येतत्सूत्रद्वयव्याख्याने भाष्ये प्रदर्श्य एतदपि प्रायिकमित्युक्तं तत्सत्यं ज्ञानमनन्तं ब्रह्मेत्यादेरुपलक्षणार्थमित्युक्तं भट्टसोमेश्वरेण ।

एवं "य एवं विद्वान्पौर्णमासीं यजते य एवं विद्वानमावास्यां यजते" इति विद्वद्वाक्यद्वयं दर्शपूर्णमासाभ्यामिति द्विवचनोपपत्त्यर्थसमुदायद्वयसिद्ध्यर्थं "वैश्वदेवेन यजेत" इति च प्राचीनप्रवणे वैश्वदेवेनेत्यतिदेशविधिरेकवचनोपपत्त्यर्थैकसमुदायसिद्ध्यर्थं भूतार्थवादोदाहरणमेव ।

अत एव त्रिभाग एव वेद इत्युक्तम् ।
विध्यर्थवादमन्त्राणामुपयोगो ऽधुनोच्यतेऽस्यादौ ।
भूतार्थवादस्तद्धानादित्यत्रोदाहरणान्तरं यथा ॥

"अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयती"ति ।

अत्र तृतीये उपरि धारणस्यापि हिशब्दलाभेन विधिरि-

त्युक्तम् ।

पुनरप्यर्थवादो ऽर्थश्रियाद्विधः ।

आशीः "सो ऽकामयत प्रजाः सृजेये"ति ।

प्रलापः "न चैतद्विद्मो ब्राह्मणाः स्मो वयमब्राह्मणा वे"ति ।

परिदेवनं "ये मामधुक्षन्त ते मां प्रत्यमुञ्चतेति ।

तथा यावज्जीवाधिकरणे वार्त्तिके ।

"आहिताग्निर्वा एष सन्नग्निहोत्रं जुहोतिन दर्शपूर्णमासौ यज ते या आहुतिभाजो देवतास्ता अनुध्यायिनीः करोतीति परिदेवनसरूपो ऽर्थवाद इत्युक्तम् ।

प्रैषः "अमुतः सोममाहरे"ति ।

"अन्वेषणम् इह वा स इह स" इति ।

प्रश्नः "वेद कर्णायतीं सुर्मिमि"ति ।

प्रतिवचनं विद्येति ।

अनुषङ्गः यद्वल्सेन कण्डूयेत पामनं भावुकाः प्रजाः स्युर्यास्मयते नग्न भावुकाः कृष्णाविषाणया कण्डूयतइति । इह नग्न भावुकाः इत्यत्र प्रजाः स्युरित्यनुषङ्गः ।

इतिकरणबहुलो ऽर्थवादः ।

उत्सृज्यान्नोत्सृज्यामिति मीमांसन्ते ब्रह्मवादिनस्तदूचाहुरुत्सृज्यमेवेति अमावास्यायां च पौर्णमास्यां चोत्सृज्यमित्याहुरेते हि यज्ञं वहत इति ते त्वावनोत्सृज्येदित्याहुर्ये अवान्तरं यज्ञ भेजाते इति ।

इत्याद्युपनिबद्धार्थवादः ।

" देवस्य त्वा सवितुः प्रसव " इति स्फ्यमादत्ते प्रसूत्यै इति विधेर्वाक्यशेषः । अश्विनोर्बाहुभ्यामित्याह अश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै इति ।

आख्यायिकारूपो ऽर्थवादः ।

पुरुषं वै देवाः पशुमालभन्त तस्मादालब्धान्मेध उदक्रामत्सो ऽश्वं प्राविशत्तस्मादश्वो मेध्यो ऽभवदथैनमुत्क्रान्तमेधमत्यार्जत स किं पुरुषो भवत्ते ऽश्वमालभन्त सो ऽश्वादालब्धादुदक्रामत्स गां प्राविशदित्यादि ।

हेतुवन्निगदो ऽर्थवादः ।

"शूर्पेण जुहोती"त्यस्य विधेर्वाक्यशेषः । "तेन ह्यन्नं क्रियत" इति ।

निर्वचनरूपो ऽर्थवादः ।

तद्देनमधिनोद्यद्भ्यो दधित्वमिति ।

निन्दार्थवादः ।

"न ब्रह्मा सामानि गायती"ति निषेधस्यार्थवाद "उपवीता वा एतस्याग्नय" इति ।

प्रशंसार्थवादो ।

"वायुर्वै क्षेपिष्ठा देवते"ति ।

यद्यपि निन्दार्थवादव्यतिरिक्तेषु सर्वेष्वप्यर्थवादेषु प्रशंसार्थत्वमविशिष्टं तथापीह वायुप्रशंसाद्वारा विधेयवायव्यपशुप्रशंसा इतरत्र तु न तथेति भेदः ।

संशयार्थवादः ।

"होतव्यं गार्हपत्येन होतव्यमि"ति ।

विधिकल्पको ऽर्थवादः ।

यजमानसम्मितौदुम्बरी भवतीति ।

परकृतिरर्थवादः ।

"इति ह स्माह बर्कुर्वार्ष्णिर्माषानेव मह्यं पचते"ति तस्मादारण्यमेवाद्नीयादित्यस्य विधेर्वाक्यशेषः ।

पुराकल्पो ऽर्थवादः ।

"उल्मुकैर्हस्म पूर्वे समाजग्मुस्तानसुरा रक्षांसि निर्जघ्नुरि"ति तस्माद् गृहपतेरेवाग्निषु निर्मन्थ्य निर्वपेरन्निति विधेर्वाक्यशेषः ।

अनयोश्च भेदो वार्तिककृतैवमुक्तः एकपुरुषकर्तृकमुपाख्यानं परकृतिः बहुकर्तृकं पुराकल्प इति बहुकर्तृकपदं द्विकर्तृकस्यापि संग्रहार्थमनेककर्तृकमिति व्याख्यातम् । भट्टसोमेश्वरेणार्थवादाधिकरणे द्विकर्तृकोदाहरणं तु "तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्नि"ति ।

व्यवधारणकल्पनार्थवादः । वेतसशाखयावकाभिश्चाग्निं विकर्षतीत्यस्य विधेर्वाक्यशेषः । "आपो वै शान्ताः शान्ताभिरेवास्य शुचं शमयती"ति । यथा शुचेश्चर्चा क्रियते इति यावतो ऽश्वान्प्रतिगृह्णीयादित्यनयोर्व्यवधारणकल्पनाविध्योरुपसंहारगतयोरुपक्रमगतवैदिकपदार्थविषयार्थवादवशेन वैदिकदानविषयत्वं कल्प्यते एवमुपक्रमस्थवेतसावकाविषयविधिवशेनोपसंहारस्थार्थवादगतशुक्शमकत्वं नापां किं तु वेतसावकाविषयमिति कल्प्यते इति ।

तदेवं विवक्षितमर्थवादभेदान्भाष्यार्थवादे मन्त्रोदकेषु मन्त्रा यथा वेदे ब्राह्मणशब्द इत्येतत्सूत्रव्याख्यानावसरे भाष्यकृत् प्रदर्श्य एतदपि प्रायिकमित्युक्तं तत्सर्वं ज्ञानमनन्तं प्रशंसादेरुपलक्षणार्थमिति भट्टसोमेश्वरेण व्याख्यातम् ।

अतो ऽन्ये सम्भवन्तो ये न केचित्केचिन्निरूपिताः ।
भाष्यवार्त्तिककाराद्यैस्तान्भेदानभिदध्महे ॥

तथा हि ।

पूर्वं हेतुवन्निगदो ऽर्थवाद उक्तः । कश्चित्तु हेतुविधिरर्थवादः आतिथ्यायामिडान्तातिथ्या सन्तिष्ठत इतिवचनादनूयाजाभावे ऽप्यष्टावुपभृति गृह्णातीति प्रकृतौ विहितस्योपभृत्यष्टगृहीतस्य चोदकप्राप्तस्य निवृत्त्यर्थं चतुर्गृहीतान्याज्यानि भवन्ति न ह्यत्रानुयाजान्यक्ष्यन्भवतीति चतुर्गृहीते विधीयमाने ऽनुयाजाभावस्य हेतुत्वाभिधानाद्यत्र यत्रानुयाजाभावस्तत्र तत्राष्टगृहीताभाव इति ज्ञायते ।

प्रकृतौ चाष्टग्रहणस्य चतुर्ग्रहणलक्षणार्थत्वद्योतनात्प्रयाजार्थं जुह्वां समानयने नियोगतो ऽर्धमेव समानेतव्यमिति ज्ञायते ।

इदञ्च हेत्वधिकरणवार्त्तिके उदाहरणोक्तौ न च परमार्थतो हेतव इति प्रत्युदाहरणं चतुर्थे वक्ष्यमाणं सूचितं भट्टसोमेश्वरेण व्याख्यातम् ।

तथा पूर्वं वायुर्वै क्षेपिष्ठा देवतेति विधेययागविशेषणदेवताभूतवायुप्रशंसाद्वारा विधेययागप्रशंसेत्युक्तम् ।

कश्चिदर्थवादः साक्षादेव विधेयप्रशंसार्थः ।

यथा प्रजापतिरात्मनो वपामुदखिदत्तामग्नौ प्रागृह्णात्ततो ऽजस्तूपरः समभवत्तेनायजत्ततो वै स प्रजाः पशूनसृजत यः प्रजाकामः पशुकामः स्यात्स एतं प्राजापत्यमजं तूपरमालभेतेति ।

तथा विधेयतद्विशेषणव्यतिरिक्तप्रशंसाद्वारापि विधेयप्रशंसार्थः कश्चिदर्थवादः । यथा दशमे अभिघार्यो त्रैयम्बका नाभिघार्या इति यदभिघारयेद्रुद्रायास्ये पशूनपिदध्याद्यन्नाभिघारयेन्न रुद्रायास्ये पशूनपिदध्यादत्र सर्वे अभिघार्या एव न ह्यनभिघृतं हविरस्तीत्युदाहृतम् ।

तत्रार्थवादाधिकरणे वार्त्तिककारेणोक्तं यन्नाभिघारयेन्न रुद्रायास्ये पशूनपिदध्यादिति स्तुतमप्यनभिघारणं नाश्रयिष्यते इति ।

तथा विधेयव्यतिरिक्तनिन्दाद्वारापि विधेयप्रशंसार्थः कश्चिदर्थवादः ।

सो ऽपि द्विविधः ।

विध्यन्तराविहितस्य प्रकृतविधेयव्यतिरिक्तस्य निन्दाद्वारा, विध्यन्तरविहितस्य प्रकृतविधेयव्यतिरिक्तस्य वा निन्दाद्वारेति ।

तत्राद्यो यथा ।

नवमे यदृचा स्तुवते तदसुरा अन्ववायन् यत्साम्ना स्तुवते

तदसुरा नान्वयायन्य एवं विद्वान्साम्ना स्तुवीतेत्युदाहृतम् ।

तत्रार्थवादाधिकरणे वार्तिककृतोक्तं तत्रान्ते सामविधानात्तत्प्रशंसार्थमृचां निन्देति गम्यतइति ।

द्वितीयो यथा ।

"प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति ये ऽग्निहोत्रं दिवाकीर्त्यमदिवाकीर्त्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषां तस्मादुदिते होतव्यमिति । एवं यथातिथये प्रद्रुतायान्नमाहरेयुस्तादृक्तत्य उदिते जुह्वति तस्मादनुदिते होतव्यमिति । अत्र पूर्वत्रोत्तरविधिविहितानुदितहोमनिन्दाद्वारा उदितहोमस्तुतिः । उत्तरत्र पूर्वविधिविहितोदितहोमनिन्दाद्वारानुदितहोमस्तुतिरिति । तदिदं शाखान्तराधिकरणे ( अ० २ पा० ४ । अ० २ ) उदाहरणद्वयमुदाहृतं भाष्ये ॥ ६ ॥

तथा हेतुविधिपरकश्चित्फलविधिरर्थवादः ।

यथा "प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती"ति ॥ ७ ॥

तथा कश्चिन्निषेधफलार्थवादः ।

यथा तस्माद्ब्राह्मणाय नावगुरेतेति निषेधे यो ब्राह्मणायावगुरेत्तं शतेन यातयादिति वर्षशतयातनारूपं फलं वाक्यशेषात् ॥ ८ ॥

तथा कश्चिद्धेतुविधिसरूपपरफलविधिसरूपो ऽर्थवादः यथा "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती"ति । एतु त्रिस्थायान्त्यौ चतुर्थे ( पा० ३ अ० १ ) निरूपितौ ।

मध्यमस्तु तृतीये शाखे सर्वपरीदानादिति शाख्यधिकरणे निरूपितः ।

तथा कश्चिद्देवताविधिरर्थवादः ।

यथा वाजसनेयिनं देवयाज्ञिको ऽग्नादे वा य एतमात्मनो जनयते यदग्निमिति पूर्णाहुतेर्वाक्यशेषमग्निदेवतापरकमाह ॥ ९ ॥

तथा कश्चिद्देवताविधिसरूपो ऽर्थवादः । यथा ।

"विष्णुरुपांशु यष्टव्यो ऽजामित्वाय प्रजापतिरुपांशु यष्टव्यो ऽजामित्वाय अग्नीषोमावुपांशु यष्टव्यावजामित्वाये"ति शाखाभेदेनोपांशुयाजक्रमे आम्नातैर्वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलैः प्राप्ता विष्णवादिदेवता उपांशुयाजस्तुत्यर्थं कीर्त्यन्तइत्युक्तमुपांशुयाजाधिकरणे ( अ० २ पा० २ अ० ४ ) ॥ १० ॥

तथा कश्चिद् द्रव्यविधिरर्थवादः ।

यथा वासः परिधत्तइति विधौ "एतद्वै सर्वदेवत्यं वासो यत् क्षौममि"ति क्षौमशब्दस्य यौगिकत्वादार्थवादिको द्रव्यविधिः । इदं च

सन्दिग्धेषु वाक्यशेषादित्यधिकरणान्ते भाष्यकारेणोदाहृतम् ॥ ११ ॥

तथा कश्चिद् द्रव्यविधिसरूपोऽर्थवादः ।

यथा महाव्रते प्रेङ्खमारुह्य होता शंसतीति विधौ यदा वै प्रजामह आविशन्ति प्रेङ्खास्तर्ह्यारोहन्तीति प्रेङ्खशब्दस्य यौगिकत्वाद् द्रव्यविधिसरूपोऽयमर्थवादः ।

तदेतदपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्नित्यस्य सदाचारप्रामाण्यप्रतिपादनपरे वर्णके वार्तिककृतोदाहृतम् ।

एतानि वै दशयज्ञायुधानीति च । चतुर्थे ( पा० १ अ० ४ ) हि एतच्छब्दस्य सर्वनाम्नो द्रव्यवचनत्वाभावे स्फ्यादिद्रव्यविधिमाशङ्क्य तन्निरस्यार्थवादमात्रमित्युक्तम् ॥ १२ ॥

तथा कश्चिज्जातिविधिरर्थवादः ।

यथाग्नेये यदष्टाकपाल इति विधितः "संस्कृतं भक्षा" इत्यस्मिन्नर्थे तद्धितोत्पत्तेर्भक्ष्यद्रव्ये प्राप्ते मण्डकादिप्रसक्तौ तं पुरोडाशं कूर्मं भूत्वा प्रसर्पन्तमपश्यन्निति वाक्यशेषः पुरोडाशत्वजातिमात्रप्रापकः । इदमपि सन्दिग्धेषु वाक्यशेषादिति ( अ० १ पा० अ० १८ ) न्यायादेव सिद्धम् ॥ १३ ॥

तथा कश्चिज्जातिविधिसरूपोऽर्थवादः ।

यथा तावभूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति । एतद्धि अप्राप्तपौर्णमासीकालविधिपरत्वादाज्यत्वजातिविधिः किं तु "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यमि"ति प्राप्ताया उपांशुयाजद्रव्यपरिच्छेदकाज्यत्वजातेरनुवाद इत्युक्तं दशमे उपोत्तमे ॥ १४ ॥

तथा कश्चिद् गुणविधिरर्थवादः । यथा " सृष्टीरुपदधाती "ति वार्तिककृन्मते ।

भाष्यकृन्मते उपधानमात्रविधिर्मन्त्रानुवादश्च किं तु उपधानमात्रविधावपि दोषोक्तेर्मन्त्रमात्रविधावपि दोषोक्तेर्विशिष्टविधौ मुख्यानां सृष्टिलिङ्गकानामेव मन्त्राणां विधिप्रसक्तौ यत्सादृश्ये एका उपदधातीतिवाक्यशेषाद् गौणया सप्तदशसंख्याविधिः । तदेतत्सृष्ट्यधिकरणे भट्टसोमेश्वरेणोक्तम् ॥ १५ ॥

तथा कश्चिद् गुणविधिसरूपोऽर्थवादः ।

यथा यदष्टाकपालो भवति गायत्र्यैवेनं ब्रह्मवर्चसेन पुनातीत्यष्टसंख्यार्थविधिसरूपत्वात् । तदिदमुक्तं वैश्वानराधिकरणे ( अ० १ पा० अ० १८ ) ॥ १६ ॥

तथा कश्चित्क्रियाविधिरर्थवादः ।

यथामृताग्निहोत्रे "अधस्तात्समिधं धारयन्ननुद्रवेदिति" विधेयांऽर्थवादः । "उपरि हि देवेभ्यो धारयती"ति । तत्र तृतीये (पा० ४ अ० ५) उक्तं देवेभ्य इत्युक्तेर्यथाग्निहोत्रे जीवदग्निहोत्रे उपरिधारणस्य कथं चिदप्याचारादिना अप्राप्तेर्हिशब्दपरित्यागेन विधिः कल्प्यत इति ॥ १७ ॥

तथा कश्चित्क्रियाविधिस्वरूपो ऽर्थवादः ।

यथा "यो विदग्धः स नैर्ऋतो यो ऽशृतः स रौद्रो यः शृतः स सदेवस्तस्मादविदहता श्रपयितव्यः सदेवत्वाये"ति दर्शपूर्णमासप्रकरणाधीतं वाक्यमेतदुम्बराधिकरणे प्रकरणे (अ० १ पा० २ अ० २) च सम्भवन्नपकर्षो न कल्प्यते विध्यानर्थक्यं हि तं प्रतीति सूत्रे भाष्यकृतोदाहृत्य विधिपक्षे तु यत्र नैर्ऋतस्तत्र विदग्धता नीयेत तथा सति प्रकरणं बाध्यतेति क्रियाविधिर्निरस्त इति क्रियाविधिस्वरूपो ऽयमर्थवादः ॥ १८ ॥

तथा कश्चिन्निमित्तविधिरर्थवादः ।

यथा । अग्नौ श्रूयते "यो वै सम्वत्सरमुख्यमभृत्वाग्निं चिनुते यथा सामिगर्भो विपद्यते तादृगेव तदार्तिमार्छेद्वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेदिति । अत्र चतुर्थे (पा० ४ अ० ६) वैश्वानरश्च नित्यः स्यादित्यधिकरणे सम्वत्सराभरणमर्थवादमात्रमिति नित्यतेति पूर्वपक्षयित्वा कर्तृसमानाधिकरणो यच्छब्दो निमित्ततां सम्वत्सराभरणस्य प्रतिपादयतीति नैमित्तिको वैश्वानरयाग इति सिद्धान्तितम् ॥ १९ ॥

तथा कश्चिन्निमित्तविधिस्वरूपो ऽर्थवादः ।

यथा ज्योतिष्टोमे श्रुतं यां या अध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्च्येते यत्प्राजापत्यं दधिग्रहं गृह्णाति शमयत्येवैनामिति ।

तत्र चतुर्थे (पा० ४ अ० ५) "दधिग्रहो नैमित्तिकः श्रुतिसंयोगादि"त्यधिकरणे देवतान्तरायो निमित्तं पूर्ववद्यच्छब्दादिति पूर्वपक्षिते सिद्धान्तितम् । अकर्तृसमानाधिकरणस्य यच्छब्दस्य निमित्ततापतिपादकत्वाभावादर्थवादमात्रमन्तरायश्रवणमिति नित्यो दधिग्रह इति ॥ २० ॥

तथा कश्चित्कर्तृविधिरर्थवादः ।

यथा षष्ठे (पा० ८ । अ० १) चतुर्होतृसञ्ज्ञकमन्त्रैः पुरुषार्थतया विहिता जपाहोमाश्च चतुर्होतारं प्रयुञ्जीत चतुर्होत्रा प्रजाकामो जुहुयादित्यत्र पूर्वपक्षितं होमा आहवनीये कार्या यथा वा ऽनाहिता-

ष्टेरित्यर्थवादमात्रं जपस्तुत्यर्थम्। इष्टिशब्देन अर्थोक्तेः येषामाहिताग्नेः क्रिया जपात्मिका सेष्टिरिति ।

सिद्धान्तस्तु वचनानर्थक्येष्टिशब्दलक्षणापरिहाराय षष्ठीश्रुत्या ऽनाहिताग्न्यधिकारा होमास्तत्कर्तृका इति ॥२१ ॥

तथा कश्चित्कर्तृविधिस्वरूपः ।

यथा षष्ठे (पा०७।अ०१२) इति हस्माहवदृतुर्वार्ष्णिर्माषानेव मह्यं पचतेति वृष्णिगोत्रैरेव माषपाकः कर्त्तव्यो नान्यैरिति पूर्वपक्षयित्वा निरस्तम् । तदिदं माषपाकविधिकल्पनां कृत्वा चिन्तितम् ॥ २२ ॥

तथा कश्चित्कालविधिरर्थवादः ।

यथा तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति । तदेतद्दशमे । (पा० ८ । अ० १७) उपोपान्त्ये उक्तम् ॥ २२ ॥

तथा कश्चित्कालविधिस्वरूपो ऽर्थवादः ।

यथा अपहतपाप्मानो वा ऋतव इति यदा क्व च न कदा च नोपनमेद्यादधीताथ यजेतेत्यस्य शतपथविधेः शेषत्वेन नव सन्तव्यतिरिक्तक्रतुविधिर्ज्योतिष्टोमे यदा क्व चनेति विहित एव तद्विधिसिद्धेः । इदं च पञ्चमे ( पा० ४ अ० ५ ) स्वकाले स्यादविप्रतिषेधादित्यधिकरणे तत्प्रसङ्गे यदा क्व चनेत्यादेः शातपथवाक्यस्य ज्योतिष्टोमे क्रत्वन्तरविधित्वोक्तेस्तच्छेषस्य कालविधिस्वरूपत्वमर्थादुक्तम् ॥ २३ ॥

तथा कश्चिद्देशविधिरर्थवादः ।

यथा ताण्डके सरस्वत्या विनशने दीक्षन्ते अध्वर्युः शम्यां प्रास्यति सा यत्र निपतति तद्गार्हपत्यः ततः षट्त्रिंशतं प्रक्रमान्प्राक्रामति तदाहवनीयः प्रतीपं यन्ति पूर्वेण पक्षसा यन्ति दृषद्वत्या अप्यये ऽपोनप्त्रीयं चरुं निरूप्यायाति यन्तीति विधाय वाक्यशेषः चतुश्चत्वारिंशदाश्वीनानि सरस्वत्या विनशनात्प्लक्षः प्रास्रवण इति । स तावन्तं देशं याने विदधाति अत एव तदनूद्योपसंहृतम् ।

यदा प्लक्षं प्रास्रवणमागच्छन्त्यथोत्थानं प्लक्षप्रास्रवणमागत्याग्नये कामायेष्टिं निर्वपन्ते तस्यामश्वां च पुरुषीं च धेनुके दत्त्वा कारपचवं (१) प्रति यमुनामवभृथमभ्यवयन्तीति वार्त्तिके तु चतुस्त्रिंशदाश्वीनानीति श्रुत्यन्तरं व्याकरणाधिकरणउक्तम् ॥२४॥

देशविधिस्वरूपो ऽर्थवादो यथा ।

---

(१) यमुनाया देशविशेषवर्णं. ।

षट्त्रिंशत्प्रक्रमा प्राची त्रिंशज्जघनेन चतुर्विंशतिः पुरस्तादिति सौमिकमहावेदिमानविधेर्वाक्यशेषः इयति शक्ष्यामहे ऽस्यां कर्तुमिति । तदेतत्तृतीये (पा० ७ । अ० ३) "चिकीर्षया च संयोगादि"-त्यधिकरणे भट्टसोमेश्वरेणोक्तम् ॥ २५ ॥

तथा कश्चिन्निषेधविध्यर्थवादो यथा ।

ऐतरेयिब्राह्मणे हरिश्चन्द्रोपाख्याने हिरण्य(१)कशिपावासीन आचष्ट इति होतृकर्तृकस्य क्रत्वर्थस्य पुत्रकामाख्यानस्य विधेरस्ति च पुरुषार्थस्य शौनःशेपाख्यानविधेर्वाक्यशेषे नियोक्तारं न विविदुर्विशसितारं न विविदुरिति शामित्रकर्मलाभोक्त्या मह्यमपरं शतं दृत्वाहमेनं विशसिष्यामीति च लोभात्प्रवृत्त्युक्त्या शामित्रे दोषावगतेर्निन्दया तन्निषेधः कल्प्यते ।

यद्यपि चात्र "न हिंस्यादि"ति सामान्यनिषेध ऋत्विजां स्वाधिकारिकः पराधिकारिकेण समाख्यानिकेन कर्तृत्वमात्रतया ऋत्विजः स्पृशतान्यबाधितः प्रवृत्तो ऽस्ति । अत एव तृतीये (पा० ७ । अ० १६) "शमिता च शब्दभेदादि"त्यधिकरणे वार्तिककृतोक्तम् ।

अत एवार्त्विज्यं निन्दन्तीति तथापि विशेषनिषेधो दोषविशेषार्थत्वेनार्थवानेवेति ॥ २६ ॥

तथा कश्चिन्निषेधविधिसरूपो ऽर्थवादो यथा । अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवेधुकाश्चेति । इयामे ह्यनाहुतिरिति निन्दया निषेधकल्पनां पूर्वपक्षयित्वा न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते । अपि तु विधेयं स्तोतुमिति शाखान्तराधिकरणे प्रसङ्गागतेन न्यायेन पयसाग्निहोत्रं जुहोतीति पयोविधिशेषत्वान्न निषेधकल्पनेति सिद्धान्तितम् ॥ २७ ॥

सन्दिग्धार्थोपादाननिर्णायको ऽर्थवादो यथा ।

सारस्वतौ भवत इति विधौ "एतद्वै दैव्यं मिथुनं यत्सरस्वतीसरस्वांश्चेति अत्र सरस्वान्देवता यस्यासौ सारस्वतः अपरो ऽपि तथा ततः सारस्वतश्च सारस्वतश्च सारस्वतौ उत सरस्वान्देवता यस्येत्येकस्तद्धित अपरस्तु सरस्वती देवता यस्येति तद्धितस्ततस्तयोरेकशेष इति सन्दिग्धे स्त्रीपुंसदेवत्य एवायं न पुन्द्वयदेवत्य इति निर्णयो ऽस्मादर्थवादाद्भवति । तदेतत्पञ्चमे (पा० १ । अ० ७) मुख्यक्रमेण वाङ्गानामित्यधिकरणे शास्त्रदीपिकायामुक्तम् ॥ २८ ॥

तथा कश्चित्सन्दिग्धार्थशक्तिग्राहकार्थवादो यथा ।

यवमतीभिरद्भिरौदुम्बरीं प्रोक्षतीति विधेर्वाक्यशेषः यदा वा

---

(१) हिरण्यासनेत्यर्थः ।

अन्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्तीति तदुक्तं "शास्त्रस्था वा तन्निमित्तत्वादि"त्यधिकरणे ( अ० १ पा० ३ । अ० ५ ) ॥ २९ ॥

तथा कश्चिदुपमानार्थवादः ।

यथा "यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेनेति" । तदुक्तं तद्व्यपदेशं चेत्यधिकरणे नामधेयपादे ( अ० १ पा० ४ अ० ४ ) ॥ ३० ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्मजभट्टशङ्करकृते मीमांसाबालप्रकाशे सकलार्थवादभेदनिरूपणम् ।

---

अथ मन्त्रभेदा निरूप्यन्ते ।

मन्त्रोऽपि तावत्त्रिविधः । ऋग्यजुः सामेति ।

एषां लक्षणानि क्रमेण सूत्रैरेवोक्तानि । तेषामृग्यत्रार्थवशेन पादव्यवस्था । गीतिषु सामाख्या ।

शेषे यजुः शब्द इति निगदास्तु यजुर्भेदा एवेत्युक्तं मन्त्रार्थपादे "यजूंषि वा तद्रूपत्वादिति" ( अ० १ पा० १ अ० १३ ) ते चाग्नीदग्नीन्विहरेत्यादयः परसम्बोधनरूपा । अतः परं "तच्चोदकेषु मन्त्राख्ये "त्यत्र सूत्रे ब्राह्मणशब्द इत्यत्र च सूत्रे भाष्यएव प्रदर्शिता अष्टाविंशतिर्मन्त्रभेदा उच्यन्ते । तत्रोत्तरेषां बहूनामर्थप्रयुक्तत्वात्सामस्त्यसम्भवः । वैस्वर्यवत्तु स्वर्ययोरपि वर्णधर्मोदात्तादिरूपत्वेन सामस्त्यसम्भवः । अनुषङ्गस्यापि अपूर्णेषु खल्वनुषङ्ग इति भाष्यादर्थप्रयुक्तत्वात्सामस्त्यसम्भवः । अतः सर्वे ऽपि वक्ष्यमाणा भेदा ऋग्यजुर्मन्त्रगतत्वेन द्विगुणा ज्ञेयाः । अत एव भाष्यकारेण क चिदृङ्मन्त्रा क चिद्यजुर्मन्त्रा उदाहृताः ।

तत्र भाष्योक्तास्तावदष्टाविंशतिर्भेदाः । एवम् तत्र कश्चिद्विधायकः ऋङ्मन्त्रः "पृणीयादित्राधमानायतव्यानि"ति । नाधयां च्यापान्तव्यान्भोज्यान्पदार्थानिति सोमेश्वरः ।

तथा कश्चिद्विधायको यजुर्मन्त्रः यथा "वसन्ताय कपिञ्जलानालभत" इति । एवं विधायकस्य मन्त्रस्य ऋचं यजुश्चेति

द्विविधमुदाहरणं वदतो भाष्यकृतो ऽग्रे ऽपि सर्वत्र द्वैविध्यमाभिमतं तेन यत्र ऋङ्मन्त्र उदाहृतस्तत्र यजुषो ऽप्युपलक्षणम् ।

यत्र च यजुर्मन्त्र उदाहृतस्तत्र ऋङ्मन्त्रस्याप्युपलक्षणं तन्निदर्श्यते ।

कश्चिदस्यन्तो मन्त्रः यथा "मेधो ऽसी"ति ।

तथा कश्चित्त्वान्तो "मन्त्रः यथा इषेत्वे"ति ॥

तथा कश्चिदाशीर्मन्त्रः यथा "आयुर्दा असी"ति ।

तथा कश्चित्स्तुतिरूपो मन्त्रः यथा "अग्निर्मूर्धे"ति ॥

तथा कश्चित्संख्यामन्त्रः।यथा "एको मम एका च तस्ये"ति।

तथा कश्चित्प्रलपितमन्त्र यथा अक्षी ते इन्द्रपिङ्गले कुलेरिवेति । कुलिः कच्छपी ।

तथा कश्चित्परिदेवनमन्त्रः ।

यथा "ऽम्बे ऽम्बिके ऽम्बालिके न मानयाति कश्चन ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीमि"ति सुकल्याणरूपां काम्पीलदेशवासिनीं मां कश्चिन्न नयति कुत्सितो ऽश्वः स्वपितीति स्त्रीयाः परिदेवनम् ।

तथा कश्चित्प्रैषमन्त्रः यथा "ऽग्नीदग्नीन्विहरे"ति ।

तथा कश्चिदन्वेषणमन्त्रः यथा को ऽसि कतमो ऽसि कस्यासि को नामासि यस्य ते नाम मन्महि यं त्वा सोमेनातीतृपाम इति ।

तथा कश्चित्प्रश्नमन्त्रः यथा "पृच्छामि" त्वा परमन्तं पृथिव्या इति ।

अश्वमेधे ब्रह्मोद्ये होत्रादीनां चतुर्णां महर्त्विजां यजमानं प्रति प्रश्नो ऽयम् ।

तथा कश्चिदाख्यानमन्त्रः।यथा "इयं वेदिः परो अन्तः पृथिव्या" इति । तत्र यजमानस्य प्रत्युत्तरमिदम् ।

तथा कश्चिदनुषङ्गमन्त्रः । स तु द्विविधः ।

पुरस्तादनुषङ्गः परस्तादनुषङ्गश्चेति ॥

तत्राद्यो यथा "या ते अग्ने रयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीत्वेषं वचो अपावधीत्स्वाहा" "या ते अग्ने रजाशया या ते अग्ने हराशयेति । पूर्वाह्णापराह्णयोरुपस्यमानमाग्नेयसौम्यवैष्णवयागत्रयमेकोपसत्तथाविधास्तिस्र उपसदस्त्रिदिनं ज्योतिष्टोमे तत्राद्याया अग्निमनीकमित्यस्याः ।क्रमेणाह स्त्र्येकभूतमिदं मन्त्रत्रयम् ।

एतदर्थो ब्राह्मणे ।

अशनापिपासे ह वा उग्रं वचः एनश्च वैरहत्यञ्च तेवर्ष एव इति । एनः उपपापं वैरहत्यं महापापम् ।

परस्तादनुषङ्गो यथा ।

*"चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरि"ति ।*

ऋङ्मन्त्रे ऽप्यनुषङ्ग उक्तो मन्त्राधिकरणे अस्यपत्नात् इन्द्र ऋभुभिरस्मे इत्यृचि उपरितन्यामृचि त्वं तून इन्द्रं तं रयिन्दा इति श्रूयते तदेवास्यामृच्यनुषङ्गेण द्रष्टव्यमिति । अयं च ऋग्द्वये ऽप्यन्वयात्पुरस्तादनुषङ्गयोरुभयोरप्युदाहरणम् ।

तथा कश्चित्प्रयोगरूपो मन्त्रः । स द्वेधा त्रैस्वर्यवांश्चातुःस्वर्यवांश्च ।

तत्राद्यऋङ्मन्त्रो यथा "अग्ने मूलमहा असि य ईमा देवयुंजनम् इयेथ बर्हिरासदामि"ति ।

चातुःस्वर्यवानृङ्मन्त्रो यथा " अग्निमीळे पुरोहितमि "त्यादिः होतमिश्रयोस्तयोः प्रचयत्वात् ।

*त्रैस्वर्यवान्यजुर्मन्त्रो यथा इषेत्वोर्जेत्वेत्यादिः ।*

चातुःस्वर्यवान्यजुर्मन्त्रो यथा " देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण "इति भाष्यकारस्य प्रचयत्वात् ।

तथा कश्चित्सामर्थ्यवान्मन्त्रः यथा "देवस्य त्वेति निर्वापप्रकाशनसमर्थो मन्त्रः ।

तथा " कश्चिदसिमध्यो मन्त्रः यथा इंस्यश्चासि वन्यश्चासी"ति ।

तथा कश्चिद्यामध्यो मन्त्रः यथा "तत्त्वायामि ब्रह्मणा वन्दमान " इति ।

तथा कश्चिदिति करणबहुलो मन्त्रः यथा इति वा इति मे मन इति ।

*तथा कश्चिदित्याहोपनिबद्धः यथा "भगं भक्षीत्याहे"ति ।*

तथा कश्चिदाख्यायिकारूपो मन्त्रः यथा "तुग्रो ह भुज्युमश्विनोदमेघेरयिनं कश्चिन्ममृवां अवाहाः । तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिरिति । तदर्थः । हे अश्विनौ तुग्रो नाम कश्चिद्राजा भुज्युं नाम स्वपुत्रं उदमेघे समुद्रे अवाहाः वाहयामास तिङां तिङो भवन्तीति प्रथमपुरुषार्थे मध्यमः । प्रसिद्ध्यर्थो हकारः । नकार इवार्थे । यथा कश्चिन्ममृवान्मुमूर्षुरपि द्रव्यं समुद्रे वाहयतीति दृष्टान्तः । तं भुज्युमात्मन्वतीभिरुदाभिरन्त-

रिक्षमुद्गिराकारगामिनीभिरपोदकाभिर्निर्जलाभिर्नौभिर्युवामुद्दधुरु-
पारयामासथुरिति ।

तथा कश्चिद्धेतुविधिर्मन्त्रः । यथा "इन्द्रवो वा मुशन्ति हि"-ति । अत्र हि इन्द्र वायू इमे सुता उपप्रयोभिरागतमिति पूर्वार्द्धर्चे हे इन्द्रवायू इमे सोमा अभिषुतास्तांस्तु प्रयोभिरन्नैर्यजमानाय देयैः सह युवामुपागतमित्युक्ते यस्मादिन्दवः सोमा वां युवामुशन्तीच्छन्तीति हेतुः । अत्र चाचेतनानां सोमानामिच्छायोगाद्धननायाश्च विग्रहादिनिरासेनागमनायोगादिच्छया तदुद्देशेन विधिर्लक्ष्यते । आगमनेन तत्कार्यभूतं भक्षणं तेनाप्यदर्शनहेतुभ्यस्तादृश्यादाश्चार्यातं भस्मसात्करणं दाहरूपं लक्ष्यते ।

ततश्च यद्यद्देवतोद्देशेन विहितं तत्तस्मै कार्यमिति दृष्टान्तवचनकल्पनया हेतुविधिने ह्यत्रानुयाजान्यस्पन्नमवतीति परमार्थहेतुविधिरिति भाष्यतात्पर्यमुन्नीयते ।

तथा कश्चिन्निर्वचनार्थो मन्त्रः । यथा "यत्प्रेषिता वरुणेन ताः शीभं समवल्गत तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनुष्ठन"ति । अत्र हि हे आपो यस्मात्ता यूयं वरुणेन प्रेषिताः सत्यः शीभं स्वच्छन्दं समवल्गत सवल्गनमकुर्वतत्तच्चयनीः कुर्वतीर्वो युष्मानिन्द्र आप्नोत्तस्मात्तु अनन्तरम् अपि यूयं भवत तस्तनमनवनाख्योऽस्ति लोपमध्यमपुरुषबहुवचनस्य थनादेशः तेनापशब्दनिर्वचनमिदम् ।

तथा कश्चिन्निन्दामन्त्रः यथा "मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादीति ।

अत्र हि यः केवलं एकाकी अस्ति न स्वर्यमवन्दोपलक्षितं देवगणं सखायं मनुष्यगणं पोषयति स मन्दप्रज्ञो निष्फलमन्नं लभते प्रत्युत चौराद्युपद्रवहेतुत्वाद्वधकार्येव भवति केवलपापश्च स भवति सत्यमेतद्ब्रवीमीति कृपणनिन्दा ।

तथा कश्चित्संशयार्थो मन्त्रः । यथा तिरश्चीनो विततोरश्मिरेषामधः स्विदासीदुपरि स्विदासीदिति । अत्र ह्ययं पञ्चयो मन्त्रोपेति पूर्वस्यामृचि निर्दिष्टानां कवीनां रश्मिस्तिरश्चीनो विततः किमध आसीदुतोपरीति स्विच्छब्दादधः स्विदासीदिति उपरि स्विदासीदिति च विचार्यमाणार्थयोर्वाक्ययोः क्रमेणोदात्ताया अनुदात्तायाश्च विचार्यमाणानामुपरिस्विदासीदिति चोति सूत्राभ्यां विहितात्प्लुताच्च संशयो गम्यते ।

तथा कश्चित्परकृतिरूपो मन्त्रः । यथा "चिवद्राजा राजका इद्-

न्यके यके सरस्वती मनुः पर्जन्य इव ततनद्धि वृष्णा सहस्रमयुता-
ददद्"ति । अत्र हि ह राजका राजानः चित्रो नाम राजा ददाति नि-
श्चये स एव सरस्वतीमनु तद्देशे यकेन्यके यस्मिन्कस्मिंश्चिदन्यस्मि-
न्देशे गवां सहस्रमयुतानि ददद्दिद्दावेव वृष्टया ततमस्तन्वन्पर्जन्य
इव हिः प्रसिद्धो । एवमेककर्तृकोपाख्यानरूपा परकृतिरेषा ।

तथा कश्चित्पुराकल्परूपो मन्त्रः । यथा " यज्ञेन यज्ञमयजन्त
देवास्तानि धर्माणि प्रथमान्यासन् । तेह नाकं महिमानः सचन्त य-
त्र पूर्वे साध्याः सन्ति देवा " इति । अत्र हि यज्ञेन ज्योतिष्टोमादिना
विष्णुर्वै यज्ञ इतिश्रुतेर्यज्ञं विष्णुं देवा अयजन्त तानि धर्माणि पु-
ण्यानि स्याद्धर्ममस्त्रियाम्पुण्यश्रेयसी इत्यमरः । प्रथमान्यासन् । इ-
ति प्रसिद्धौ । ते देवा महिमानो महत्त्ववन्तः नाकं स्वर्गं सचन्त
अगमन् । यत्र नाके पूर्वे पुराणाः साध्या नाम देवाः सन्तीति ब-
हुकर्तृकोपाख्यानरूपः पुराकल्पः । एतेष्वपि सामर्थ्यादि द्वादशभे-
देषु यत्र ऋगुदाहृता तत्र यजुरप्युदाहार्यं यत्र यजुरुदाहृतं तत्र
ऋगप्युदाहार्येति द्वादशद्वैगुण्ये चतुर्विंशतिभेदा भवन्ति । इतिभाष्यो-
क्ता अष्टाविंशतिर्मन्त्रभेदाः ।

अथापि भाष्यकारेण प्रायिकमिदं लक्षणमित्युक्तम् ।
अतो ऽन्ये मन्त्रभेदा ये क चित्के विनिरूपिताः ॥
भाष्यवार्तिककाराद्यैस्तान्सर्वानभिदध्महे ॥

तथा हि । पूर्वं हेतुविधिर्मन्त्र उक्तः । कश्चित्तु हेतुविधिस-
रूपो मन्त्रः । यथा द्वादशारं न हि तज्जरायेति ।

तथा हेतुविधिमन्त्रवत्कश्चित्फलविधिर्मन्त्रः । स त्रिविधः ।
यजमानगामिफलविधिर्ऋत्विग्गामिफलविधिरुभयगामिफल-
विधिश्चेति ।

तत्राद्यो यथा " ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्त-
न्वं पुषेम मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम "
ति । तदिदं ऋत्विक्फलं करणेऽर्थवत्त्वादित्यधिकरणे तृतीये ( पा०
८ । अ० १३ ) उक्तम् ।

ऋत्विग्गामिफलविधिर्मन्त्रो यथा "अग्नाविष्णू मा वामवक्र-
मिषं विजिहाथां मा मा सन्तासमि"त्याहवनीयवायव्यदेशस्थस्याध्वर्यो-
स्तौवाघारार्थं नैर्ऋत्यदेशे ऽभिक्रमणस्य करणमन्त्रः । तत्कल्पित-
मसन्तापनरूपं फलमध्वर्युगामित्युक्तम् । तृतीये (पा० [illegible] अ० १४)
कर्मार्थे तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वादित्यधिकरणे ऋत्विक्फ-
ले करणेष्वर्थवत्त्वादित्याधिकरणापवादार्थे ।

उभयगामिफलविधिर्मन्त्रो यथा। उपरवयोर्हस्तौ प्रवेश्याध्वर्यु-रिरयोस्तयोः प्रवेशितहस्तम् यजमानमाह किमत्रेति यजमान आह भद्रमद्रमिति । तथौ सहेत्यध्वर्युः प्रत्याहेति प्रतिवचनकरणत्वेन वि-नियुक्ते मन्त्रे व्यपदेशाच्चेति पूर्वाधिकरणापवादार्थे ऽधिकरणे तृतीये वक्ष्यते उभयगामिफलविधिर्मन्त्रो ऽयमिति ।

तथा कश्चित्फलविधिस्वरूपो मन्त्रः । यथा आयुर्दा अग्ने अ-सि आयुर्मे देहीति दर्शपूर्णमासान्ते आहवनीयोपस्थानार्थः तृतीये ( पा० ८ । अ० ७ ) हि मन्त्राश्चाकर्मकरणास्तद्वादित्यधिकरणे ऽस्य लैङ्गिकविनियोगेन करणतया विनियोगाभावाच्च फलविधिः किं तु प्रधानफलमेव यजमानप्रोत्साहनाय प्रकाशयतीत्युक्तम् । तथा कश्चिद्देवताविधिर्मन्त्रः ।

स द्विविधः । गुणभूतदेवताविधिः प्रधानभूतदेवताविधिश्चेति ।

तत्राद्यो यथा । "समिधः समिधो अग्न आज्यस्य व्यन्त्वि"ति समिदादिप्रयाजयाज्यामन्त्रः प्रयाजेषु हि मान्त्रवर्णिको देवताविधि-र्नेयमे प्रयाजे ऽपीति चेदित्यधिकरणे द्वितीयाया देवताविधिसामर्थ्यं निरस्य तत्प्रख्यन्यायेन समिदादिपदानां नामतासाधनार्थमुक्तः ।

प्रधानभूतदेवताविधिर्मन्त्रो यथा । उत्तमप्रयाजमन्त्र आज्य-भागादिषु यक्ष्यमाणानामग्न्यादिदेवतानां प्रकाशकः स्वाहाग्निं स्वाहा सोममित्यादिः । दशमे (पा० १ । अ० ७) हि प्रयाजे च तन्न्यायत्वा-दित्यधिकरणे स्वाहाकारं यजतीति स्वाहाकारशब्दस्य द्वितीया-त्वेन देवताविध्यसामर्थ्यान्मान्त्रवर्णिकदेवतास्मरणार्थो ऽन्त्यः प्र-याजः स्वाहाशब्दस्तु स्वाहाग्निमित्यादिमन्त्रसम्बन्धेन नामधेयमिति संस्कारकर्मत्वसिद्ध्यर्थमुक्तम् ।

तथा कश्चिद्देवताविधिस्वरूपो मन्त्रः । यथा पात्नीवते गृ-ह्णातीति पात्नीवतग्रहाभ्यासे हौत्रो मन्त्रः । येभिरग्ने सरथं याह्यर्वा-ङ् नानारथं वा विभवो ह्यश्वाः । पत्नीवतस्त्रिंशतं त्रींश्च देवताननु-ष्वधमावह मादयस्वेति । अत्र हि तृतीये ( पा २ । अ० १५ ) त्रि-शच्च परार्थत्वादित्यधिकरणे अग्नाइ पत्नीवत्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहेत्याध्वर्यवमन्त्रचोदनायामश्रुतस्याप्यग्नेरिव हौत्रमन्त्रा-म्नातत्रिंशतामपि देवतात्वं कल्प्यमिति पूर्वपक्षं कृत्वा सिद्धान्तितम् ।

इहापि तदुद्देशेनात्यागे मादयितृत्वानुपपत्तेरग्नेरेव देवतात्वं त्रिंशदादेस्त्वप्रिदत्तेन धाम भाजन्तु न तु देवता इति न देवताविधिरिति ।

तथा कश्चिद् द्रव्यविधिर्मन्त्रः । स द्विविधः । गुणभूतद्रव्य-

विधिः प्रधानभूतद्रव्यविधिश्चेति ।

तत्राद्यो यथा प्रैतुहोतुश्चमसः प्रब्रह्मणः प्रोद्गातॄणां प्रयजमानस्येति यजमानशब्दस्य यौगिकत्वाद्द्रव्ये द्रव्यविधिः ।

प्रधानभूतद्रव्यविधिर्मन्त्रो यथा भट्टसोमेश्वरमते ऽनुवषट्कारहोमस्य प्रतिपत्तित्वात्सोमस्याग्ने वीहीत्यनुवषट्करोतीति विनियुक्तो मन्त्रः संस्कार्यसोमद्रव्यविधिः ।

तथा कश्चिद् द्रव्यविधिसरूपो मन्त्रः । यथा यूपपरिव्याणे त्रिवृता यूपं परिव्ययतीति विहिते त्रिवृत्करणके वासोरूपद्रव्यविधिसरूपो हौत्रः क्रियमाणानुवादी "युवा सुवासाः परिवीत आगादि"ति । तथा कश्चिज्ज्ञातविधिर्मन्त्रः । यथा "छागस्य वपाया मेदसो ऽनुब्रूही"ति । तदेतत् पञ्चमस्य ( पा० ८ । अ० ९ ) उक्तम् ।

तथा कश्चिज्ज्ञातविधिसरूपो मन्त्रः । यथा "बर्हिर्देवसदनं दामी"ति मन्त्रो दामीत्युक्ते लवनेन बर्हिःप्रापकत्वाद्बर्हिर्लुनातीति । विधिनैव बर्हिःसंस्कारकं लवनं विदधता लवने संस्कार्यभूतबर्हिःप्राप्तेः ।

तथा कश्चिद् गुणविधिर्मन्त्रः । यथा "दर्भैः स्तृणीत हरितैः सुपर्णैरि"ति मन्त्रो बर्हिषि हवींष्यासादयतीति हविरासादनाङ्गत्वेन विहिते बर्हिषि हारित्यगुणप्रकाशकस्यान्यथानुपपत्त्या तं विधत्ते । अत एव नवमे ( पा० ३ । अ० २ ) जातिनैमित्तिकं यथास्थानमित्यधिकरणे । "मौद्गं चरुं निर्वपेच्छ्रियै श्रीकाम" इति कर्मणि पौण्डरीकाणि बर्हींषि भवन्तीति विहितेषु पुण्डरीकेषु प्राकृतं हारित्यगुणप्रकाशके पूर्वोक्ते मन्त्रे ऽतिदिष्टे हरितपदस्थाने रक्तपदमूहितव्यमित्युक्तम् । (अस्मादेवाभियुक्ततरवैदिकभाष्यकारादिलेखाद्वैदिकामरकोशो ऽनादृत्यः पुण्डरीकं सिताम्भोजमिति (१) ।

तथा कश्चिद् गुणविधिसरूपो मन्त्रः । यथा षड्विंशतिरस्य वङ्क्रय इति । अत्र हि छागवङ्क्रीणां षड्विंशतिसङ्ख्यास्वभावसिद्धा प्रकाश्यते । न तु विधीयते पार्श्वयोरवद्यतीति विधिनैव प्राप्तेः । तथा । -

कश्चित्क्रियाविधिर्मन्त्रः यथा "अश्विनोस्त्वा बाहुभ्यां सघ्यासं नृचक्षसं त्वा सोमदेव सुचक्षा अवख्येषं मामेवाङ्नाभिमति गा" इति । एते हि ग्रहणावेक्षणसम्यग्जरणप्रकाशकाः प्रकरणेन विनियुक्ताः ग्रहणादीनामनुष्ठानयोग्यानां स्वाङ्गत्वसिद्धौ विधिं कल्पयन्तीति तृतीये ( पा० २ । अ० ९ ) लिङ्गसमाख्याभ्यां मन्त्रार्थतानुवाकस्येत्यधिकरणे उक्तम् ।

---

(१) पञ्च पा० १ सू० भा० वस्तु टीपवीकयीव दृश्यते ।

तथा कश्चित्क्रियाविधिसरूपो मन्त्रः यथा "न ता नशन्ति न दभाति तस्करो नासामामित्रो व्यथिरादधर्षति" । "देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः स च ते गोपतिः सहे"ति द्वितीये ( पा० १ अ० ६ ) हि विधिमन्त्रयोरैकार्थ्यमेकशब्द्यादित्यधिकरणे यजते ददातीत्याख्याताविशेषादस्यापि मन्त्रस्य "पशुना यजेत" "हिरण्यमात्रेयाय" ददातीतिवद्यागान्तरविधित्वं पूर्वपक्षं कृत्वा यच्छब्दाद्युपबन्धात् फलस्ययोरेव यागदानयोरनुवाद इति सिद्धान्तितम् ।

तथा कश्चिन्निषेधविधिर्मन्त्रः । यथा "अधीरा तनूर्भवति रुशती पापयामुया पतिर्यद्वध्वो वाससा स्वमङ्गमभिधित्सते" इति । अत्र हि स्त्रीवासःपरिधानरूपपापात् लक्ष्मीहानिर्भवतीति दोषोक्तेर्निषेधः कल्प्यते ।

तथा कश्चिन्निषेधविधिसरूपो मन्त्रः । यथा "वनिष्ठुमस्य मा रावयिष्टोरूकं मन्यमाना" इति । नवमे ( पा० ४ । अ० ४ ) हि वनिष्ठु सन्निधानादुरूकेण वपाभिधानमित्यधिकरणे वनिष्ठोर्लेपनं प्रतिषिध्यत इति पूर्वपक्षः कृतः । सिद्धान्ते च न तावद्वनिष्ठोर्लेधितव्यस्य सतो लयनं शक्यं प्रतिषेद्धुमिति निरस्तम् ।

तथा कश्चिन्निमित्तविधिसरूपो मन्त्रः । यथा वाजसनेयिनां मते "यत्पशुर्मायुमकृतोरो वा पद्भिराहत अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहस" इति संज्ञपनहोममन्त्रः । स होमः पशोर्मायुःकरणादौ निमित्त एव भवतीति नैमित्तिक एवेति वाजसनेयिनां मतम् । मीमांसकानां मते नित्य एवमायुः करणाद्यभावे ऽपि कार्य इति षष्ठे ( पा० ८ । अ० ८ ) तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषमित्याधिकरणे एवं जातीयकेषु नित्यत्वोक्तेः । तेन मीमांसकमते निमित्तविधिसरूपस्यैवेदमुदाहरणं निमित्तविधिमन्त्रोदाहरणं नास्त्येवेति ।

तथा कश्चित्सादृश्यविधिसरूपो मन्त्रः । यथा "श्येनमस्य वक्षः कृणुतात्" इति । नवमे ( पा० ४ । अ० ६ । ) हि श्येनशलाकवदपेक्षत्वधिकरणे वक्षसः कर्तनादिना श्येनसादृश्यं कर्तव्यमित्यनेन मन्त्रेणान्यथानुपपत्त्या कल्पितो विधिर्विधत्त इति पूर्वपक्षं कृत्वा अदृष्टार्थताप्रसङ्गात्कर्तने च वक्षसो वैफल्याद्विधिर्विनाशापत्तेः साफल्यमेवात्र प्रकारस्य दृष्टार्थत्वादिति सिद्धान्तितम् ।

सर्वे ऽपि तत्र विधिसिसा मन्त्रभेदा उक्ता द्वाविंशतिसंख्याः । भूयो ऽपि ऋग्यजुरुपभेदेन द्विगुणाः सन्तश्चतुश्चत्वारिंशत्पूर्वोक्त-

आद्यार्धिशतिरपि ऋग्यजुर्भेदेन षट्पञ्चाशदिति सर्वसङ्कलने शतं भेदाः सम्पन्नाः ।

पुनरप्यृङ्मात्राणां चतुर्दशच्छन्दःप्रयुक्ताश्चतुर्दशभेदाः ।

गायत्री उष्णिक्, अनुष्टुप् बृहती पङ्क्तिः त्रिष्टुप् जगती अतिजगती शक्वरी अतिशक्वरी अष्टिः अत्यष्टिः धृतिः अतिधृतिरिति । तत्र गायत्री चतुर्विंशत्यक्षरा । तत उत्तरोत्तरं चतुरक्षरचतुरक्षरवृद्ध्या उष्णिगाद्याः ।

तेनोष्णिहि २८ अनुष्टुभि ३२ बृहत्यां ३६ पङ्क्तौ ४० त्रिष्टुभि ४४ जगत्याम् ४८ अतिजगत्यां ५२ शक्वर्यां ५६ अतिशक्वर्यां ६० अष्ट्यां ६४ अत्यष्ट्यां ६८ धृत्यां ७२ अतिधृत्यां ७६ । तत्रापि सर्वानुक्रमपरिष्कृता गायत्र्यादीनामाद्यानां सप्तानां जगत्यन्तानां भेदानामवान्तरभेदा अपि प्रत्येकमुक्ताः ।

तद्यथा । गायत्र्या नवभेदाः । गायत्री १ पदपङ्क्तिः २ उष्णिग्गर्भा ३ पादनिचृत् ४ अतिनिचृत् यवमध्या ६ वर्धमाना ७ प्रतिष्ठा ८ ह्रसीयसी ९ इति । उष्णिहोऽष्टौ भेदाः । उष्णिक् १ पुर उष्णिक् २ ककुप् ३ ककुम्न्यङ्कुशिरा ४ तनुशिरा ५ पिपीलिकमध्या ६ अनुष्टुब्गर्भा ७ उष्णिगेव ८ इति । अनुष्टुभः सप्तभेदाः । अनुष्टुप् १ महापदपङ्क्तिः २ कृतिः ३ पिपीलिकमध्या ४ काविराट् ५ नष्टरूपी ६ विराट् ७ इति ।

बृहत्या नव भेदाः ।

बृहती १ पुरस्ताद्बृहती २ न्यङ्कुसारिणी ३ उपरिष्टाद्बृहती ४ विष्टारबृहती ५ ऊर्ध्वबृहती ६ पिपीलिकमध्या ७ विषमपदा ८ बृहत्येव ९ इति

पङ्क्तेरष्टौ भेदाः । पङ्क्तिः १ विराट् २ सतोबृहती ३ विपरीता ४ प्रस्तारपङ्क्तिः ५ विष्टारपङ्क्तिः ६ आस्तारपङ्क्तिः ७ संस्तारपङ्क्तिः ८ इति ।

त्रिष्टुभो दश भेदाः । त्रिष्टुप् १ अभिसारिणी २ विराट्स्थाना ३ विराड्रूपा ४ पुरस्ताज्ज्योतिः ५ मध्ये ज्योतिः ६ उपरिष्टाज्ज्योतिः ७ महाबृहती ८ यवमध्या ९ पङ्क्त्युत्तरेति १० ।

जगत्यास्त्रयो भेदाः । जगती १ महासतो बृहती २ महापङ्क्तिः ३ । इति ।

तदेवमेते आद्यानां गायत्र्यादीनां जगत्यन्तानां सप्तानां भेदानां पादविशेषप्रयुक्ताश्चतुष्पञ्चाशत्सर्वेऽपि मिलित्वा भेदाः सिद्धाः ।

एतेऽपि सर्वे प्रत्येकं चतुर्विधाः । एकेनाक्षरेण न्यूनानि बृह-

दूगायत्र्याद्याः तावतैवाधिकाभूरिग्गायत्र्याद्याः । द्वाभ्यामक्षराभ्यां न्यूनां विराड्गायत्र्याद्याः द्वाभ्यामधिकाः स्वराड्गायत्र्याद्या इति । तदेवमेतैश्चतुर्भिर्भेदैः प्रत्येकं भिन्ना पूर्वोक्ताश्चतुःपञ्चाशद्भेदाः षोडशोत्तरं द्विशतं सम्पन्नाः । अतिजगत्यादिभिरुत्तरैः सप्तभिर्भेदैः सहितास्त्रयोविंशत्यधिकं द्विशतं सिद्धा इति ।

कात्यायनानुक्रमण्या गायत्र्यादेस्तु लक्षणम् ।
ज्ञेयं तद्वृत्तितः सर्वाणीहोदाहरणानि तु ॥

एवं ऋङ्मन्त्राणां पूर्वोक्तैः पञ्चाशद्भिर्भेदैः सह द्विशतं त्रिसप्ततिश्च भेदा उक्ताः । यजुर्मन्त्राणां तु पञ्चाशदेव भेदाः पूर्वमुक्ताः । पुनस्तेषामप्यृङ्मन्त्रवच्छन्दः प्रयुक्ता भेदाः सन्ति । याजुषानुक्रमण्यास्तु कर्कानुसारिणः प्रामाण्यमेव नाङ्गीकुर्वन्ति । ये ऽपि प्रामाण्यं मन्यन्ते देवयाज्ञिकादयस्ते ऽपि यजुषामनियताक्षरत्वादेकेषां छन्दो न विद्यते इति ।

याजुषानुक्रमणीग्रन्थमेवं व्याचक्षते षडधिकशताक्षरपर्यन्तं छन्दांसि सन्त्येव तदधिकाक्षराणां तु यजुषां छन्दो नास्तीति । यजुषां छन्दः सद्भावप्रमाणं तु पिङ्गलसूत्रमेव ।

तत्र हि । अथ लौकिकमित्यतः प्राक् छन्दः । गायत्री दैव्येकम् । आसुरी पञ्चदश । प्राजापत्याष्टौ । यजुषां षट् । साम्नां द्विः । ऋचां त्रिः । द्वौ द्वौ साम्नां वर्धेत । त्रींस्त्रीनृचाम् । चतुरश्चतुरः प्राजापत्यायाः । एकैकं शेषे । जह्यादासुरी । तान्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यः । तिस्रस्तिस्रः सनाम्न्य एकैका ब्राह्मयः । प्राग्यजुषामार्ष्यइति पाद इत्यधिकारात्प्राक् षोडशभिः सूत्रैरपादयुक्तानि एकाक्षरादारभ्य एकैकाक्षरवृद्ध्या सप्त गायत्र्यादीनि जगत्यन्तानि छन्दांसि दैवी आसुरी प्राजापत्या याजुषी सामोपपदा ऋगुपपदा ब्राह्मी आर्षी चेति प्रत्येकमष्टभेदभिन्नान्युक्तानि ।

तद्यथा । अथ गायत्री तान्युष्णिगिति सूत्राभ्यां सप्तानां छन्दसामुद्देशः । दैव्येकमित्यादिषट्सूत्रैर्दैव्यादीनां षण्णां गायत्र्यादीनां पङ्क्त्यन्तानां षट्लक्षणान्युक्तानि । तत्र साम्नां द्विरिति सूत्रेण सामगायत्र्यां पूर्वसूत्रोक्तषण्णां द्विरिति द्विगुण्योक्त्या द्वादशाक्षरतोक्ता । एवं त्रिरिति षट्कत्रित्वोक्त्या ऋग्गायत्र्यामष्टादशाक्षरता । एवं दैव्यादीनां षण्णां गायत्रीणां लक्षणान्युक्तानि ततः उष्णिगादिषु जगत्यन्तासु कियदक्षरवृद्धिरित्यपेक्षायां द्वौ द्वौ साम्नां वर्धेतेति सूत्रत्रयेण क्रमात्सामगायत्रीतो ऋग्गायत्रीतः प्राजापत्यगायत्रीतश्च । सामोष्णिगादिषु ऋगुष्णिगादिषु प्राजापत्योष्णिगा-

दिषु च द्वित्रिचतुरक्षरवृद्धिरुक्ता।

तत एकैकं शेष इति सूत्रेण ( शेषे उक्तवक्ष्यमाणवृद्धिह्रासाविषये दैवीपूष्णिगादिषु याजुषीषु चोष्णिगादिषु क्रमेण १) दैव्या गायत्रीतो याजुष्याश्च गायत्रीतश्च एकैकं वर्धेत। दैव्या एकाक्षराया गायत्रीत एकवृद्धया द्व्यक्षरा दैव्युष्णिक्। तत एकाक्षरवृद्ध्या त्र्यक्षरा दैव्यनुष्टुबित्यादि जगतीपर्यन्ता। एवमेव षडक्षराया याजुष्या गायत्र्या एकाक्षरवृद्ध्या सप्ताक्षरा याजुष्युष्णिक्। ततोऽप्येकवृद्ध्या ऽष्टाक्षरा याजुष्यनुष्टुबित्यादि जगत्यन्तम्। ततो ऽन्त्यादासुरीत्यनेनासुर्या गायत्रीत आसुरीपूष्णिगादिषु उत्तरोत्तरमेकैकाक्षरह्रानिरुक्ता।

ततस्तिस्रस्तिस्र इति सूत्रेण गायत्रीत्येवं समाम्न्यस्तिस्रो यजुर्गायत्री सामगायत्री ऋग्गायत्रीत्यनन्तरः पूर्वोक्तास्तिस्रो मिलिता यावन्त्यक्षराणि तावन्ति ब्राह्मचो गायत्र्याया इत्युक्तं तेन यजुर्गायत्र्याः षट् सामगायत्र्या द्वादश गायत्र्या अष्टादशे-

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| दैवी | १ | २ | ३ | ४ | ५ | ६ | ७ | ० |
| आसुरी | १५ | १४ | १३ | १२ | ११ | १० | ९ | ० |
| प्राजापत्या | ८ | १२ | १६ | २० | २४ | २८ | ३२ | ० |
| याजुषी | ६ | ७ | ८ | ९ | १० | ११ | १२ | ० |
| साम्नां | १२ | १४ | १६ | १८ | २० | २२ | २४ | ० |
| ऋचां | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ | ० |
| आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ | ० |
| ब्राह्मी | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ | ० |
| | गायत्री | उष्णिक् | अनुष्टु | बृहती | पङ्क्तिः | त्रिष्टुप् | जगती | ० |

त्येवं मिलित्वा षट्त्रिंशदक्षराणि ( तावती ब्राह्मी गायत्री एवं यजुरुष्णिहः सप्तसाम्नोष्णिहश्चतुर्दश ऋगुष्णिह एकविंशतिरित्येवं मिलित्वा द्विचत्वारिंशदक्षराणि २) तावती ब्राह्मी उष्णिगित्यादियोज्यं

( १ ) षष्ठ पा० १ पु० भा०।
( २ ) षष्ठ पा० २ पु० भा०।

जगतीपर्यन्तम् । ततः प्राग्यजुषामिति सूत्रेण याजुष्या गायत्र्यादेः प्राक् यास्तिस्रस्तिस्रः सनाम्न्यः दैवी गायत्री आसुरी गायत्री प्राजापत्या गायत्रीत्याद्यास्ता मिलिता यावन्त्यक्षराणि तावन्त्यार्ष्यो गायत्र्याद्या इत्युक्तम् । तेन दैव्या गायत्र्या एकमासुर्या गायत्र्याः पञ्चदश प्राजापत्याया गायत्र्या अष्टाविंशत्येवं मिलित्वा चतुर्विंशतिरक्षराणि तावती आर्षी गायत्री । एवं दैव्या उष्णिहो द्वे आसुर्या उष्णिहश्चतुर्दश प्राजापत्याया उष्णिहो द्वादशेत्येवं मिलित्वाऽष्टाविंशतिरक्षराणि तावती आर्षी उष्णिगित्यादि जगतीपर्यन्तं योज्यम् ।

एवं षोडशभिः सूत्रैः पिङ्गलेन गायत्र्यादीनि जगत्यन्तानि सप्तछन्दांसि प्रत्येकं दैव्यासुर्याद्यष्टभेदभिन्नान्युक्तानि । तेनैते षट्पञ्चाशद्भेदाः । एतानि च सूत्राणि यजुर्विषयाण्येव । अन्यथोक्तादीनां लौकिकविषयत्वादृक्षु च चतुष्पादादिगायत्र्यादिचतुर्दशच्छन्दसामेवानुक्रमणयुक्तानां प्रयोगस्यास्माभिः पूर्वमुक्तत्वादेतेषां सूत्राणां निर्विषयतैव स्यात् । एवमन्यान्यपि ऋङ्मन्त्रविषयचतुर्दशच्छन्दोभिन्नानि अथ लौकिकमित्यतः प्रागेव पञ्चदश छन्दांसि चतुरुत्तरशताक्षरोत्कृतिश्चतुरक्षरचतुरक्षरहान्याऽऽचत्वारिंशदक्षरजगतीपर्यन्तं पिङ्गलेन चतुःशतमुत्कृतिः चतुरश्चतुरस्त्यजेदुत्कृतेरित्यादिसूत्रसप्तकेनोक्तानि ।

तानि च यजुर्मन्त्रविषयाण्येव । अन्यथा ऋङ्मन्त्रेषु अनुक्रमण्यामतिधृत्यन्तानां चतुर्दशानामेव छन्दसामुक्तत्वाल्लौकिकाधिकाराच्च पूर्वमुक्तत्वेन लौकिकविषयत्वाभावात्सूत्रसप्तकोक्तानां पञ्चदशानां जगत्यादीनामुत्कृतिपर्यन्तानां निर्विषयतैव स्यादिति । अत एव हलायुधेनाथ लौकिकमिति सूत्रे व्याख्यातं पूर्वेषां छन्दसां वैदिकत्वमेवेति । एवं च षोडशसूत्रैः पूर्वमुक्तानि षट्पञ्चाशद्भिश्च सप्तसूत्रैरुक्तानि पञ्चदशेत्येवं मिलित्वा एकसप्ततिछन्दांसि यजुषामुक्तानि । एतान्यपि प्रत्येकं ऋङ्मन्त्रवच्चतुर्विधानि एकेनाक्षरेण न्यूनानि च । तावतैवाधिकं भुरिक् ।

द्वाभ्यां न्यूनं विराट् । द्वाभ्यामधिकं स्वराडिति ।

तदेवमेतैश्चतुर्भिर्भेदैः प्रत्येकं भिन्नाः पूर्वोक्ता एकसप्ततिर्भेदाश्चतुरशीत्यधिकं द्विशतं भवन्तीति ।

तेन (उत्कृतिरेकाक्षराधिका भुरिक् । द्व्यक्षराधिका स्वराडिति१) षडधिकशताक्षरपर्यन्तं यजुषामपि छन्दांसि भवन्ति तदधिकाक्षराणां तु होता यक्षद्वनस्पतिमित्यादीनां यजुषामनियताक्षरत्वात् छ-

( १ ) अ० पा० २ सु० भा० ।

न्दो नास्तीति सिद्धम् । एवमृङ्मन्त्राणां यजुर्मन्त्राणां च भेदा उक्ताः। अथ साममन्त्राणां गीतिमात्ररूपत्वेन यद्यपि अक्षरसंख्याविशेषरूपच्छन्दःप्रयुक्ता भेदा न सम्भवन्ति तथापि स्वरूपत एव भेदाः सन्ति । ते च सामभेदा योनिग्रन्थे उत्पन्नास्तत एव ज्ञेयाः ग्रन्थबाहुविस्तरभियेह नोच्यन्ते ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमी-
मांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्म-
जभट्टशङ्करकृते मीमांसाबालप्रकाशे
मन्त्रभेदनिरूपणम् ।

---

अथ मन्त्रप्रामाण्यम् ।

मन्त्राणां पदार्थत्वेन प्रामाण्यं वाक्यार्थे पदार्थानां प्रामाण्याभ्युपगमादिति पार्थसारथिमिश्राः शास्त्रदीपिकायामाहुः ।

तस्यार्थः तर्कपादे उत्पत्तौ वा वचनाः स्युरिति सूत्रे आचार्यैः ।

अत्राभिधीयते यद्यप्यस्ति मूलान्तरं न नः ।
पदार्थानां तु मूलत्वमिष्टं तद्भावनावतः ॥

इति वाक्यार्थप्रतीतौ पदार्थानां कारणत्वमुक्तम् । दर्शपूर्णमासादिप्रयोगविधिषु श्रुतिलिङ्गादिविनियोज्या मन्त्राः पदार्थत्वेन प्रविष्टा वाक्यैकवाक्यतयेति मन्त्राभिधेयां दर्शपूर्णमासादिभावनां विदधतो महावाक्यस्य दर्शपूर्णमासादिप्रयोगविधेर्महावाक्यार्थे पदार्थभूता मन्त्राः प्रमाणभावं लभन्त इति ।

गुरुचरणास्तु एवं सति व्रीह्यादिवत्पदार्थविधयैवैषां प्रामाण्यं स्यान्न शाब्दविधयेति दूषयित्वा स्मृतिवद्यथार्थलक्षणमेवैषां प्रामाण्यमित्याहुः । भट्टसोमेश्वरस्तु अनधिगतार्थगन्तृत्वमप्याह ।

प्रपादिस्मृतिलिङ्गत्वं मन्त्राणां वक्ष्यते ऽत्र यत् ।
देवताकल्पनं यच्च मान्त्रं तस्माद्यजिश्च यः ॥
मन्त्रवर्णाच्च यद्धोतुः पूर्वपानं वदिष्यते ।
मे देहीत्यात्मवादित्वान्मन्त्राणां याजमानता ॥
करणानां त्वार्त्विजत्वे ऽप्यङ्गसाध्यफलस्य यत् ।
स्वामिगत्वं क्रियार्थस्य कर्तृगत्वं च वक्ष्यते ॥

मन्त्रक्रमानुरोधाच्च ब्राह्मणक्रमबाधनम् ।
छागस्य निश्चयो यश्च पशावूहश्च मन्त्रगः ॥
तदर्थपरतायां स्यात्सर्वं नैवान्यथा भवेत् ।
सर्वसाधारणत्वेन विचारस्य प्रयोजनम् ॥
कर्मकाले तु सन्धेयो मन्त्रार्थो ऽर्थपरत्वतः ।
इषेत्वादिषु चोच्चार्यं छिनद्मीत्यादिपूर्त्तये ॥
असावित्यादिशब्दस्य स्थाने यष्ट्रादिनाम च ।
सिद्धान्ते मन्त्रलोपश्च प्रकाश्याभाव इष्यते ॥
यथाम्नातप्रयोगस्तु केवलो ऽर्थाविवक्षणे ।
यदि त्वर्थपरत्वे ऽपि नैतावत्स्यात्प्रयोजनम् ॥
ततो धर्मप्रमाणत्वं मन्त्राणां नैव सिध्यति ।
लवनादिस्वरूपस्य प्रकाशपरत्वे हि धर्मता ॥
समीहिताङ्गताभावात्कथं चित्प्रतीयते ।
अपूर्वसाधनत्वेन यद्यप्येतत्प्रकाश्यते ॥
विधिप्राप्तानुवादत्वान्न तथापि प्रमाणता ।
अपूर्वसाधनत्वात्तु लवनादौ समीहिते ॥
आत्मनो ऽङ्गत्वबोधेन मन्त्रः प्रामाण्यमश्नुते ।
अश्रुतद्रव्ययागादिकल्पनाच्च प्रमाणतेति ॥

तत्रापि गुरुचरणोक्ते याथार्थ्यलक्षणे प्रामाण्ये सोमेश्वरोक्ते च सर्वमन्त्रसाधारण्ये मन्त्रार्थानुसन्धानविषये प्रामाण्य जपमन्त्रेष्वव्याप्तिरूपो दोषो ऽस्त्येव । अविवक्षितार्थकमुच्चारणमात्रमेव हि जपः[1] । तदुक्तं भाष्ये । यत्र सन्तमप्यर्थमविवक्षित्वोच्चारणमात्रमदृष्टार्थं क्रियते यथा धिष्ण्यवीमृचमनूच्येति स जप इति ।

तत्र सन्तमपीत्यपिशब्दात्क्वचिदर्थाभावो ऽपि प्रतीयते । सतश्चासतः कुतो याथार्थ्यं कुतो वानुसन्धानमिति केचित् । तन्न ।

जपमन्त्राणामपि सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि वाचःस्तोमे पारिप्लवं शंसतीति गुणगुणिसम्बन्धकीर्तनात्मके शास्त्रे विनियोगाद्गुणगुणिसम्बन्धरूपे ऽर्थे तात्पर्यमस्त्येव । तेन तेषां मन्त्रार्थानुसन्धानविषये प्रामाण्यं सम्भवत्येव । याथार्थ्यं तु तत्राप्यव्याप्तमेव । ननु तथापि लक्षणया याथार्थ्यं वाच्यमेव ।

अत एवार्थवादाधिकरणे धूम एवाग्नेर्दिवा ददृश इत्यादिष्वयथार्थेषु गुणवादवृत्तिमुपक्रम्य दूरभूयस्त्वादित्यादिसूत्रैरुपचारादेव याथार्थ्यमुक्तमिति चेत् न ।

तेषूदाहरणेषु सम्भवमात्रेण तदुक्तं न त्वयं नियमः । असतापि गुणेनासतो ऽपि गुणिनः स्तुतिबुद्ध्युत्पत्तिसम्भवात् ।

अत एवार्थवादाधिकरण एव "प्रजापतिरात्मनो वपामुदखिदत्" इत्यत्र महाभूतविषयत्वेन भाष्योक्तां व्याख्यामेवं । स्तुतित्वमेव हीयतइति दूषयित्वार्थवादादिमूलिकां सृष्टिप्रलयप्रतीतिमादेणासतो ऽपि प्रजापतेरसतापि गुणेन स्तुतिरङ्गीकृता ।

तस्मात्स्तोत्रमन्त्रेषु याथार्थ्यमव्याप्तमेव । मन्त्रार्थानुसन्धानविषय तु प्रामाण्यम् । सम्भवतीति तदेव युक्तमिति सिद्धम् ।

नन्वेवमपि साममन्त्राणां कथं शब्दविधया प्रामाण्यमिति चेत् ।

उच्यते । तेषामशब्दतायामपि शब्दाभिव्यञ्जकत्वेन शब्दानुग्राहकत्वाच्छाब्दप्रमाजनकसामग्र्यन्तर्गतत्वेन शब्दप्रमाणान्तर्भावात् ।

सा चेयमप्यनुक्तेषु प्रजापतेर्हृदयादिषु विधा न सम्भवति । अतस्तान्यपि व्याप्नोतीतीदृशं पदार्थविधया प्रामाण्यं मिथ्येत्युक्तम् ।

तानि चानुक्तानि पञ्चत्रिंशत्सामानि ।

अर्कग्रीवमेकम् ।

पञ्चानुगानमध्ये सामत्रयम् ।

हा उहो वा सामैकम् ।

हा उवाकू सामानि त्रीणि ।

वाचो व्रते द्वे ।

सत्रस्पर्धि एकम् ।

परमेष्ठिसामैकम् ।

आङ्गिरसव्रतमेकम् ।

इलान्दमेकम् ।

सधस्थमेकम् ।

देवव्रतानि त्रीणि ।

कत्पयग्रीवमेकम् ।

प्रजापतेर्हृदयमेकम् ।

अनड्डुद्व्रतमेकम् ।

महादिवाकीर्त्यानि नव ।

सत्याभूतमेकम् ।

धर्मरोचनमेकम् ।

आदित्यव्रतमेकम् ।

इन्द्ररोचनमेकम् ।

इदानीं सङ्गार एकमिति ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्मजभट्टशङ्करकृते मीमांसाबालप्रकाशे मन्त्रप्रामाण्यनिरूपणम् ।

॥ इति प्रथमाध्यायार्थसंग्रहः ॥

---

अथार्थभावनानिरूपणम् । सैव हि सर्ववाक्येषु मीमांसकमते कारकविशिष्टरूपेण वाक्यार्थो न नैयायिकवत्संसर्गः । तदुक्तम् ।

तद्भूताधिकरणे ।

भावनैव हि वाक्यार्थः सर्वत्राख्यातवत्तया ।
अनेकगुणजात्यादिकारकार्थानुरञ्जिता ॥

इति अर्थैकत्वादेकं वाक्यमित्यत्राप्युक्तम् । भावनैव च वाक्यार्थः स्वकारकविशेषितेति संसर्गो भेदश्च न वाक्यार्थ इत्युक्तम् । तत्रैव भाष्ये ।

भेदः संसर्गो वा वाक्यार्थ इति यद्युच्यते तथाप्येकार्थता न स्यात् । बहुपदेषु भेदानां संसर्गाणां च बहुत्वादिति । तद्विवरणं तु वार्तिके कृतम् ।

व्यक्तिपदार्थपक्षे सर्वव्यक्तीनां गवादिपदेनैवोपात्तत्वाद्विशेषणाख्ये शुक्लादिभिः कृष्णादिव्यवच्छेदमात्रं कर्तव्यं तत्संसर्गः पदार्थान्तर्गतत्वान्न वाक्यार्थो भवतीति तदुपसर्जनस्तेषां भेदो गृह्यते । स च यथा शुक्लशब्देन गोशब्दस्य कृष्णादिभ्यो भिद्यमानत्वाद्भवति । एवं शुक्लशब्दस्यापि गोशब्देनाश्वादिभ्यो व्यावर्तितस्य भवति । व्यवच्छेद्यनानात्वाच्च नास्त्येकवाक्यत्वे प्रमाणम् । भेदसामान्यग्रहणे चासर्ववाक्यार्थैकत्वप्रसङ्ग इति । तथाकृतिपदार्थपक्षे शुक्लत्वगोत्वयोः स्वरूपेणाभिहितयोः सन्निधानादितरेतरानुरञ्जनादर्थसिद्धो भेदो न वाक्यार्थः । स च गोत्वे शुक्लत्वसंसर्गः शुक्लत्वे च गोत्वसंसर्गः सामस्त्येनैकव्यक्त्युपसंहाराद्युपलभ्यत इति नाना ।

यद्यपि च क्वचिद् द्विपदे स एवोभयत्रापि संसर्ग इत्येकत्वं गम्येत तथापि बहुपदे येन पदेनैव पदद्वयं संयुज्यते तेन तेन तत्संसर्गरूपोपश्लेषैरनेकत्वमिति । सा च भावना सर्वपदे का-

रकविशिष्टत्वेन लक्ष्यते तत्रैकैककारकविशिष्टत्वेन तत्तत्कारकपदैः क्रियापदेन तु सर्वकारकविशिष्टत्वेन।

तदुक्तं भावार्थाधिकरणे (अ० २ पा० १ अ० १) यदि हि धर्मस्वरूपमभिधीयेत ततः किं पदेन पदेनोच्यते इति विचारो युज्येत लाक्षणिकत्वे त्वयुक्त इति। वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति नः स्थितिरिति च। लक्षणा च पदार्थधर्मो न पदधर्मः। तदुक्तम्।

तेन तल्लक्षितव्यक्तेः क्रियासम्बन्धचोदनेति।

तच्छब्देनाकृतिः परामृश्यते। तथा न्यायसुधाकृताप्यर्थवादाधिकरणे लिङः प्रवर्त्तनासामान्ये शक्तिमुपपाद्योक्तं प्रवर्त्तनासामान्यस्य वाच्यत्वे ऽवगते तद्विशेषाकाङ्क्षायां प्रैषादीनां पुरुषधर्माणां वेदे ऽनुपपत्तेस्तद्विलक्षणं विशेषान्तरमभिधेयेन सामान्येन विधिप्रेरणानियोगाख्यं लक्ष्यतइति।

अत्र वाच्यप्रवर्त्तनासामान्यधर्म एव लक्षणेत्युक्तं न शब्दधर्म इति। सेयं वाक्यार्थभूता भावनार्थभावनेति गीयते अर्थयतइत्यर्थः फलकामः पुरुषस्तद्धर्मत्वात्। सा च प्रयत्नरूपैव, रथो गच्छतीत्यादौ च लक्षणेति भट्टसोमेश्वरौ भावार्थाधिकरणे प्रत्यपादयत्।

मिश्रास्तु प्रायेण पुरुषधर्मः प्रयोजकव्यापाररूपैव त्वसौ रथो गच्छतीत्यादावपि गत्यनुकूलचक्रभ्रम्यादिरूपास्त्येवेति न लक्षणेति भावार्थाधिकरणएव प्राहुः।

सा च किं करोति पचति पाकं करोतीति च करोतिसामानाधिकरण्यात्सर्वाख्यातवाच्या।

करोतिश्च किं चिदुत्पादयत्वस्त्वन्तरविषयं प्रयोजकव्यापारमेवाह। तस्माच्च पूर्वापरीभूतं सर्वकारकान्वययोग्यं क्रियारूपमाख्यातेनैवोच्यत इत्यनन्याख्येयो भावार्थ इत्युभये ऽप्याहुः। यथा कर्मत्वं द्वितीयावाच्यम्। अत एव घटः कर्मत्वमानयन इतिरित्ययोग्य वाक्यमाहुः। सा च चेतनप्रवर्त्तनात्मकविध्यवरुद्धा पुरुषार्थरूपं भाव्यं विना विध्यनुपपत्तेः पुरुषार्थरूपं भाव्यमवलम्बमाना तस्यानिर्ज्ञातकरणत्वादनिर्ज्ञातेतिकर्तव्यताकत्वाच्च स्वयं शास्त्रीयं सच्छास्त्रीये एव करणेतिकर्तव्यते गृह्णाति। इत्यर्थभावनानिरूपणम्।

एतामेव च भावनां साक्षाद्विषयीकुरुतो विधिप्रतिषेधौ तद्द्वारा तु तद्विशेषणानि कारकाणि। तदुक्तम्।

तद्भूताधिकरणे।

विशिष्टां भावनां प्राप्य शक्तिर्विधिनिषेधयोरिति ।

तत्र विधिः प्रेरणा नियोग इत्येकार्थाः । सैव च शब्दभावनेत्यप्युच्यते । लिङादिरूपशब्दधर्मत्वात् । तदुक्तं भावार्थाधिकरणे ।

अभिधाभावनामाहुरन्यामेव लिङादयः ।

अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ।

इति । अभिधीयतेऽनेनेत्यभिधा लिङादिः शब्दस्तद्धर्मोऽभिधाभावना शब्दभावनेति यावत् ।

सा च सामान्यतो विशेषतश्चैव साध्या । स्वतन्त्रपुरुषप्रवृत्तिर्द्विधा लोके दृश्यते । क चित्स्वेच्छयार्थं सुखार्थं प्रवर्तते । क चिदन्यप्रेरित आचार्यप्रेरितोऽहं ग्रामान्यामि न स्वेच्छयेति व्यवहारात् । यद्यप्याचार्योदिरन्यमनिच्छन्तं न शक्नोति प्रवर्तयितुं तथापि पारलौकिकेच्छारहितमपि शिष्यादिकं स्वप्रवर्तनाबलेनेच्छामुत्पाद्य प्रवर्तयतीति द्वैविध्योपपत्तिः ।

तत्र शब्दश्रवणानन्तरभाविन्यां प्रवृत्तावाचार्यादेः स्वप्रवर्तनाज्ञानजननेन प्रवर्तकत्वमवसीयते । का पुनः प्रवर्तना प्रवृत्तिहेतुभूतः प्रवर्तयितुर्धर्मः । प्रवर्तयितृधर्मत्वाभावे यज्ञदत्त एव मां प्रवर्तयति न देवदत्त इति व्यवस्थानुपपत्तेः । प्रवृत्तिहेतुज्ञापकत्वेन तु व्यवस्थोक्तौ देवदत्तस्त्वां प्रवर्तयतीति प्रवर्तनाज्ञापनाद्यज्ञदत्तस्यापि प्रवर्तकत्वापत्तिः ।

तथा लौकिकलिङो ऽपि गुर्वादिगतासाधिज्ञापकस्य प्रवर्तकत्वोपपत्तिः । लोके चाचार्यादेः प्रवर्तयितुर्धर्मो ऽहमेनं प्रवर्तयामीति प्रवर्तयितुर्मानसप्रत्यक्षवेद्यः प्रियादिरूपो नापह्नोतुं शक्यते । वेदे तु पुरुषाभावेन लिङादेरेव प्रवर्तकत्वात्तद्धर्मो ऽभिकार्यः स एव विधिः ।

तत्रांशप्रवर्तनमध्येषणम् । समस्यामन्त्रणम् । नीचस्य निमन्त्रणमाज्ञात्यम् ।

एषु च लिडादेरनुशासनाच्छक्तिमदः । तत्र चानर्थकपरिहाराय प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि यच्चतुष्टयानुगतमेकं प्रवर्तमात्रं शक्यतावच्छेदकम् । ईप्सितानीप्सितकर्मणोरिव साध्यत्वं द्वितीयाया विषयार्थं । अत एव हरदत्तः ।

अपि प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि ।

तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥

इत्याद्याह ।

न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा ।

विध्यादीनामुपादानां चतुर्णामादितः कृतमिति ॥

अत्र लौकिकनिमन्त्रणादिभ्यो ऽन्यो ऽप्यलौकिको भेदो ऽस्ति। न्यायसिद्ध इति न्यायसूचनं न्यायव्युत्पादनं वाच्यतावच्छेदकस्य प्रवर्तनात्वस्याश्रया इयत्तो व्यक्तयो न लौकिक्य एवेति सूचनं प्रपञ्चः ।

ननु लोडर्थप्रैषातिसर्गयोरपि प्रवर्तनात्वात्कथं चतुरुक्तिः। नैवम् ।

कामचारानुज्ञारूपस्यातिसर्गस्य कामचारकरणात्मकामन्त्रणरूपत्वात् । प्रवर्तनासामान्यस्यैव च प्राप्तविषयत्वविशेषितस्य प्रैषत्वात् । तदुक्तम् ।

प्रवर्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते ।
अप्राप्तप्रेषणं सर्वं विधित्वं प्रतिपद्यते ॥

इति "स्वाध्यायो ऽध्येतव्य" इत्यादौ प्रैषान्तःपातीविधेयत्वभूतप्रवर्तनामात्रं लक्ष्यम्। अप्राप्तप्रवर्तनं च विधिरिति विधातृतेयुक्तार्थः ।

न्यायसुधायां तु शक्तिग्रहो ऽन्यथोक्तः। बुभुक्षितस्य बालस्य रोदनेन स्तनपाने प्रवर्तनां ज्ञात्वा स्तनदाने माता प्रवर्तते । तदासौ तस्या मातुः प्रवृत्तेः कारणं जिज्ञासमानः कारणान्तरानुपलब्ध्या स्वप्रवर्तनायां कारणत्वं प्रकल्प्य गामानयेति वाक्यश्रवणानन्तरं प्रयोज्यप्रवृत्तिं दृष्ट्वा मातृप्रवृत्तिदृष्टान्तेन तस्यामपि प्रवर्तनाज्ञानस्य कारणत्वमनुमाय तत्कारणजिज्ञासायां लिङादिशब्दश्रवणानन्तर्यात्तस्यैवान्वयव्यतिरेकाभ्यां प्रवर्तनाभिधानशक्तिं कल्पयतीति ।

अथ प्रवर्तनालक्षणे पूर्वोक्ते पदकृत्यम् । तत्राद्यविशेषणेन प्रवर्तयितृकृतयागादेर्निरासः । धर्मशब्देन च समवेतत्ववाचिना प्रवर्तयितृसम्बन्धिनामपि तदसमवेतानां प्रवर्त्यलिङ्शब्दतदुच्चारणानां निरासः ।

सर्वस्यापि लक्षणस्य फले ऽतिव्याप्तिस्तस्य प्रवृत्तिं प्रति हेतुत्वात् । प्रवर्तयितृगुणादिधर्मत्वाच्च ।

अतः परसमवेतप्रवृत्तिहेतुत्वमत्र विवक्षितं फलं तु प्रवर्तयितुरेव प्रवृत्तेर्हेतुर्न परसमवेतप्रवृत्तेरिति नोक्तातिव्याप्तिः ।

महामुद्गलभट्टास्त्वाहुः। धर्मशब्देनापूर्वनिरासः । प्रवर्तयितृशब्देनेष्टसाधनत्वयोः । आद्यविशेषणेन निष्ठीवनादीनामिति। तन्न ।

धर्मशब्देनापूर्वनिरासायोगात् । अपूर्वं हि प्रवर्त्यगतं प्रवर्तयि

त्तौ हेतुवाक्यार्थज्ञानइव पदाभिहित एव पदार्थ इत्यवश्यमभ्युपेयम्। तच्चैतन्ममापि तुल्यमिति न सोमेश्वरोक्तदूषणावकाशः कश्चित्। तस्माद्वेदे लिङादिरेव प्रवर्तकः। तदभिधेय च प्रवर्तनाविशेषः प्रेरणा विधिरिति वाच्यतइति। इति विध्याख्यशाब्दभावना निरूपणम्॥

निवारणारूपापि शब्दभावना निवर्तनारूपसामान्यतो निवारणा रूपविशेषतश्च विधिवदेव प्रसाध्या। सापि च निवृत्तिहेतुर्निवर्तयितुर्धर्मरूपाहमेनं निवर्तयामीति निवर्त्तयितुर्मानसप्रत्यक्षवेद्या प्रवर्त्तनावत्। सापि च न्यूनोत्तमसमविषयत्वेन त्रेधा लोकेषु धर्मो वेदे च पुरुषाभावात्तदीयाशयविशेषरूपतत्त्वयासम्भवाल्लिङादेरेव निवर्तकत्वात्तद्धर्मभूता चतुर्थ्यपि विधाङ्गीकार्या। सैव च प्रतिषेधो निषेध इति च गीयते।

लोके तु तदुभयव्यवहारो विधिव्यवहारवच्छास्त्र एव। तत्र त्वेतावान्विशेषः।

*न निवर्तनायां विधिनिमन्त्रणेतिवत्प्रवर्तनायां शक्तिग्राहक*मनुशासनमस्ति तथाप्यनादौ संसारे नञ्युपहितलिङादिश्रवणानुविधायिनीं प्रयोज्यवृद्धनिवृत्तिं दृष्ट्वा आवापोद्वापाभ्यां नञुपहितलिङादेर्निवृत्तावेव शक्तिग्रहे प्रसक्ते गुरुणा ऽहंनिवर्तकेन निवर्त्तितो निवर्ते इत्यादिगुरौ निवर्त्तकत्वव्यवहारान्यथानुपपत्त्या प्रवर्तनायामिव प्रवर्त्तकत्वान्यथानुपपत्त्या तद्व्यापारभूतायां निवर्तनायां शक्तिग्रहो भवति व्युत्पित्सोः। तदुक्तं तद्भूताधिकरणवार्त्तिके।

> विधायकैरसंयुक्तो न हि नञ्प्रतिषेधकः।
> विधिना युज्यते यत्र न हन्याच्चापि चेदिति॥
> तत्राभावार्थता नैव स्वयं पुंसो रुणद्धि हि।

इति अत्र नञो निवर्त्तनायां शक्तिरुक्ता। नञ्टीकायां तु प्रतिषेधविधिपरो हि विधायक इत्यादौ प्रत्ययावृत्तिलक्षणो वाक्यभेदप्रसङ्गः इत्यन्ते ग्रन्थे विधायकपदेन लिङ एव प्रतिषेधार्थत्वेऽपि पक्ष उक्तः।

तथा च निषेध्यलिङ्गविवक्षायां तस्यैवावृत्तिरुक्ता न नञः। येषान्त्विति ग्रन्थे तु पूर्वमतमप्युक्तम्। तत्र नञादेरभावविषयाया लिङादेश्च प्रवर्त्तनाविषयायाः शक्तेस्त्यागस्याविशेषे ऽपि। तथा नञादेर्निवर्तनावाचित्वपक्षे तत्समभिव्याहृतलिङादेरागादिमात्रप्रवर्त्तनानुवादकत्वस्य लिङादेश्च निवर्त्तनावाचित्वपक्षे नञादेस्तत्फलीभू-

तार्थप्रवृत्त्यभावानुवादकत्वस्याविशेषे ऽपि अमानो नाः प्रतिषेध इत्यव्ययचतुष्टये शक्तिचतुष्टयं कल्प्यमित्याद्यपक्षे लाघवम् । लिङ्लोट्पञ्चमलकाराणां तव्यादीनां चानेकेषां कृत्यानां चतुष्टयाधिकशक्तिकल्पनापत्त्या गौरवाच्च प्रत्ययशक्तिकल्पनापक्षो युक्त इति नञि शक्तेर्वार्त्तिककृता द्विरभिधानेन तत्रादरं सूचयता ध्वनितमिति । इति प्रतिषेधाख्यशब्दभावनानिरूपणम् ।

सेयं द्वय्यपि शब्दभावना प्राशस्त्याप्राशस्त्यज्ञानानुगृहीतैव स्वफलभूतां प्रवृत्तिं निवृत्तिं च जनयतीति तदितिकर्त्तव्यतात्वेनापेक्षते गृह्णाति चार्थवादैः स्वाम्नानार्थवत्त्वाय लक्षितम् । तस्याश्चेति कर्त्तव्यतापेक्षा तदन्वयश्चार्थभावनावच्छिन्नान्वयात्कर्तव्यत्वेन प्रतीतौ तत्र यथ च भाव्यकरणयोराकाङ्क्षापूर्वमन्वये स्यात् नान्यथा न च शब्दभावना ज्योतिष्टोमादिप्रातिस्विकविधिवाक्येषु स्वरूपतः सत्यपि कर्त्तव्यत्वेन प्रतीयते किं त्वर्थभावनैव । अतो ऽध्ययनविधौ सा विधीयमानत्वात्कर्त्तव्यत्वेन प्रतीयते । तदुक्तं वार्त्तिके । सा ह्येव प्रवर्त्तते इति । व्याख्यातं चाभियुक्तैः ।

अध्ययनविधिवशात्कार्यत्वेन प्रतीयतइति ।

ननु तत्राख्यातप्रत्ययोक्तार्थभावनैवाध्ययनकरणिका विधीयते न तु प्रेरणा तस्या आख्यातवाच्यत्वाभावाल्लिङ्गा च विधिद्वयानुक्तेः । अत्रोच्यते । न तावत्सक्तुहोमवद् द्वितीयाभङ्गो ऽत्र पुरोहितं वृणीतइति यत्तु द्वितीयावधृतप्रधानभावं स्वाध्यायं प्रति गुणाभूताध्ययनभावनायगता । ततः संस्कार्यत्वानुपपत्त्या ऽयमेव विधिः शक्त्यनुसारेण स्वाध्यायं सम्भविनि स्वे विनियुज्य पर्यवस्यतीति तृतीये उक्तम् । तत्र विध्यंशो तावत्पुरुषप्रवृत्तिरेव स्पष्टम् । तत्र च शब्दानां करणत्वं वा कर्तृत्वं वा निरूप्यते इति वार्त्तिकालोकडमपविवक्षासम्भवे ऽपि वेदे प्रवर्तयितृपुरुषाभावेन कर्तृव्यापारव्याप्यत्वानियतकरणत्वासम्भवात्स्वातन्त्र्याच्च कर्तृत्वेनैव स्वाध्यायो विनियुज्यते । अन्तरङ्गं च कर्तृ ( कारकं क्रियायाः । अत एवाख्याताभिहिता संख्यानभिहिते ऽपि कर्त्तर्येवान्वेतीत्युत्सर्ग इत्युक्तं कर्त्रधिकरणे । एवं कर्तृ(१)तया स्वाध्याये विनियुक्ते ऽर्थवादादेर्गुणत्वाद्विधायकस्य च प्राधान्यात्प्रातिस्विकवाक्यस्था लिङः कर्तृत्वेन विनियुज्यन्ते ऽध्ययनेनोपात्ता लिङो भावयेयुरिति । ततः किमित्यपेक्षिते सामर्थ्यादेव पुरुषप्रवृत्तिमिति भावयेयुरितिपदध्याहृत्य सम्बध्यते ।

---

(१) षष्ठ पा० २ सू० ना० ।

श्रुतार्थापत्तिमूलकमध्यायमध्याहार इष्ट्वा छिन्धीत्यादिवत्। तदुक्तमर्थवादाधिकरणवार्तिके ततः किमित्यपेक्षिते सामर्थ्यादेव पुरुषप्रवर्तनमिति सम्बध्यते इति। तेनेदं श्रुतानुमितैकदेशनिष्पन्नं महावाक्यं भवति। अध्ययनसंस्कृताः स्वाध्यायपदोपात्ता लिङः पुरुषप्रवृत्तिं भावयेयुरिति। अयमेष च वाक्यार्थः पारमार्थिको ऽन्यथाशब्दभावनायाः कार्यत्वानवगमात्तदिति कर्तव्यताभूतप्राशस्त्यलक्षणयार्थवादप्रामाण्यं न सिध्येत्।

नन्वर्थवादाधिकरणएवाद्यसूत्रे वार्तिके कर्मस्यर्थज्ञानस्य लैङ्गिकविनियोगात्सदर्थो ऽध्ययनविधिरधीतेन स्वाध्यायेन फलवदर्थावबोधं भावयेदितीत्युक्तम्। तद्विरुद्धा कर्तृबोधोक्तिः प्रवृत्तिफलत्वोक्तिश्च सत्यमुक्तम्। न तु विरोधः। शब्दभावनायां हि लिङादीनां कर्तृत्वे सत्यर्थात्फलवदर्थावबोधे करणत्वं फलितं भवतीति प्रवृत्तिकर्तृत्वमेवार्थावबोधकरणत्वेन फलितं व्याख्यातमित्यविरोधः। प्रवृत्तिफलत्वं तु फलवदर्थावबोधद्वारेति न भाष्यद्वयविरोधः। लिङो हि प्रवृत्तिरूपस्य वाक्यार्थस्येष्टसाधनतया बोधं कृत्वा प्रवृत्तिं जनयन्ति भावयेति। नन्वेवमपि चेतनप्रयत्नेनात्मा विधिः कथमचेतनालिङो नियुङ्क्तेति चेत्। सत्यम्।

उपायासत्यत्वे ऽप्युपेयसत्यत्वात्। यथा वर्णलोपागमविकारादयसत्यत्वे ऽपि तेन सत्यमेव साधुत्वं ज्ञाप्यते शिष्टपरिग्रहायातव्याकरणप्रामाण्यात्। एवमिहाध्येता तावल्लिङ् मां प्रवर्तयतीति लिङ्व्यापारभूतशब्दभावनाकर्तव्यतां बुध्यते तद्गतचैतन्यस्य लिङ्यारोपाद्वियोज्यत्वमसत्यमेव। तेनोपायेन शब्दभावनाकर्तव्यत्वं सत्यम् ज्ञाप्यते अर्थवादप्रामाण्यात् तस्याहाकर्तव्यत्वे तदितिकर्तव्यताभूतप्राशस्त्यानपेक्षणात्तल्लक्षणयार्थवादप्रामाण्यं न स्यादिति। एवं कर्तव्यत्वेनावगतायाः शब्दभावनायाः करणं वाक्यालोचनयैव विधिज्ञानमेव।

अथ केनेत्यपेक्षितं पूर्वसम्बन्धानुभवापेक्षेण विधिविज्ञानेनेति सम्बध्यत इति वार्तिकात्। युक्तं चैतत्। यागो हि स्वरूपतो भावनया साध्यः संस्तस्यां फलोपहितायां करणं भवति। एवं विधिज्ञानमपि स्वरूपेण विधिना विषयेण साध्यम्। सत्तत्रैव शब्दभावनायां प्रवृत्तिरूपफलोपहितायां करणं भवति। केचित्सम्बन्धस्मरणमेव करणं विधिज्ञानं तु तद्व्यापारः करणत्वनिर्वाहको यागस्येवापूर्वमित्याहुः।

लिङो ऽभिधा सैव च शब्दभावना।

भाव्यं च तस्याः पुरुषः प्रवृत्तिः ॥
सम्बन्धबोधः करणं तदीयम् ।
प्ररोचना चाङ्गतयोपयुज्यते ॥

इति । अत्र प्ररोच्यते ऽनयेति प्ररोचना प्राशस्त्यज्ञानम् । तच्चाङ्गं फलोपकारिप्रयाजादिवत् । तज्जन्यं तु प्ररोचनं प्रवृत्तिप्रतिबन्धकालस्य भङ्ग उपकारो ऽङ्गत्वनिर्वाहकः । प्रयाजादिजन्यापूर्ववत् प्रयाजद्रव्यदेवतवच्चात्रार्थवाद इति ज्ञेयम् । इति शब्दभावनेतिकर्तव्यतानिरूपणम् ।

अथ द्वितीयाध्यायार्थकर्मभेदप्रसङ्गात्सर्वे कर्मभेदा निरूप्यन्ते ।

तत्र कर्म द्विविधं लौकिकं वैदिकं च । वैदिकमपि त्रिविधं प्रवृत्तिरूपं निवृत्तिरूपमुभयरूपं च । अन्त्यं पर्युदासाख्यमिति ।

तत्राद्यं कर्म द्विविधं क्रत्वर्थं पुरुषार्थं च तन्त्ररत्ने तु लिप्सासूत्रे प्रथमवर्णके वैदिककर्मणां त्रैविध्यमुक्तं क्रत्वर्थं पुरुषार्थमनुभयरूपं च अध्ययनमाधानं च न क्रत्वर्थं न पुरुषार्थमिति (तन्त्ररत्ने द्रव्यार्जनवर्णके १) शास्त्रदीपिकायां तु तत्रैव ।

यच्चाधानं कथं भावपूरणार्थं विधीयते । तत्क्रत्वर्थम् ।
अन्यत्करणं फलं च पुरुषार्थमिति ग्रन्थेन द्वैविध्यमेवोक्तम् । तद्गुरूणामपीष्टम् । तन्मतं हि तत्र तन्त्ररत्नेऽप्युक्तम् ।

अध्ययनस्य पुरुषार्थत्वमिष्टमिति । त्रैविध्ये तु मूले द्रव्यार्जनवर्णक एव नचाधानमङ्गयितुमर्हतीति भाष्यस्य व्याख्यावसरोक्त्यर्थे वार्तिके यथाधानं न क्रत्वर्थं न पुरुषार्थमेवं कस्मान्न भवतीति ग्रन्थस्य पूर्वपक्षग्रन्थत्वे ऽपि आधानं न पुरुषार्थमिति सिद्धान्तवार्तिकम् । तत्तु तन्त्ररत्ने प्रत्यक्षेण द्रव्यार्जनस्य यथापुरुषार्थतावगम्यते नैवमाधानस्येत्यभिप्रायं व्याख्यातम् । अतो न वार्तिकं न किंचित्त्रैविध्ये मूलमस्ति द्वैविध्ये तु मूलमथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासेति सूत्रमेव ।

अत्र हि द्वैविध्यमेव कर्मणामुक्तं न त्रैविध्यम् । भाष्यमप्येवमेव अङ्गं क्रत्वर्थः प्रधानं पुरुषार्थ इत्यादि । अन्यत्तु ग्रन्थव्याख्यात्रैविध्यदूषणादि च शास्त्रदीपिकाप्रकाशे ऽनुसन्धेयम् । पुनरपि वैदिकं कर्म द्विविधं गुणकर्म प्रधानकर्म चार्थकर्मापरपर्यायम् ।

तत्राद्यं यथा ऽऽधानम् ।
द्वितीयं यथाग्निहोत्रादि ।

---

(१) अर्थ पा० १ पु० ना० ।

क्रत्वर्थमपि द्विविधमारादुपकारकं सन्निपत्योपकारकञ्च ।

तत्राद्यमदृष्टार्थमेव यथा प्रयाजाः ।

सन्निपत्योपकारकं तु त्रिविधं दृष्टार्थमदृष्टार्थमुभयार्थं चाश्रयिकर्माख्यम् ।

दृष्टार्थमपि द्विविधं भाव्युपयोगसंस्कारार्थं (भूतोपयोगसंस्कारार्थं १) चेति ।

तत्राद्यं द्वयं प्रत्येकं द्विविधम् । द्रव्यसंस्कारकं देवतासंस्कारकं चेति ।

तत्र दृष्टार्थं भाव्युपयोगद्रव्यसंस्कारार्थम् । सन्निपत्योपकारकं द्विविधम् । साक्षाद्विनियुक्तसंस्कारार्थं साक्षाद्विनियुक्तस्य यदुपकारकं तत्संस्कारार्थं चेति । तत्राद्यं यथा "व्रीहीनवहन्ती"ति ।

द्वितीयं यथा "वत्समालभेते"ति । अत एव वत्सस्यैव विनियुक्तदोहाङ्गगोद्रव्योपकारकतया वत्समालभेतेत्यत्रालम्भसंस्कार्यत्वमिति पशुसोमाधिकरणे भवदेवः ।

(भूतोपयोगद्रव्यसंस्कारार्थं दृष्टार्थं सन्निपत्योपकारकं २) प्रतिपत्तिस्तु त्रिविधा प्रधानोत्तरकाला तत्पूर्वकाला तत्समकाला च ।

तत्राद्या यथा "चात्वाले कृष्णविषाणां प्रास्यती"त्यादिः ।

द्वितीया यथा "शकृत्प्रविध्यति" "लोहितं निरस्यती"ति ।

इयं चतुर्थे ( पा० १ अ० ११) पशावनालम्भाल्लोहितशकृतोरकर्मत्वमित्यधिकरणे प्रतिपादिता । प्रधानसमकाला यथा ऽऽश्रेयचोदनया विहिते यागे "चतुरवत्तं जुहोती"ति होमरूपा प्रतिपत्तिः । होमो हि "वषट्कृते जुहोती"ति विधानाद्वषट्कारोच्चारणोत्तरक्षणे ऽध्वर्युणा कर्तव्यः तस्मिन्नेव च क्षणे यागस्मरणार्थेन वषट्कारेण स्मारितो यागो यजमानेनानुष्ठेयः ।

तदिदं सर्वप्रदानाधिकरणवार्तिके प्रतिपादितम् ।

(भूतभाव्युपयोगोभयसंस्कारार्थं [redacted] द्रव्यसंस्कारकं नास्त्येव भूतभाव्युपयोगोभयदेवतासंस्कारकस्तु पशुपुरोडाशयाग आश्रयिकर्मवदग्रे वक्ष्यते ३) ।

अदृष्टार्थं सन्निपत्योपकारकं यत्तदपि प्रतिपत्तिवदेव त्रिविधम् ।

---

( १ ) अयं पा० २ पु० ना० प्रतिपत्तिचेति पा० ।

( २ ) अयं पा० २ पु० ना० ।

( ३ ) अयं पा० २ पु० ना० ।

भूतोपयोगसंस्कारार्थं भाव्युपयोगसंस्कारार्थमुपयोगसमकालं च ।

(तत्राद्यं यथा हुतहविर्दोहः शिष्टाचारकल्प्याविधिप्राप्तः ।

न चेयं प्रतिपत्तिः होमेन प्रतिपादितस्याकीर्णकरतानिवृत्तौ प्रतिपत्त्यन्तरानपेक्षत्वात् । भाव्युपयोगद्रव्यसंस्कारार्थमपि द्विविधम् ।

साक्षाद्विनियुक्तसंस्कारार्थं साक्षाद्विनियुक्तस्य यदुपकारकं तत्संस्कारार्थं चेति १) ।

तत्राद्य (२) यथा "व्रीहीन्प्रोक्षती"ति ।

( द्वितीयं यथा दशमे खलेवाल्या स्वाज्याहुतिः कर्तव्या विनियुक्तयूपासम्बन्धत्वेनाविनियुक्तस्याणुसम्बन्धत्वेन यागादुपकारित्वादिति पूर्वपक्षयित्वा सिद्धान्तितं न कर्त्तव्या यूपीयो होमाग्रश्च स्थाणुरिति । तत्संस्कारद्वारा यूपसंस्कारार्थत्वादिति ३ ) ।

तृतीयं यथा एककपालमपर्यावर्त्तयञ्जुहोतीति ।

प्रकृतौ तु पर्यावर्तनविधिरदृष्टार्थ एव दृष्टादृष्टोभयार्थमाश्रयिकर्माप्य यत्तदपि त्रिविधम् ।

किं चिद् द्रव्यप्रक्षेपांशेन दृष्टार्थं देवतोद्देशांशेन त्वदृष्टार्थं यथा स्विष्टकृद्यागाः अग्नेः स्विष्टकृतः क चिदन्यत्राविनियोगात् । किं चिद्देवतोद्देशांशेन दृष्टार्थं द्रव्यप्रक्षेपांशेनादृष्टार्थं यथोत्तमः प्रयाजः । तत्र हि स्वाहाग्निं स्वाहा सोममित्यादियाज्यामन्त्रलिङ्गाक्रमेण प्रत्यभिज्ञायमाना आज्यभागादिषु वक्ष्यमाणा एव देवताः संस्कार्या तदेतद्दशमे ( पा० १ अ० ७ )प्रयाजे च तन्न्यायत्वादित्यधिकरणे प्रतिपादितम् ।

पशुपुरोडाशयागो ऽप्येवमेवेति दशमे एव ( पा० १ अ० ९ ) पशावपीति चेदित्यधिकरणे प्रतिपादितम् ।

अत्रेदं चिन्त्यते । "अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपती'त्यग्नीषोमदेवतासंस्कारार्थतया विहितः पुरोडाशयागो भूतवपायागाभ्यासार्थं यद्वोत भाव्यङ्गयागाभ्यासार्थं यद्वोतोभयार्थो ऽपीति । तत्रोभयार्थो ऽयं तत्संस्कार्याया अग्नीषोमदेवताया उभयत्र सत्त्वादित्याद्यः पक्षः ।

द्वितीयस्तु वपायागाभ्यासार्थं वपासंस्कार्यदेवताया उभयत्र

---

( १ ) चर्च पा० १ पु० मा० ।

( २ ) द्वितीयमिति १ पु० पा० ।

( ३ ) चर्च पा० १ पु० मा० ।

सत्त्वे ऽपि "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते"ति च"तस्याप्य पौर्णमासीं वैमृधमनुनिर्वपती"तिवच्च वाक्येन वपायागाऽभ्यासमात्रार्थत्वावगमादिति ।

उच्यते पुरोडाशयागस्तावद्वाक्यादेवाग्नीषोमीयदेवतासंस्कारार्थः। तत्र वपायागस्य वाक्यादेवाग्नीषोमदेवतारूपोद्देश्यविशेषणत्वे स्वतन्त्रोद्देश्यत्वे वाक्यभेदापत्तिः । बृहस्पतिसववैमृधयो(१)स्तु नायं दोषः । तस्मान्न भाव्यं यागाऽभ्यासार्थमेव तत्रोपपत्तिः ।

सन्निपत्योपकार्यं यागापूर्वं प्रधानोत्पत्त्यपूर्वमेव व्याप्रियते इति हि सार्वत्रिकं क्व चिदेव स्वगत्या तदुत्पन्नस्यैव प्रधानापूर्वस्य धारणे व्याप्रियत इति कल्प्यते ।

तदिह भाव्यङ्गयागाऽभ्यासापूर्वोत्पत्तौ पुरोडाशयागापूर्वस्य व्यापारसम्भवे उत्पन्नवपायागाऽभ्यासापूर्वधारणे व्यापारकल्पना न सम्भवति । तस्मात्पुरोडाशयागो ऽप्युक्तमप्रयाजवद्द्रव्यमात्रादेवतासंस्कारार्थ एवेति ।

सिद्धान्तस्तु प्रकरणावगतोभयार्थत्वबलेन भूतोपयोगभाव्युपयोगदेवतासंस्कारार्थत्वाद्द्रव्यभावादुत्पन्नस्यापूर्वस्य धारणमनुत्पन्नस्य चोत्पत्तिरित्यविरोधादुभयाऽभ्यासार्थत्वमेवेति । किं चिदाश्रयिकर्मदेवतोद्देशांशेनापि दृष्टार्थं द्रव्यप्रक्षेपांशेनापि द्रव्यत्यागांशेनैव तु केवलदृष्टार्थमित्याश्रयिकर्मतां लभते ।

यथा "सूक्तवाकेन प्रस्तरं प्रहरती"ति प्रस्तरप्रहरणं सूक्तवाकप्रकाशिते ऽग्न्यादिदेवताकल्पनात्तदुद्देशेनापि दृष्टार्थम् ।

एवं प्रस्तरे जुहूमन्त्रादयतीत्युपयुक्तप्रस्तरद्रव्यप्रक्षेपांशेनापि दृष्टार्थम् । तत्त्यागमात्रे तु तत्रादृष्टार्थमिति । पुनरपि वैदिकं कर्म चतुर्विधम् ।

उत्पत्तिप्राप्तिविकृतिसंस्कृत्यर्थत्वेन ।

तत्राद्यं यथा "प्रणीताभिः संयौती"ति संयवनं पुरोडाशपिण्डोत्पत्त्यर्थम् । यागादि च स्वर्गाद्युत्पत्त्यर्थम् ।

द्वितीयं "पयो दोग्धी"ति । ऊधःस्थस्यैव हि दुग्धस्य प्राप्त्यर्थं दोहनम् ।

तृतीयं यथा "व्रीहीनवहन्ती"ति । वैतुष्यरूपविकारार्थत्वात् ।

चतुर्थं यथा व्रीहीन्प्रोक्षतीति अदृष्टरूपसंस्कारार्थत्वात् ।

पुनरपि वैदिकं कर्म चतुर्विधम् । प्रकृतिविकृतिरुभयात्मकमनुभयात्मकं च ।

(१) वैमृधेति २ पु० पा० ।

तत्राद्यं यथा ऽग्निहोत्रदर्शपूर्णमासादि ।

द्वितीयं यथा मासाग्निहोत्रादि ।

तृतीयं यथा ऽग्नीषोमीयसवनीयपश्वादि ।

अष्टमे ( पा० १ अ० ७ ) ह्येतदुक्तं दर्शपूर्णमासयोरग्नीषोमीयो विकृतिस्तस्य च सवनीयपशवस्तेषां चैकादशिनाः सुत्याकालत्वसाम्यात्तेषां च प्राजापत्याः पशुगणत्वसाम्यादिति ।

चतुर्थं यथा दर्विहोमा नारिष्ठादयः । तेषां ह्यपूर्वत्वमष्टमान्त्ये उक्तम् । एवं गृहमेधीयाद्यपीति ।

पुनरपि वैदिकं कर्म द्विविधम् ।

नैमित्तिकं काम्यं च । नैमित्तिकमपि द्विविधं नियतनिमित्तकमनियतनिमित्तकं च ।

अनियतनिमित्तकमपि द्विविधं दोषनिर्घातार्थमदोषनिर्घातार्थं च ।

तत्र नियतनिमित्तकं यथा । "यावज्जीवमग्निहोत्रं जुहोति" "वसन्ते वसन्ते ज्योतिषा यजेते"ति ।

तत्राद्यं यावज्जीवाधिकरणे प्रतिपादितम् ।

द्वितीयं तु षष्ठे सोमाधिवाप्रकरणवाक्येन संयोगादित्याधिकरणे प्रतिपादितम् ।

अनियतनिमित्तकं दोषनिर्घातार्थं यथा "यो ऽमावास्यां पौर्णमासीं वातिपातयेदग्नये पथिकृते ऽष्टाकपालं निर्वपेदिति । यो ऽमावास्यां पौर्णमासीं वातिपातयेद्वैश्वानरं द्वादशकपालं निर्वपेदिति च । दोषनिर्घातार्थत्वादेकार्थत्वादनयोर्विकल्पो द्रष्टव्यो ( पा० ३ अ० ५ ) प्रायश्चित्तेषु चैकार्थ्यादित्यधिकरणे वक्ष्यते ।

अनियतमदोषनिर्घातार्थं यथा आद्या पवनसमुच्चयस्तद्दोषनिर्घातार्थेष्विति पूर्वापवादार्थे ऽधिकरणे प्रतिपादितम् । "भिन्ने जुहोती"त्यादि काम्यमपि कर्म त्रिविधम् ।

ऐहिकफलकमामुष्मिकफलकमनियतफलकं च ।

तत्राद्यं यथा "कारीर्या वृष्टिकामो यजेत" "श्येनेनाभिचरन्यजेते"ति जातेष्टिश्च पुत्रत्वादिफलिका । उपस्थितसस्यार्थैव हि वृष्टिः सर्वैः काम्यते नानुपस्थितैहिकसस्यार्थापि किमुत जन्मान्तरीयसस्यार्था । एवमभिचारो ऽप्युपस्थितशत्रोरेव काम्यते नानुपस्थितस्यैहिकस्यापि किमुत जन्मान्तरीयस्य । एवं पुत्रत्वादपि यो यदा जायते पुत्रस्तस्यैव काम्यते न कालान्तरजातस्यैहिकस्यापि किमुत जन्मान्तरीयस्येति ।

आमुष्मिकफलकं यथा स्वर्गार्थाग्निहोत्रादि । न हि स्वर्गः केवलसुखात्मको मानुषशरीरेण सुखदुःखोभयभोगार्थं धर्माधर्मोभयारब्धेनानुभवितुं शक्य इति ।

अनियतफलकं यथा "चित्रया यजेत पशुकाम" इत्यादि । पश्वादि हि फलमैहिकामुष्मिकत्वेनानियतमिति चतुर्थे (पा० ३ । अ० ११ ) योगसिद्ध्यधिकरणे प्रतिपादितमिति ।

निवृत्तिरूपमपि कर्म द्विविधं क्रत्वर्थं पुरुषार्थं च ।

तत्राद्यं यथा " नातिरात्रे षोडशिनं गृह्णाती"ति ।

द्वितीयं यथा " न हिंस्यात्सर्वाभूतानी "ति । प्रवृत्तिनिवृत्त्यात्मकतयोभयरूपं पर्युदासाख्यं यत्कर्म तदपि द्विविधं क्रत्वर्थं पुरुषार्थं च ।

तत्राद्यं यथा "यजतिषु ये यजामहं करोति नानुयाजेष्वि"ति " नार्षेयं वृणीते न होतारं वृणीत " इति च ।

द्वितीयं यथा " नेक्षेतोद्यन्तमादित्यमि "ति ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरभट्टनारायणात्मजभट्टशङ्करकृते मीमांसाबालप्रकाशे सकलकर्मभेदनिरूपणम् ।

---

संख्याधिकरणे ( अ० २ पा० २ । अ० ७ ) "सप्तदश प्राजापत्यान्पशूनालभत" इत्युदाहरणे एकस्य हृदयाद्येकादशावदानगणस्य प्रापको यश्चोदकस्तद्बलात्कर्मभेदः प्रतिपादितः । एवं चेद्यत्र चोदको नास्ति तत्र तदपवादः । यथा नवमोपान्त्ये ऽश्वमेधे" श्रुतमीशानाय परस्वत आलभत ताम्पर्यग्निकृतानारण्यानुत्सृजती "त्युदाहृत्य प्रतिपादितम् । ताम्पर्यग्निकृतानिति गुणवाक्येन तदङ्गाङ्गरीतिविधानादपूर्वत्वमिति ।

ततश्च हृदयाद्येकादशावदानगणाप्रापकस्य चोदकस्याभावादेक एव यागो ऽनेकपशुद्रव्यकः प्राजापत्येषु पूर्वपक्ष इव इयांस्तु विशेषस्तत्रालम्भविशसनाद्यभावात्पाहृदयाद्यनिष्कासेनैव कृत्स्ना एव पश्ववयविनो देवतोद्देशेन त्याज्या इति ।

तदुक्तं सर्वप्रदानाधिकरणे मिश्रैः । त्यागमात्रेण

होमाभावे ऽपि " पर्यग्निकृतानारण्यानुत्सृजती " तिवद्देवतासम्बन्धोपपत्तेरिति । अतश्च संख्याधिकरणे (अ० २ पा० २ अ० ७) न्यायसुधाकृतारण्येषु यो यागभेदः उक्तः स भ्रान्त्यैवेत्युपेक्षितव्यः ।

एवं सति के चिदाक्षिपन्ति एकादशे ( पा० ३ । अ० १३ ) पञ्चशारदीयास्तथेति चोदितत्वोदाहृतं वैशाख्याममावास्यायां सप्तदश मारुतीस्त्रिवत्सा उपाकरोति सप्तदश पृश्नीनुक्ष्णस्तान्पर्यग्निकृतानितरा आलभन्ते प्रेतरानुत्सृजन्तीति । तत्र च सिद्धान्तितं पर्यग्निकृतवाक्येन तदन्ताङ्करीतिविधिः । उक्षवाक्ये च मारुतपदानुषङ्गेण सप्तदशोक्षयागा विधीयन्त इति त्रिवत्सायागैः सप्तदशभिः सह चतुस्त्रिंशत्कर्माणीति । तदनुपपन्नम् ।

अत्रापि ह्युक्षवाक्ये ऽप्येक एव यागः प्राप्नोति तदन्ताङ्करीतिविधिना ऽऽरण्यवच्चोदकाभावेन प्राजापत्यन्यायाभावादिति ।

अत्र ब्रूमः । उक्षवाक्ये आख्यातश्रवणात्त्रिवत्सावाक्यश्रुतमुपाकरोतीत्यनुषज्यते तच्च तत्रानेककर्मविधायीत्युक्षवाक्ये ऽनुषज्यमानमप्यैकरूप्यायानेकमेव कर्म विधत्ते अन्यथासकृदाम्नातमुपाकरोतीत्याख्यातं त्रिवत्सावाक्ये सप्तदश कर्माणि विधत्ते उक्षवाक्ये चैकं कर्म विधत्त इति वैरूप्यमापद्येतेति । इति संख्याधिकरणन्यायविषयाविषयविवेकनिरूपणम् ।

द्वितीये ( पा० २ । अ० ११ ) इन्द्रियकामाधिकरणे गुणे गुणफलसम्बन्ध उक्तः । तदपेक्षितस्य स्वाश्रयस्य लक्षणमुक्तं फलाय विधीयमानो गुणो यत्र कारकतामापद्यते स आश्रय इति । तदिदमव्यापकम् । ज्योतिष्टोमे कात्योऽसव्यादिसंख्याश्रयत्वेन मीमांसकाभिमते । न ह्युक्थ्यादिसंस्थायां फलार्थं क्रियमाणायामपि ज्योतिष्टोमे साकारका भवति किं तु सोम एव । अतः फलाय विधीयमानो गुणो यां क्रियामपेक्षते स आश्रय इत्येवाश्रयलक्षणमभिमतम् । संस्था च समाप्तिरूपत्वात्समाप्तिमन्तमपेक्षते । अतो ऽस्त्येवेदं लक्षणमुक्थ्यादिसंस्थाश्रयभूते ज्योतिष्टोम इति नाव्याप्तिः ।

तथा फलार्थो गुणो यत्र कारकमित्याश्रयलक्षणं साङ्गं प्रस्यात्ये कुम्भीसाद्दिहं फलार्थो गुणो न प्रकृते आश्रयत्वेन सम्मते ऽमावास्यायागे दधिदुग्धकरणके कारकतामापद्यत इति तत्राप्यव्याप्तम् । अतो ऽप्युक्तमेव लक्षणमाश्रयस्य युक्तमिति तथा रेवत्यधिकरणे (पा० २ । अ० १२) क्रियाकारकभावव्यतिरिक्तेनापि समानकर्तृकतासम्बन्धेनाश्रयाश्रयिसम्बन्धं यागेन सह रेवतीवारवन्तीयसम्बन्ध-

करणस्य फलाय विधीयमानस्य गुणस्याश्रय क्रियाकारकभावव्यतिरिक्तसम्बन्धान्तरेणाश्रयाश्रयिभावो न सम्भवतीति नोच्चारितं किं तु तत्सम्भवमङ्गीकृत्यैवान्यदेवोत्तर दत्तम् । एवमप्यग्निष्टोमे सामेति नाचकल्पत इति । तस्मादप्यसमवुक्तमेवाश्रयलक्षणमभिमतं लक्ष्यते च फलार्थगुणस्य यत्र कारकत्वमिति । इत्याश्रयलक्षणनिरूपणम् ।

प्रकरणान्तराधिकरणे पञ्चविधमनुपादेयमुक्तं देशः कालः फलं निमित्तं संस्कार्यं चेति ।

अनुपादेयसन्निधिर्साचिवश्चासन्निधिः प्रकरणान्तरमिति प्रकरणान्तरलक्षणमुक्तं सर्वग्रन्थेषु । तच्च "वारुण्या निष्कासेन तुषैश्चावभृथं यन्ती"त्यत्राख्यातम् । तत्र हि प्रकरणान्तरेणैव भेद उक्तो वार्त्तिके प्रकरणान्तराधिकरणएव ।

शास्त्रदीपिकायामपि सप्तमे ( पा० ३ । अ० ४ ) तयावभृथः सोमादित्यधिकरणे उक्तं यन्तीत्यनेन प्रकरणान्तरन्यायेन कर्मान्तरं विधीयत इति ।

अत्र भट्टसोमेश्वरः समादधे अस्त्येवोक्तलक्षणं तत्र वारुणी निष्कासस्य तुषाणां च भूतोपयोगित्वेन संस्कार्यतयानुपादेयत्वादिति । तदुक्तं तेन । तृतीयया तुषनिष्कासस्य साधनतयोक्तायपि निष्कासस्य वारुण्यामिक्षाशेषत्वात्तुषाणां चाग्नेयादियागशेषत्वाच्च किं चित्सोमलिप्तं स्यात्तेनावभृथं यन्तीतिवत्प्रयाजशेषेण हवींष्यभिघारयतीतिवच्च प्रतिपाद्यत्वं रूपसंस्कार्यत्वाविरोध इति । तन्मन्दम् ।

अधिकरणविरोधात् एकादशे हारिमन्नेव वाक्ये सवनीयपश्वारविप्रकर्षे पूर्वपक्षं विधान्तरेण निरस्य प्रतिपत्तिरिति पूर्वपक्षान्तरं तुषनिष्कासाख्यसंस्कार्यद्वयोद्देशाद्वाक्यभेदापत्तेर्निरस्यार्थकर्मत्वमेवोक्तम् । अत एव प्रकरणान्तरलक्षणे वाच्यम् । नाप्यसन्निधिरिव स्वरूपतो ऽनुपादेयसन्निधिः प्रवेशयः । किं तु तत्कार्यं विधेरुपपदार्थसङ्क्रमासम्भवः । स च यथानुपादेयसन्निधिना भवति । एवमुपादेयद्वयसन्निधिनापि भवति । तस्माद्विधेरुपपदार्थसङ्क्रमासम्भवन सहकृतो ऽसन्निधिः प्रकरणान्तरमिति प्रकरणान्तरलक्षणमभिप्रेतम् । अत एव "विश्वजिता यजेते"त्यादौ यत्रोपपदार्थो विधेयो नास्त्येव नामधेयमात्रश्रवणात् तत्राप्युपपदार्थसङ्क्रमासम्भवसहकृतादसन्निधेरेव भेद इत्यवधेयम् । अत एवोद्भिदादौ नाम्नैव चैवमादीनां भेद इति सन्निधावेव नाम्ना भेद उक्तः । एवमपेव ज्योतिरित्यादावपि ।

अष्टमतृतीये ( अधि० २ ) च जनकसप्तरात्रप्रकरणाम्नाते, "चत्वारि त्रिवृन्त्यह्यान्यग्निष्टोममुखानी"ति वाक्ये चतुः संख्याग्निष्टुत्त्वरूपानेकोपादेयगुणश्रवणे तुपनिष्कासवाक्यवत्प्रकरणान्तरन्यायेनैव भेदो ऽभ्युपगतः ।

अत एव च प्रकरणान्तराधिकरणे ( अ० २ पा० ३ अ० ११ ), "मासमग्निहोत्रं जुहोती"त्यादावनुपादेयगुणो वेति वाक्ये उपसद्भिश्चरिष्यंति गुणान्तरोपादानात्स्वरूपतः सत्यपि वाक्यभेदः सिद्धान्तसिद्ध्यनुपयोगित्वादुपादेयगुणद्वययुक्तवाक्याभिप्रायेणैव सिद्धान्तहेतुतयोक्तो भाष्ये ।

आचार्यैश्च मासादिवाक्येष्वेव तस्य सिद्धान्तासिद्ध्यनुपयोगी दूषितो न सार्वत्रिक इति ध्येयम् । इति प्रकरणान्तरनिष्कर्षनिरूपणम् ।

अथ "मासमग्निहोत्रं जुहोती"त्यत्र कर्मभेदो नैयमिकाग्निहोत्रवत्कर्माभेदो वेति चिन्त्यते ।

तत्र पूर्वपक्षः । "तिस्र आहुतीर्जुहोती"त्यादावयं न्यायः स्थितः यत्र गुणद्वये ऽन्योन्याविरुद्धे कर्मोत्पत्तिवाक्योपात्ते भेदावृत्त्योरन्यतराक्षेपमन्तरेण कर्मान्वयो ऽनुपपन्नस्तत्र भेद एवाक्षिप्यते नावृत्तिरिति । मासाग्निहोत्रवाक्ये च नामातिदेशेन परस्परविरुद्धं सायम्प्रातः कालद्वयं कर्मोत्पत्तिवाक्यगतमस्ति तेन कर्मभेद एवाक्षिप्यते "यदाग्नेयो ऽष्टाकपाल" इत्यत्र पौर्णमासामावास्याकालद्वयेनेवेति । अत्रोच्यते ।

नामातिदेशेनाकृत्याविशेषादभ्यासो ऽपि कालद्वयवत्प्राप्त एव । ततश्चोपात्तेनाभ्यासेनैव कालद्वयान्वयोपपत्तेर्न कर्मभेदाक्षेपः ।

"तिस्र आहुतीर्जुहोती"त्यादौ तु नैव केन चिच्छब्देनाभ्यास उपात्तो यतस्तेनैव त्रित्वसंख्योपपत्त्या स्यादतस्तदुपपत्त्यै कर्मभेद एवाक्षिप्यते । एवमाग्नेयवाक्ये ऽपीति दृष्टान्तद्वयवैषम्यम् ।

अथेदानीमिदं चिन्त्यते ।

"मासं दर्शपूर्णमासाभ्यां यजते" इत्यत्र "ज्यमानौ यजती"ति पदद्वित्वसंख्यया कर्मभेदाद् द्वे कर्मणी यजिना विधीयेते इति तावदविवादम् । तथा दर्शशब्देन पूर्णमासशब्देन च प्राकृताग्नेयादित्रयसम्बन्धि इतिकर्तव्यतात्रयमेकैकेन शब्देनैकैकस्मिन्कर्मण्यतिदिश्यत इत्यप्यविवादम् । अथ परस्परविरुद्धद्रव्यदेवतादिरूपेतिकर्तव्यताद्वयम् उत्पत्तिवाक्यगतम् । यदेकस्य कर्मणो भेदमाक्षिपति न वे-

ति चिन्त्यम् ।

तत्र पूर्वपक्षः ।

यद्यप्यत्र " मासमग्निहोत्रं जुहोति " इत्यत्रेवाभ्यासोपादानं नास्ति तथापि विध्यन्ताधिकरणे इति कर्तव्यतात्रयसमुच्चयनिरासाधयो सौर्ये प्राकृताग्नेयकर्मभेदे ऽपि तदीयपौर्णमास्यमावास्यादिविरुद्धेतिकर्तव्यतयोर्विकल्पेनातिदेश एवमिहापि विनिगमकाभावाद्दर्शशब्देन पूर्णमासशब्देन च विकल्पितः इति कर्तव्यता आग्नेयादित्रयसम्बन्धिन्यो ऽतिदिष्टा विकल्पेनैकस्मिन्कर्मणि निविशन्त इति न कर्मभेदः षोढा किं तु द्वेधैवेति ।

अत्र ह्येमः ।

इतिकर्तव्यताविकल्पो ऽप्यप्रमाणे निरस्त एव तथापि मासं दर्शपूर्णमासाभ्यामित्यत्र दर्शशब्देन पूर्णमासशब्देन चैकैकेन लक्षणेत्यकशब्दोपादानात्समुच्चयं स्तयाग्नेयवाक्यमुद्रामुद्रितत्वात्पृथक्कर्मापि सौर्ये तु प्राकृताग्नेयेतिकर्तव्यतयोर्न प्रत्येकशब्दोपादानमस्ति येन समुच्चयस्तद्बलाच्च कर्मभेदः स्यात् किं तु तत्रैकेतिकर्तव्यताकाङ्क्षावशाच्छब्दकल्पना एकेतिकर्तव्यतयैव चाकाङ्क्षोपशाम्यतीतीदमेवातिदेशकः शब्दः कल्प्यते पौर्णमास्याग्नेयवद्दर्शाग्नेयवद्वेति ।

एवं चाशब्दयुक्तातिदेशकशब्दकल्पनात्र प्राकृताग्नेयेतिकर्तव्यतयोः समुच्चयो न वा तद्बलात्कर्मभेदापत्तिरिति वैषम्यम् ।

नन्विह यथा पूर्णमासशब्देन दर्शशब्देन वा कर्मत्रयकर्मत्रयसम्बन्धीतिकर्तव्यतात्रयं लक्षयातिदिश्यते ।

इतिकर्तव्यताश्च त्रयस्त्रयस्त्यैकैकशब्दोपादानात्समुच्चयागतेः षट्कर्माणि ।

एवंसान्नाय्ययागद्वयेन सह प्राक्सोमाद्दैकल्पिकस्यैन्द्राग्नस्यापि द्रव्यदेवतरूपेतिकर्तव्यतापि प्रकृतिस्था दर्शशब्देन लक्षणैकशब्दोपात्तैवेति सप्तममपि कर्म दर्शपूर्णमासवाक्ये विधीयत इति षट्कर्मानुष्ठानं याज्ञिकानां चिन्त्यमेव । प्रकृतावैन्द्राग्नविकल्पे ऽपीह , तदितिकर्तव्यताया अप्येकशब्दोपादानेन समुच्चित्य विधानात् ।

तत्र त्वियान्विशेषः ।

प्रकृतावैन्द्राग्न प्राक्सोमात् इह तु तद्विकृतावपि सप्तमस्य सोमेज्यास्वादस्य स्वप्रकृतत्वे ऽङ्गगुणविरोधन्यायेन ममप्राधान्ये न भूयसां स्यात्स्वधर्मत्वमिति न्यायेन सोमप्राकृतबाध इति ।

सत्यं सप्तमं कर्मैन्द्राग्नविकृतिभूतं सिध्यति तस्य तु नित्यवद्-

ष्ठाने दर्शशब्दनाम्नातिदिष्टस्य प्रकृतिवद्भावस्य बाधः स्यात् ।

तथा चैकादशे ( पा० २ अ० १५ ) "वारुण्या निष्कासेन तुषैश्चावभृथं यन्ती "त्यत्र प्रकरणान्तरात्कर्मान्तरत्वेन तत्प्रतिपत्तिरूपकर्मभूतसौमिकावभृथवद्भावबाधकापत्तेरित्युक्तम् । अतः षट्कर्मानुष्ठानं याज्ञिकानां युक्तमेवेति । ननु समुच्चयावगमकोपदेशेन प्रकृतिवद्भावातिदेशबाधोऽस्तु । नैवम् । प्रकृतिवद्भावेन हि प्रधानाङ्गं विकल्पोऽतिदिष्टः समुच्चयस्तु विकृतौ प्रधाने कल्प्यः श्रुतस्विवतिकर्तव्यतायामङ्गे । तत्र चाङ्गगुणविरोधन्यायादौपदेशिको ऽपि समुच्चय आतिदेशिकेनापि विकल्पेन बाध्यतइति प्रकृतिवदनुष्ठानं सिद्धम् । इतिमासाग्निहोत्रमासदर्शपूर्णमासयागयोः कर्मभेदाभेदविचारः ।

शाखान्तराधिकरणवार्तिके उदितानुदितहोमयोस्तथैन्द्राग्नैकादशकपालद्वादशकपालयोः शाखान्तरीययोः समविकल्पः सर्वत्रेतीत्युक्तम् । तत्परमतं न स्वमतं श्रुतिलिङ्गाधिकरणे ऽनेकविधबाधनिरूपणे स्वयमेव वार्तिककृता परशाखाविहितं स्वशाखाविहितेन बाध्यतइत्युक्तम् ।

युक्तं चैतत् ।

स्वशाखाविहितज्ञानस्य स्वाध्यायाध्ययनजनितस्य कर्माङ्गत्वासम्भवे इतरस्यानाक्षेपात् । स्वशाखाविहितविरुद्धवैकल्पिकानुष्ठानेनापि च साद्गुण्यसम्भवात् । स्वशाखाविहिताविहितविरुद्धवैकल्पिकस्य तु ज्ञानं शाखान्तराध्ययनजनितमपि कर्मणा साद्गुण्यायाक्षिप्यतएव । एतन्न्यायमूलकमेवेदं भविष्यत्पुराणवचनम् ।

यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकं यथेति ।
इति शाखान्तराधिकरणनिष्कर्षनिरूपणम् ।

शेषः परार्थत्वात् ।

ननु परोद्देशप्रवृत्तिधर्मत्वं पारार्थ्यं ततो नासौ कर्तृव्यतिरिक्तेषु शेषेष्वस्ति ।

अथ परोद्देश्यकप्रवृत्तिविषयत्वं तत् । ततो द्रव्यादौ यागादौ फले च क्रमेण यागफलपुरुषोद्देश्यकप्रवृत्तिविषयत्वस्य सत्त्वे ऽपि न पुरुषे यागोद्देश्यकप्रवृत्तिविषयत्वमस्ति किं तु तादृशप्रवृत्त्यधिकरणत्वमेव । उभयमपि चार्थभावनाख्यप्रवृत्तौ नास्ति ।

यत्तु न्यायरत्नमालायामुक्तं कर्तुः समीहितं येन सिध्यत्य-

ष्टं तदुच्यतइत्यनेन वैधेष्टसाधनत्वमेव शेषलक्षणमुक्तं तदपि फले अव्याप्तं न हि तस्येष्टसाधनता विधिना बोध्यत इति । उच्यते ।

*प्रवृत्तिः प्रवर्तना । परं चेष्टम् । तदुद्देश्येनैव या प्रवर्तना वैधी*-या प्रवर्तना लौकिक्या दृष्टोद्देश्यकत्वनियमाभावात् सा प्रयोजिका सती पारार्थ्यम् ।

प्रयोजकत्वं च कारणतत्कारणाद्यनुगतम् । वैधप्रवर्तनैव च साक्षात्प्रवृत्तेः कारणं तद्द्वारा फलस्य । पुरुषस्यापि कर्तृत्वं प्रवृत्तिद्वारा प्रवर्तनयैव जन्यते ।

एवं करणत्वेन व्रीह्यादिकारकान्तरं चेति ।

यद्वा परोद्देश्यकप्रवृत्तिमत्त्वैवात्र विवक्षिता ।

तद्वत्तानियामकश्च सम्बन्धः पुरुषे ऽधिकरणताख्यः द्रव्ययागफलेषु तु विषयताख्यो नान्यो द्वयोरेव लोके तद्वत्तानियामकत्वात् । न चैव फलोद्देश्यकयागविषयकृत्यधिकरणत्वात्पुरुषस्य फलप्रत्यङ्गत्वापत्तिः । इष्टापत्तेः ।

सप्तमनवमाध्याययोर्हि ( पा० १ अ० १ ) सर्वस्यापूर्वंप्रत्यर्थ्ये न यागस्वरूपमात्रे ऽङ्गत्वमित्युक्तम् ।

तेन यथावघातप्रोक्षणादेर्व्रीहिलक्षिते ऽपूर्वसाधनरूपे विशिष्टे विनियोगाद्विशेषणे ऽपूर्वे ऽप्यङ्गत्वमेवमिहापीति ।

एतत्सर्वमभिप्रेत्य परोद्देश्यप्रवृत्तीत्येवोक्तं न तद्विषयता तदधिकरणता चेति ।

तदिदमपि प्रवृत्तावेवाव्याप्तमित्युपेक्ष्यम् । तस्मादाद्यैव विवक्षा युक्तेति । यदि तु न्यायरत्नमालागतमेव लक्षणं समर्थनीयं तदैव वाच्यम् ।

यदुक्तं वैधेष्टसाधनत्वं फले ऽव्याप्तं न हि तस्येष्टसाधनता विधिना बोध्यतइति ।

तन्न । तस्यापि कर्तृगतभोगरूपेष्टसाधनत्वस्य वैधत्वात् । स्वर्गादिभोगो ऽपि हि पुंसां स्वर्गादिवदिष्ट एव ।

नन्वेवमपि पुत्रेष्ट्यादिफले पुत्रादावव्याप्तिरेव न हि तस्येष्टसाधनत्वं वैधमिति चेत् । न ।

इष्टसाधनत्वसामान्यस्यावैधत्वे ऽपि पुत्रेष्टेः कर्त्रिष्टसाधनता विधिगम्येति स्वर्गकामाधिकरणउक्तम् । एवं च सति पुत्रेष्टेः कर्त्रिष्टसाधनतां बोधयता विधिना तस्याः पुत्ररूपस्येष्टस्य कर्त्रर्थतां विनानुपपत्तेः पुत्ररूपस्यापीष्टस्य कर्त्रिष्टतद्भोगसाधनतारूपा कर्त्रर्थता बो-

ध्यतइति पुरुषस्य फलस्य विशेषत इष्टसाधनताविधिगम्यैवेति नाव्याप्तिरिति।

इति शेषलक्षणम्। अरुणाधिकरणे ( अ० ३ पा० १ अ० ६ ) बहुव्रीहेरन्यपदार्थशक्तिरित्युक्तम्।

अतश्च द्रव्यिडशब्देन सम्बन्ध्येवोच्यते यथा।
तथैव यौगिकैः शब्दैः पिङ्गाक्ष्यादिपदैरपि॥

इत्युपक्रमात्। तस्मादुपपन्नं पिङ्गाक्ष्यादीनां द्रव्यवचनत्वमिति चोपसंहारात्। इन्द्रपीतनिषादस्थपत्यधिकरणद्वयपर्यालोचनात्तु लाक्षणिको ऽन्यपदार्थ इति भाति।

तथा हि। आद्ये इन्द्रपीतशब्दः सोमविशेषणत्वात्पुरुषस्तत्र पूर्वपदार्थमात्रलक्षणापत्तेर्न बहुव्रीहिः सञ्जनविशेषण तत्र पदद्वये ऽप्यन्यपदार्थलक्षणापत्तेरिति पूर्वपक्षिते बहुव्रीहावन्यपदार्थः शाक्य इत्यवोचत्तर्हि वाच्यम् तत्सनुक्त्या हुताहुतसमुदायवाचिन इन्द्रपीतशब्दस्य तदवयवे लक्षणापत्तिः तत्पुरुषे यदतः सिद्धान्तिनः पूर्वपक्ष्युक्ता बहुव्रीहावन्यपदार्थलक्षणाऽनुमतेति गम्यते।

निषादस्थपत्यधिकरणे ( अ० ६ पा० १ अ० १३ ) च तत्पुरुषात्कर्मधारयबलीयस्त्वेन सिद्धान्तितं तत्र बहुव्रीहावन्यपदार्थस्य वाक्यत्वे विद्याप्रयुक्तिलाघवात्कर्मधारयं हित्वा निषादः स्थपतिर्यस्येत्येवं बहुव्रीह्यापत्त्या पूर्वपक्षः पराहतेतिवि। तत्र लक्षणापक्षे बहुव्रीह्योरेरुणशब्दस्य च द्रव्यलक्षकत्वाविशेषे किं विनिगमकं यद्बहुव्रीहेरेव द्रव्याभिधायिता नारुणपदस्येति।

प्रत्युत बहुव्रीहौ लक्षणायाः समस्यमानानेकपदालोचनापेक्षत्वेन विलम्बितत्वात्र तेन द्रव्यविधिः स्यात्। किं [illegible] गुणशब्देनेति क्रयसाधनद्रव्यनिवेशस्य पूर्वोत्तरपक्षयोः साम्यात्तदाक्षेपपूर्वपक्षस्य चाप्यीयतरित्वसिद्धान्तस्य चायोगादरुणाधिकरणमनुपपन्नं स्यादिति वाच्यत्वपक्ष एव सम्मतः।

न च लक्षणा न्याय्या। तत्र हि क्रियाकृतिन्यायो नागृहीतविशेषणेत्ययं बीजम्। अनन्यलभ्यः शब्दार्थ इति कर्त्रधिकरणन्यायो वा। नाद्यः। आकृत्यधिकरणन्यायो हि तत्र प्रवर्तते यः शब्दः क्वचिदपि विशेषणमात्रे इष्टप्रयोगः। तेन पाचकलम्बुसुपाकुलालादिपदा न तत्रोदाहरणमित्युक्तम्। अतो बहुव्रीहेरपि विशेषणमात्रे क्वचिदप्यप्रयोगादाकृतिन्याय इति विशिष्टवाचितैव। न द्वितीयः। तत्रापि ह्याक्षेपतो ऽन्यलभ्यत्वं वा स्याल्लक्षणया वा। नाद्यः। पिङ्गाक्ष्यादौ क चिदव्यभिचारेणाक्षेपसम्भवे ऽपि चित्रग्वादौ व्य-

भिचारेणाक्षेपायोगात् ।

न द्वितीयः । नियमतः शक्तिग्रहापेक्षे शब्दे ऽनन्यलभ्यो हि शब्दार्थ इति न्यायस्याप्रवृत्तेः । अन्यथा पङ्कजादिपदे पद्मस्य लक्षणया प्रतीतिसम्भवादनन्यलभ्यन्यायादवाच्यता स्यात् । अस्ति च चित्रग्वादिबहुव्रीहेरन्यपदार्थबोधे शक्तिग्रहापेक्षेति । तत्पुरुषे तु न राजसम्बन्धिनि राजशब्दस्य शक्तिग्रहापेक्षा । यत्त्विन्द्रपीतनिषादस्थपत्यधिकरणालोचनाद् बहुव्रीहेः षष्ठीतत्पुरुषात्कर्मधारयाच्चेदं दौर्बल्यं न सिध्येदित्युक्तम् ।

तत्र । कर्मधारये तावद्यावन्तः श्रुतपदार्थास्तावतां वाक्यार्थे ऽन्वयः । बहुव्रीहौ त्वेकस्यैवेति दौर्बल्यम् । षष्ठीतत्पुरुषादौ त्वेकस्यैवोत्तरपदार्थस्य वाक्यार्थे ऽन्वयः बहुव्रीहावप्येकस्यैवेति साम्यम् ।

यद्यपि तथापि तत्पुरुषे एकस्यैव त्यागः बहुव्रीहौ त्वनेकस्याग इति दौर्बल्यम् अतः "सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते" इतिवार्त्तिकं बहुव्रीहिविषयमपि न क्वचित्कमात्रविषयमिति सर्वमनवद्यम् ।

गौतमीयैर्निरस्तान्यपदार्थस्येह वाच्यता ।
बहुव्रीहौ जैमिनीये मते त्विष्टोपपादिता ॥
इति बहुव्रीहावन्यपदार्थवाच्यतानिरूपणम् ।

"यदाग्नेयो ऽष्टाकपालः" "सोमेन यजेत" "अरुणयैकहायन्या" इत्यादौ विशिष्टविधिरभिमतः । तत्र वार्त्तिककृता ऽग्निहोत्राधिकरणे ( अ० २ पा० २ अ० ६ ) ऽष्टौ श्रुतिप्रकारान्परदौर्बल्यवतो ऽनिरस्यता दूषणमुक्तं दध्ना जुहोतीत्यादिगुणमात्रविधौ समानपदोपात्तसन्निकृष्टधात्वर्थग्रहणासम्भवात् विप्रकृष्टग्रहणम् अतो विशिष्टविधौ उभयोर्विशेषणविशेष्ययोर्विधानाश्रयणात्सन्निकृष्टविध्यर्थं तत्सम्भवो विप्रकृष्टविध्यर्थं च तदसम्भवो ऽभ्युपगन्तव्य इति युगपद्विरुद्धसम्भवासम्भवापत्तिरिति । अतः श्रुतेन प्रत्ययेन शुद्धयागं विधायोपपदार्थविधानायाश्रुतं प्रत्ययान्तरं कल्प्यं तेनोत्पत्तिशिष्टबलीयस्त्वं विशिष्टविध्यङ्गीकारप्रयोजनं न सिध्यति उत्पत्तिशिष्टाया अप्यामिक्षाया वाजिनवदुत्पन्नशिष्टयाऽविकल्पोपपत्तेः । कर्मान्तरविधिर्वाजिनवाक्ये न स्यात् ।

यद्यप्यत्र तद्धितचतुर्थीकृतबलाबलादपि भेदः सिध्येत्तथाप्यैन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णातीत्यादावुभयत्र तद्धिताविशेषे नोत्पत्तिबलीयस्त्वेन विना भेदः सिध्येदिति ।

अत्रोच्यते शुद्धस्य कर्मणो ऽनुष्ठानाशक्तेर्विधानासम्भवात्सम्भवति विशिष्टविधिः । न चैव "अग्निहोत्रं जुहोति" इत्यादौ शुद्धकर्मविध्यसम्भवः विध्यनुपपत्त्या तत्रापि उत्पत्तिविधौ सामान्यत इष्टभाव्यवत् द्रव्यसामान्ये कल्पितेऽपि तद्विशेषाकाङ्क्षायां वाक्यान्तरविहितविशेषलाभेनोपपन्नस्य प्रधानविधेस्तद्विधानक्लेशाङ्गीकरणायोगात् । स्ववाक्योपात्ते तु विशेषे तद्विधानमात्रपर्यवसानोपपत्तेः ।

यत्तूक्तम् । सन्निकृष्टविध्यसम्भवनिमित्तो विप्रकृष्टार्थविधिरिति । तत्र ।

तस्योपपदानर्थक्यप्रसक्तिहेतुकत्वात् । तदुक्तम् ।
प्रसिद्धंर्थलक्षत्वेन प्रयोजनवशेन च ।
अधिकत्वात्प्रवृत्तेश्च गुणरूपं विधीयते ॥

इति । अत्र व्रीह्यादियदुद्दिश्यादौ गुणविधित्वं प्रयोजनवत्त्वे हेतुं यदग्निपर्यवसानेन दृष्टान्ते ऽपि व्रीहिविधावन्यथा तदुपादानानर्थक्यमेव हेतुं यूते । किं च । आघाराग्निहोत्राधिकरणे गुणस्य क्रियाद्वारैव विधेयतोक्तेर्विप्रकृष्टविध्यर्थमपि सन्निकृष्टविधिसम्भव एव वाच्यः । स तु तत्प्राप्तौ विशिष्टरूपेण वाच्यः अप्राप्तौ तु स्वरूपत एवेति न युगपद्विरुद्धसन्निकृष्टविधिसम्भवासम्भवदोषः । न चानेकविशेष्यविशेषणविधानार्थं विध्यावृत्त्यापत्तिः । विशेषणमनुतिष्ठन्नेव हि विशिष्टमनुतिष्ठति नान्यथेति विशिष्टविध्यन्यथानुपपत्त्या विशेषणविधिकल्पनात् । तदुक्तम् ।

पूर्णमासाद्यधिकरणे । विशिष्टायां भावनायामाश्रित्य श्रौतं विधित्वं यद्यन्यत्रापि श्रुत्यैव पुनर्व्याप्रियेत ततः पुनरुच्चारणादोषमवैदिकत्वापत्त्या लभते । अयं पुनः सकृद्विधाय निवृत्तव्यापार. स्वार्थान्यथानुपपत्त्या सर्वविशेषणेषु प्रत्येकनिष्ठानि विध्यन्तराण्याविर्भावयन्समाम्नायागतरूपापरित्यागेनैवासकृदुच्चारणफले वर्तत इति । विशेषणान्यनुपादाय विशिष्टे व्यापारासम्भवादिति च । (अहेकत्वाधिकरणे ( अ० ३ पा० १ अ० ७ ) ऽपि पक्षी पुनर्द्रव्यसंख्यालिङ्गानां भावनां यागं च प्रत्युपादेयत्वाद्वैरूप्येण विशिष्टैकभावनाविधानादर्थापत्तिलभ्यविशेषणविध्यन्तराविर्भावाधिकवाक्यत्वसिद्धिरिति १) । एवं विशिष्टविध्यन्यथानुपपत्त्या विशेषणविधिषु कल्प्यमानेष्वपि यागादेर्धात्वर्थस्य विशेषणत्वे ऽपि न तद्विषयो विशेषणविधिः श्रुतेनैव तु प्रत्ययेन धात्वर्थानुरक्तैव भावना विधीयते न

( १ ) अत्रे पा० २ पु० ५० ।

शुद्धा शब्दान्तरन्यायात् तत्र ह्युक्तं सम्बन्धिनिरूपणाधीननिरूपणः सम्बन्धीव ज्ञेयनिरूपणाधीननिरूपणं च ज्ञानमिवावच्छेदकधात्वर्थनिरूपणाधीननिरूपणा भावनेति अतो या धात्वर्थं विना निरूपयितुमेवाशक्या सा सुतरां तद्विधिं विना शुद्धा प्रत्ययेनोक्तापि विधातुमशक्येति श्रुतेनैव विधिना धात्वर्थानुरक्ताया एव विधानात् धात्वर्थरूपविशेषणविषयं विध्यन्तरं कल्प्यते इति ।

ग्रहैकत्वाधिकरणन्यायसुधायामपि धात्वर्थावच्छिन्नैव भावना श्रुतविधिविषय इत्युक्तम् ।

इति विशिष्टविधिनिरूपणम् ।

विशिष्टविधिष्वपि यत्र "सोमेन यजेत" इत्यादौ तृतीयान्तेन द्रव्यादिविधिस्तत्र सोमादिप्रातिपदिके सोमादिमान्यागो मत्वर्थलक्षणास्ति ।

तथा हि । सोमादि हि करणत्वेन श्रूयते करणं च कारकतया क्रिययैव सम्बध्यते नान्येन क्रिया चात्र फलभावनैव प्रत्ययवाच्या न च तस्यां सोमादेः करणत्वं सम्भवति समानपदोपात्तधात्वर्थावरोधादिति भावार्थाधिकरणे स्थितम् ।

न च धात्वर्थेनैव सोमादेः सम्बन्धः सम्भवति तस्य धातुना प्रत्ययार्थं प्रति करणत्वेनोपादानात् क्रियारूपतयावगमादक्रियारूपत्वे वा धात्वर्थस्य प्रत्ययार्थं प्रति करणत्वानुपपत्तेः । न च सत्यपि प्रत्ययवाच्याया फलभावनाया धात्वर्थावरोधे ऽर्थाक्षिप्तधात्वर्थभावनया सोमादेः सम्बन्ध इति वाच्यम् । तस्या इहाश्रुतत्वात् अश्रुतया च तया शब्दान्तरस्यान्वयायोगात् । फलभावना ह्यत्र श्रुता न धात्वर्थभावना न चाध्याहृत्य धात्वर्थभावनां तया सोमादेरन्वयः सोमेन भाव्यमानेन यागेनेष्टं भावयेदिति विनाप्यध्याहारेण वाक्यसमन्वयोपपत्तेः । तदवश्यं यत्र प्रत्ययार्थे करणं यागस्तत्रैव तृतीयान्तेन सोमादिपदेन वर्तितव्यं नान्या गतिरस्ति तत्रात्यन्तं निरूढत्वेन सोमादिपदस्य सामानाधिकरण्यमात्रेण नामत्वासम्भवादर्थान्तरवाचिनः सोमादिपदस्यार्थान्तरे यागे वृत्तिर्मत्वर्थलक्षणया ऽङ्गीक्रियते इति । सेयं मत्वर्थलक्षणा विशिष्टविधावेवेति स्पष्टतः प्रतिभाति । उद्भिदाधिकरणवार्तिके ( अ० १ पा० ४ अ० १ ) हि कर्मणि गुणविधिः फले गुणविधिर्विशिष्टविधिरूपेण वेति विकल्प्य त्रिष्वपि पक्षेषु पञ्च पञ्च दोषा उक्ताः । तत्र तृतीयपक्ष एव मत्वर्थलक्षणादोषउक्तो नेतरयोः । शास्त्रदीपिकायामपि विशिष्टविधिपक्षे च भवेन्मत्वर्थलक्षणेति ।

तेन "दध्नेन्द्रियकामस्य जुहुयात्" इत्यादिगुणफलसम्बन्धेषु यथा धात्वर्थाविधानान्न मत्वर्थलक्षणाभिमता एवं "व्रीहिभिर्यजेत" इति कर्मणि गुणविधावपीति । के चिदेवमेव सिद्धान्तं वर्णयन्ति ।

नन्वु धात्वर्थस्य करणत्वावगतिर्मत्वर्थलक्षणायां बीजं तत्करणत्वं च न शब्दाभिहितमस्ति किं तु साक्षाद्यार्थं भावनायाश्च करणाकाङ्क्षया तल्लक्षणा यजौ स्यात् करणाकाङ्क्षा च विधेयाया भावनायाः दयाद्यानूद्यमानायाः सा ऽयं भावार्थाधिकरणन्यायः तेन "व्रीहिभिर्यजेत"इत्यादौ भावनानुवादाच्च करणाकाङ्क्षास्तीति न धातुना धात्वर्थः करणत्वेनोच्यते किं तु कर्मत्वेनैव भावार्थाधिकरणन्यायाप्रवृत्तेः । धात्वर्थकर्मिकायां च भावनायां व्रीह्यादेः करणत्वेनैवान्वयो घटत इति न मत्वर्थलक्षणेति ।

तदयुक्तम् । धात्वर्थस्य हि करणत्वं सिध्यति तथापि नवमाद्यन्यायेन (अ० ९ पा० १ अ० १) यागस्वरूपे व्रीहिविधिरनर्थक इति साधनांशे गुणं विधातुमवश्यं धात्वर्थः करणत्वेनानुवदितव्यो लक्षणयेति गुणविधावपि सिद्धा मत्वर्थलक्षणा । तदुक्तम् ।

विधाने वानुवादे वा यागः करणमिष्यत इति ।

विशिष्टविधानेन तु मत्वर्थलक्षणोक्तिर्भावार्थाधिकरणन्यायेनातिसुलभत्वात्कृतेति ज्ञेयम् । इति मत्वर्थलक्षणा ।

अनुपादेयानि पञ्चैवेति प्रकरणान्तराधिकरणपर्यालोचनया प्रतिभाति द्वित्वबहुत्वयुक्तं वा ऽचोदनात्तस्येत्यधिकरणे (अ० ३ पा० ३ अ० ९) तु यजमानस्यात्मीयमेकत्वमप्यनुपादेयमित्युक्तं तत्राशक्तिकृताङ्गत्यागन्यायाप्रवृत्त्यै । तदुक्तं पार्थसारथिमिश्रैः ।

अनुपादेयमेकत्वं यजमानस्य कालवदिति ।

अत्र यजमानस्येति यागाद्येकत्वव्यावृत्त्यै । एकत्वमिति यजमानद्वित्वबहुत्वव्यावृत्त्यै । उभयस्थाने संख्येत्यनुक्तिरुपसद्द्वादशत्वव्यावृत्त्यै । एवं ब्राह्मणत्वादिजातिरप्यनुपादेयैव ।

तदुक्तं द्वितीये (अ० २ पा० ३ अ० ३) आधानाधिकरणे सोमेश्वरेण स्वविधिप्रयुक्ते तु ब्राह्मणत्वादेः कर्तृविशेषणत्वे ऽपि जातेरनुपादेयत्वादिति जातेरर्थादधिकारिविशेषणत्वावगतेः सिद्धत्वेन च काम्यतयाधिकारिविशेषणत्वाभावादाधानस्य च फलाभावप्रसङ्गान्न राजसूयवन्निमित्तान्वयाविरोधाभिमतत्वप्रतीतेरिति च ।

नन्वु किमिदमनुपादेयत्वम् । उच्यते ।

कृतिव्याप्यत्वमुपादेयत्वं तदव्याप्यत्वं चानुपादेयत्वम् ।

यथा च देशादिपञ्चकं कृत्यव्याप्यं भवत्येवं यजमानस्यात्मीयमेकत्वं ब्राह्मण्यादिजातिश्चास्वभावसिद्धत्वान्नैवेव कृत्यव्याप्यम्। न चैवं पशुत्वादिजातिः पश्वेकत्वादपि चानुपादेयं स्यात्। न। तयोः पशुव्यक्तिद्वारा कृतिव्याप्यत्वेनोपादेयत्वात् । यजमानव्यक्तेस्तु स्वकृत्यव्याप्यत्वात्तद्द्वारापि न तदीयैकत्वजात्यादितरकृतिव्याप्यमित्यनुपादेयमेव(१)।आहवनीयविधयोस्तु कृतिव्याप्यत्वेनोपादेययोरपि सर्वोर्विध्यन्तरसिद्धयोरेवोपादानात्प्रयोगविध्यननुष्ठाप्यत्वमात्रेण यथाशक्तिन्यायाविषयत्वम् । अत एव "यदाहवनीये जुहोती" त्यस्यानुपादेयसम्बन्धसाधिवो ऽसन्निधिः प्रकरणान्तरमित्येतन्न्यायविषयत्वेऽपत्ने। नतु यजमानस्यात्मीयमेकत्वं ब्राह्मण्यादिजातिश्चानुपादेया चेत्तत्सम्बन्धसचिवेनाप्यसन्निधिना प्रकरणान्तरत्वान्नेवः स्यात् ।तत्रायोदाहरणं "यदाहवनीये जुहोती" त्येव । अत्युदाहरणमपि भूयर्थमिति,चेत्। न। रूपालाभात् । जुहोतीर्हि साधारणो न किंचिद्धोमविशेषं नियमेनोपस्थापयति यदीयेतिकर्तव्यतातिदेशेन । अत एव दर्विहोमा अपूर्वा इत्युक्तमष्टमे ( पा० ४ अ० १ ) उपदेशस्तु नास्त्येव । अनारभ्याधीते तु "ब्राह्मणो यजेते"त्यादिश्रवणं"विश्वजिता यजेते"त्यादिवद्व्यक्तचोदितत्वेनातिदेशतो रूपलाभसम्भवात्प्रकरणान्तरतः कर्मभेद इव एव । अतो न पश्वेयानुपादेयानीति नियम इति सिद्धम्‌ ।

इत्यनुपादेयनिरूपणम् ।

प्रयर्योधिकरणे ( अ० ३ पा० ३ अ० १२ ) वार्तिककृता मिश्रैश्च सिद्धान्त उक्तः "न प्रथमयज्ञे प्रवृञ्ज्यादिति" प्रथमप्रयोगाङ्गभूतो ऽयं निषेधः । तस्य च प्रतिप्रसवो ऽयम "अग्निष्टोमे प्रवृणक्ती" ति । तच्चैतत्र द्वितीयादिप्रयोगविषयम् । तत्र यत्प्रवर्ग्यं प्रवृञ्जन्तीति प्रवर्ग्योत्पत्तिविधिनैवानुष्ठानसिद्धे । अतः प्रथमप्रयोगे निषिद्धस्य प्रतिप्रसवार्थमिदम् । अतस्तत्र विहितप्रतिषिद्धत्वाद्विकल्पः। अतिरात्रप्रथमाहारे तु नित्यमकरणमेव वैकल्पिकातिरात्रप्रथमाहारविधानेन तत्र निषेधातिदेशादग्निष्टोमसत्त्वाभावेन च प्रतिप्रसवानतिदेशादिति ।

तत्र न्यायसुधाकृता दूषणद्वयमुक्तं दशमे प्रतिषेध प्रदेशेनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यादित्यत्रोक्तेन दुर्बलो ऽपि विधिस्तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवतीति न्यायेन न प्रथमयज्ञे प्रवृञ्ज्यादित्यस्य प्रतिषेधत्वे वैधप्रवर्ग्ये प्रतिषेधय-

( १ ) यमेति र पु० मा० तत्र त्यादिति पा० ।

लादेव विकल्पसिद्धेरग्निष्टोमवाक्यानर्थक्यमित्येको दोषः ।

न प्रथमयज्ञ इत्यस्य प्रतिषेधत्वे त्वतिदिष्टतद्बलादेवाग्निष्टोमप्रथमप्रयोग इवातिरात्रप्रथमाहारे ऽपि विकल्प एवापद्येत न नित्यमकरणं सिद्ध्येदिति द्वितीयो दोषः ।

स्वयं तु समाहितम् । न प्रथमयज्ञ इति न प्रतिषेधः किं पर्युदासो यत्प्रवर्ग्यं प्रवृञ्जन्तीति प्रवर्ग्योत्पत्तिवाक्यशेषः । पर्युदस्तप्रतिप्रसवश्चाग्निष्टोमवाक्यम् । नन्वकर्तव्यत्वेनोक्तस्य कर्तव्यत्वेनोक्तेः प्रतिप्रसवत्वात्पर्युदासस्य चाकर्तव्यत्वोक्त्यर्थत्वाभावस्य विधीनामेकदेशः स्यादिति सूत्रेणापि विकल्पाय दशमे सिद्धान्तयिष्यमाणत्वात्पर्युदस्तप्रतिप्रसवो न युक्तः । अत एवाग्निष्टोमप्रथमप्रयोगे विकल्पो ऽप्ययुक्तः । कर्तव्यत्वाकर्तव्यत्वयोरुदासीनेन पर्युदासेन सामान्यविधेर्द्वितीयादिप्रयोगमात्रविषयत्वेनोपसंहारात्प्रथमप्रयोगे तु विध्यभावादेवाननुष्ठाने प्राप्ते ऽग्निष्टोमविधिना तत्राप्यनुष्ठानमात्रं सिध्येदिति चेत् सत्यमन्यत्र पर्युदासो नैवाकर्तव्यत्वोक्त्यर्थः । तथापीहावश्यं तदर्थताभ्युपेया । अन्यथा प्रथमप्रयोगे नित्यानुष्ठानमात्रस्य पर्युदासाग्निष्टोमवाक्यद्वयसाध्यस्यानारभ्यवादेनैव सिद्धेस्तदुभयानर्थक्यं स्यात् । नानूयाजेष्विति वन्नित्यानुष्ठानेन पर्युदाससार्थक्ये तु पुनर्विधिर्व्यर्थः स्यात् । अतो ऽत्र पर्युदासस्याकर्तव्यत्वोक्त्यर्थत्वात्पुनर्विधिना विकल्पस्तस्य च प्रतिप्रसवत्वं युक्तमिति । यापि निषेधत्वे ऽतिरात्रे विकल्पापत्तिरुक्ता सापि न । प्रकृतौ सामान्यवाक्यशेषभूतस्य पर्युदासस्यातिरात्रे ऽतिदेशात्प्राप्तेर्नित्यमकरणाद्विकल्पार्थस्यैव प्रतिप्रसवस्यानतिदेशादिति । तदेतदपि सोमेश्वरमतमयुक्तम् । यत्तावदिह पर्युदासो ऽप्यकर्तव्यत्वोक्त्यर्थ इति क्वाप्यन्यत्रादृष्टमश्रुतं च कल्पितम् । तन्न ।

एवं हि तथाप्यतिरात्रप्रथमाहारे ऽपि विकल्पो ऽपरिहार्यः ।

यत्तूक्तं विकल्पार्थस्य प्रतिप्रसवस्यानतिदेशान्नित्याकरणमिति । तदपि न । न हि विकल्पः प्रतिप्रसवस्य वाक्यार्थ एव किं तु पर्युदासस्याकर्तव्यत्वतात्पर्यनिर्णयद्वारा प्रयोजनं ततश्च तात्पर्यग्राहकस्यानतिदेशे ऽपि तेनाकर्तव्यत्वे गृहीततात्पर्यकतया निर्णीतार्थस्यैव पर्युदासस्यातिदेशादेकस्य च तस्य प्रकृतावकर्तव्यत्वे तात्पर्यं विकृतौ तु नेति परस्परविरुद्धानेकार्थत्वायोगाद्विकृतावप्यकर्तव्यत्वोक्त्यर्थत्वादतिरात्रे ऽपि विकल्पप्रसङ्गस्तथापि दुष्परिहरः । निर्णीतं चैतन्नवमे

पक्षाधिकरणे ।

यदुत प्रकृतावन्यार्थत्वेन निर्णीतस्य शास्त्रस्य विकृतावतिदेशेऽन्यार्थपरता न न्याय्येति । तेन पर्युदासस्याकर्त्तव्यत्वोक्त्यर्थत्वे ऽतिरात्रप्रथमाहारे ऽपि विकल्पापत्तिरपरिहार्या । इतरपर्युदासवदकर्त्तव्यत्वोक्त्यर्थत्वाभावे त्वग्निष्टोमप्रथमप्रयोगे नित्यानुष्ठानापत्तेर्विकल्पासिद्धिरित्युभयतःपाशा रज्जुः । अग्निष्टोमवाक्यानर्थक्यापत्तिश्च स्यादिति ।

नन्वेवं भट्टसोमेश्वरमतदूषणे ऽपि वार्त्तिककृन्मते तदुक्तं दूषणद्वयं कथमुद्धर्त्तव्यमिति चेत् । अत्र ब्रूमः । न प्रथमयज्ञइति निषेध एव तस्य च वैधक्रियाविषयत्वाद्विकल्पः सिद्ध एव न त्वसावग्निष्टोमवाक्यलभ्यः । एवमपि त्वग्निष्टोमवाक्यानर्थक्यं तादृशश्च विकल्पो ऽतिरात्रे प्रसज्येतेति भट्टसोमेश्वरोक्तं दूषणद्वयमेवं परिहर्त्तव्यम् । अग्निष्टोमवाक्यार्थे परिसंख्यार्थम् अग्निष्टोमातिरात्रप्रथमाहारयोः प्रसक्तो विकल्पो ऽग्निष्टोमएव नातिरात्रप्रथमाहार इति । प्रतिप्रसवो ऽपि च तदा ऽग्निष्टोमवाक्यं भवत्येव अकर्त्तव्यत्वेन बुद्धस्य कर्त्तव्यत्वबोधात् । न च प्रतिप्रसवत्वं परिसंख्यात्वं च विरुद्धम् ।

यद्वा परिसंख्यैव प्रतिप्रसवशब्देन पूर्वोक्तसारस्वताद्गौण्योच्यते । ननु विकल्पपरिसंख्यातिरात्रे ऽननुष्ठानमात्रेणापि सिध्यत्यनुष्ठानमात्रेणापि चेत्यननुष्ठानमेव न सिध्येदिति चेत् नैवम् । नात्र विकल्पपरिसंख्या शाब्दी किं तु अग्निष्टोमएव प्रवृणक्ति नातिरात्रइति । प्रवर्ग्यानुष्ठानपरिसंख्याद्वारा आर्थीत्यतिरात्रे नित्याननुष्ठानसिद्धिः । एवं विकल्पपरिसंख्यारीतिः क्वाप्यदृष्टेति यदि ब्रूयात्प्रतिब्रूयादेनम् । अकर्त्तव्यत्वोक्त्यर्थपर्युदासरीतिर्वा क्व दृष्टेति ।

अथासावत्रैव कल्प्यते ततः पूर्वाप्यत्रैव कल्प्यतइति तुल्यौ पर्युदासानुयोगपरिहारौ । नन्वग्निष्टोमे एव प्रवृणक्ति नान्यत्रेति परिसंख्यायामतिरात्रद्वितीयादिप्रयोगेष्वपि विकृत्यन्तरे च सर्वत्रैव प्रवर्ग्यो न स्यात् । तत्र वैकल्पिकप्रवर्ग्यमात्रपरिसंख्यायां सत्यामतिरात्रप्रथमाहारस्थस्यैव प्रवर्ग्यस्य पाक्षिकत्वात्परिसंख्या स्यान्न तु वैकल्पिकप्रवर्ग्यमात्रपरिसंख्यायामेव प्रमाणमस्तीति चेत् उच्यते । लाघवात्तद्विषयता लभ्यते । अग्निष्टोमएव प्रवृणक्ति नान्यत्रेति हि परिसंख्या यान्यत्र प्रवर्ग्यनिवृत्तिर्बोध्यमाना यत्रातिरात्रप्रथमाहारे विकल्पातिदेशात्पक्षे प्रवर्ग्यनिवृत्तिः प्रसक्ता तत्रैव पक्षान्तरे ऽपि सा चेद् बोध्यते लाघवं भवति । यत्र त्वतिरा-

त्रे द्वितीयादिप्रयोगे विकल्पान्तरे च प्रवर्ग्यनिवृत्तिः पक्षे ऽपि न प्रसक्ता तत्र चेत्परिसंख्या या सा योच्यते तत्रात्यन्तं गौरवं स्यात् । यथा नियमविधिरवघातादेरप्राप्तिपक्षमेव पूरयति प्राप्तिपक्षे तूदास्ते एवमियमपि परिसंख्या यत्र प्रवर्ग्यमिति सूत्रेऽप्राप्तिपक्षमेव पूरयति तत्प्राप्तिपक्षे तूदास्ते । यथा च व्रीहिनियमो यत्राग्नेयादौ व्रीहयः पक्षे प्राप्तास्तत्रैव तदप्राप्तिपक्षं पूरयन्प्रवर्तते नांपांशुयाजादौ तत्रानुपदिष्टद्रव्यस्य सामान्यविहितस्यापि ध्रौवस्य प्राप्तेः पक्षे ऽपि व्रीहीणामप्राप्तेः । लाघवाच्च विशेषप्रवृत्तस्यापि वाक्यस्य विशेषपरता दशमे ( पा० ३ । अ० २ ) उक्ता । यथा वायव्ये पशौ " हिरण्यगर्भः समवर्तताग्रे " इत्याघारमाघारयतीति श्रुतमुत्तरे आघारे तत्रैव "ऊर्ध्वो अध्वर" इति प्राकृतमन्त्रस्यानियमादृष्टफलस्तेनैवाघारपूर्वाघारे तु तत्कल्पनापत्तेर्गौरवादिति । नन्वेवमप्येषा प्राप्तपरिसंख्या । सा च त्रैदोष्यपरिहारासम्भवान्न युक्तेति चेत् न । । अस्या अपि वस्तुतो प्राप्तपरिसंख्यात्वात् । यथा हि " इमामगृभ्णन् रशनामृतस्ये " त्युदाहरणे यदीयं न स्यात्ततो लिङ्गाद्विनियोजकवाक्यकल्पनया गर्दभरशनादाने ऽपि मन्त्रः प्राप्नुयादस्यां तु सत्यां लिङ्गकल्पवाक्यकल्पनैव प्रतिबध्यते । एवमत्रापि यद्यग्निष्टोमे प्रवृणक्तीति परिसंख्या न स्यात्ततो ऽतिरात्रप्रथमाहारे यत्प्रवार्ग्यं प्रवृञ्जन्ति न प्रथमयज्ञे प्रवृञ्ज्यादित्यनयोरतिदेशात्कल्पनाद्विकल्पः प्राप्नुयात् । अस्यां तु सत्यामतिदेशाप्रतिबन्धादतिरात्रप्रथमाहारे विकल्पो भवतीति सर्वं निरवद्यम् ।

परीवाकाङ्क्षाप्ते यदुदितमहो वार्त्तिककृता ।
तदग्रात्या स्वामिन्नर इह बहु रमा ऽऽन्यपथति ।
तदुद्दूष्याह स्वां प्रकृतिमनयं वार्त्तिकमतम् ।
तदज्ञात्वा दूष्यं न विदुरजनैर्द्वेषविमुखैः ॥

इति प्रवर्ग्याधिकरणदूषणोद्धारः ।

वाक्यपादान्त्ये " पूषा प्रपिष्टभाग " इत्यत्राभारण्याधीते सिद्धान्तितं भज्यत इति भाग इतिव्युत्पत्त्या भक्ष्यं स्वीकार्यं वा भागशब्दार्थः । पूष्णश्च देवताधिकरणन्यायेन देवताविग्रहादिपक्षनिरासेन भक्षयितृत्वस्वीकर्तृत्वासम्भवात्तदुद्देशेन त्याज्यं भागशब्देन लक्ष्यते । तदुक्तम् ।

देवता निष्फला नैव पेषणस्य प्रयोजिका ।
उपादानं च यागस्य भागशब्देन विद्यते ॥

मुख्यार्थासम्भवाद्यागाल्लिलक्षयिषया ऽत्र हि ।
श्रूयते भागशब्दो ऽयं नानुपादानमस्त्यतः ॥

इति । तत्र चोदयन्ति केवलपूषोद्देशेन प्रपिष्टता न विधेया शुद्धाद्वियत्पूष्णः क्रत्वव्यभिचाराभावेन क्रत्वनुपस्थानेनानर्थक्यापातात् ।

न च यागमात्रोद्देशेन प्रपिष्टताविधिः नित्यवत्पूष्णो ऽनुवादस्य प्राप्त्यभावेनायोगात् । अतो ऽवश्यं यागविशिष्टपूषोद्देशेन पूषविशिष्टयागोद्देशेन वा प्रपिष्टता विधेया तत्र च विशिष्टानुवाददोषः । तथा न परं स एव किंतु "व्यङ्गैः स्विष्टकृतं यजति" "यवद्वकर्त्तुः प्रपमभक्ष" इत्यादावपि एकस्मिन्समासपदे उत्तरपदार्थोद्देशात्पूर्वपदार्थविधिश्चैकप्रसरत्वाभावात्समासविघातो ऽपि स्यात् । न च "यदग्नये, च प्रजापतये च सायं जुहोती"त्यादौ "क्षौमे वसानावग्निमादधीयामि"त्यत्र च यथा सायमनुवादेन वसनानुवादेन च देवतायाः क्षौमस्य च विधौ प्रकरणप्राप्तयोर्जुहोत्याधानयोरनुवादाद्विशिष्टानुवाददोषपरिहार एवं पूषवाक्ये सम्भवति अप्रकरणाधीतत्वात् । तस्मादिह विशिष्टानुवादकृतवाक्यभेदस्य क परिहार इति । अत्र ब्रूमः ।

यथा "लोहितोष्णीषा ऋत्विजः प्रचरन्ती"त्युष्णीषगतमेव लौहित्यम् ऋत्विज उद्दिश्य विधीयते । अन्यथा गैरिकादिना साक्षादेवर्त्विजां लौहित्यकरणं प्रसज्येत । समासोपात्तविशिष्टार्थविधौ वाक्यभेदश्च नास्ति लौहित्यमात्रपरश्च विधिर्भवति उष्णीषिणः प्रचरन्तीति प्रकृतित उष्णीषप्राप्तेः । यथा वा "एकं साम तृचे क्रियते स्तोत्रीयमित्य"त्रापि स्तोत्रोद्देशेन ऋग्गतमेव त्रित्वं विधीयते । अन्यथा स्तोत्रस्यैव साक्षात् त्रित्वविध्यापत्तेस्त्रीणि स्तोत्राणि क्रियेरन् । यद्यपि च स्तोत्राणामुत्पत्तावेकत्वं निरधारि तथाप्यावृत्त्यैव त्रित्वसंख्या सम्पाद्येत । स्तोत्रावृत्तिश्च नर्गावृत्तिं विनोपपद्यत इत्यृगावृत्तिरेव स्यान्न तिस्र ऋचः । तस्माद्यादृशी ऋग्गता त्रित्वसंख्या समासात्प्रतीयते तादृश्येव विधीयते संख्यामात्रपरश्च विधिर्भवति । एवं पूषवाक्ये ऽपि भागस्त्वाज्य हविरिति यावत् ततश्च समासात्तद्गतं हविर्गतमेव पेषणं पूषोद्देशेन विधीयते पेषणमात्रपरश्च विधिर्भवति । न च हविर्गतं पेषणमदेवताभूते पूष्णि हविरभावाच्छक्यं कर्त्तुं देवताभूत एवेति पूष्णो देवतात्वाक्षेपेण देवताभूत एव पूष्णि पेषणं विधीयत इति न विशिष्टानुवाददोषो न च समासवैरूप्यदोष इति सर्वं सुस्थम् ।

इति पूषाधिकरणसिद्धान्ताक्षेपपरिहारः ।

६६ एवं विशिष्टस्य तादर्थ्ये विशेषणस्यापि तादर्थ्यं भवति यथा "निर्मन्थ्येनेष्टकाः पचन्ती"ति मन्थनस्यापि पाकाङ्गत्वं यथा वा "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यैन्द्र्या न केवलमुपस्थानाङ्गतैव किन्तु गार्हपत्याङ्गत्वमपि व्यवहृतम् । एवं "दशापवित्रेण ग्रहं सम्मार्ष्टी"त्यादावपि । एवं विशिष्टस्य तादर्थ्ये ऽपि न विशेषणस्य तादर्थ्यं सम्मतं यथा ऽऽभिक्रमणस्य प्रयाजद्रव्यदेवतामन्त्राणां च प्रयाजमात्राङ्गत्वं न दर्शाङ्गत्वम् । एवमवघाताङ्गमन्त्रोलूखलमुसलतत्प्रोक्षणादेरवघातमात्राङ्गत्वं निर्वापाङ्गमन्त्रशूर्पादेश्च निर्वापमात्राङ्गत्वं न दर्शाङ्गत्वमिति । तत्र किं वैषम्यबीजम् । तथेह एव विशिष्टं प्रति तादर्थ्ये विशेषणं प्रत्यपि तादर्थ्यमिष्यते यथावघातस्य दर्शापूर्वसाधनीभूतेषु व्रीहिषु विनियोगाद्दर्शापूर्वाङ्गतापि ।

क्वचित्तु विशिष्टं प्रत्यपि तादर्थ्ये विशेषणं प्रति न तादर्थ्यमिष्यते । यथार्थज्ञानं प्रति स्वाध्यायस्याध्ययनस्य वा तादर्थ्ये ऽपि न विशेषणमर्थकर्म प्रति तादर्थ्यमिष्यते । एवं "अष्टवर्षं ब्राह्मणमुपनयीत" "तप्ते पयसि दध्यानयती"त्युपनयनदध्यानयनयोः क्रमेणाष्टवर्षविशिष्टं ब्राह्मणं प्रति तापविशिष्टं पयश्च प्रति तादर्थ्ये ऽपि न विशेषणीभूताष्टसंख्यानि वर्षाणि प्रत्युपनयनस्य तापं च प्रति दध्यानयनस्य तादर्थ्यमिष्यते । तत्रापि किं वैषम्यबीजमिति । अत्र ब्रूमः । ऐन्द्रीदशापवित्रयोर्वाक्यीयसंयोगाद् गार्हपत्यग्रहार्थत्वं यथाक्रममभिमतम् । एवं सोमस्य यागस्वरूपे आनर्थक्यादपूर्वसाधनांशे विधानादपूर्वशेषत्वं वाक्यात् । एवं "सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम" इत्यादौ वाक्यसंयोगाद् द्रव्यस्य फलशेषत्वम् ।

अत एव सोमादीनां फलभावनेतिकर्तव्यतात्वमुक्तं सप्तमाद्यादौ । सोमस्य तु फलभावनाकरणत्वमाघाराग्निहोत्राधिकरणे उक्तम् । न च करणत्वमितिकर्तव्यतात्वं चैकस्य विरुद्धं करणस्यैव सतो यागोपकारकतयेतिकर्तव्यतात्वात् । तदुक्तम् ।

न हि तत्करणं लोके वेदे वा किंचिदीदृशम् ।
इतिकर्तव्यतासाध्ये यस्य नानुग्रहे ऽर्थिता ॥

इति तस्मादैन्द्रीदशापवित्रसोमादीनामुपस्थानादिकरणकगार्हपत्यादिकर्मकभावनेतिकर्तव्यतात्वाद् द्रव्यभूतगार्हपत्याद्यर्थतापि वाक्याद् युक्ता । अभिक्रमणप्रयाजद्रव्यदेवतामन्त्राणां तु प्रयाजकरणकभावनामात्रेतिकर्तव्यतात्वमवान्तरप्रकरणादिभिर्न वाक्यीयः संयोगो दर्शादिभिरस्ति दर्शेतिकर्तव्यताकाङ्क्षात्मकेन

तु प्रकरणेन प्रयाजमात्रस्य ग्रहणमिति न विशिष्टस्य तत्र विनियोगे प्रमाणमस्तीति न विशेषणानां दर्शाङ्गत्वमिति वैषम्यम् । एवमेवावघातादेर्दर्शप्रकरणात्तदपूर्वीयव्रीह्यादौ विनियोगात्तदपूर्वाङ्गता युक्ता । अध्ययनस्य त्वर्थज्ञानाङ्गत्वे ऽप्यर्थभूतकर्मप्रकरणाभावान्न तदङ्गत्वेष्टा । तापाष्टवर्षादेस्तु ग्रहगार्हपत्यवत् क्वचिद्विनियोगाभावेन वाक्यीयसंयोगे सत्यपि न तदङ्गत्वमुपनयनदध्यानयनयोरिति ब्राह्मणत्वजातिवदुद्देश्यतावच्छेदकत्वेन न तूद्देश्यतायै अर्थापत्तिः प्रभवतीति वैषम्यमिति ।

नन्वेवमुद्देश्यविशेषणविवक्षायां वाक्यभेदः स्यात् सत्यमुद्देश्यवादशायामविवक्षितमेव विशेषणम् । अनन्तरवाक्ये तु समन्वयधीवेति सा वैश्वदेव्यामिक्षेति तच्छब्देनोपनयनसंस्कृताष्टवर्षब्राह्मणस्य दध्यानयने संस्कृततत्पयसश्च परामर्शेनोपादेयत्वाद्विशेषणविवक्षासिद्धिः । एवं यस्य "पिता पितामहो वा न सोमं पिबेत्स व्रात्य" इत्यत्रापि तच्छब्देनैकेनोभयपरामर्शात् । न चाष्टवर्षब्राह्मणतत्पयःप्रभृतिषूभयविशेषणसमुच्चयः, एकशब्दोपादाने ऽपि वैकल्पिकोभयपरामर्शात् । एवं "कामं तु यो ऽनूचानः श्रोत्रियः स्यात्तस्य प्रवृञ्ज्याद्" इत्यत्र कर्तृविशेषणमित्यादिति वार्त्तिककारस्य कर्तृविषयगतेः प्राप्तेश्च कर्मणि भिन्नपदोपात्तानेककर्तृविशेषणविधौ वाक्यभेदात्तच्छब्देनैवोभयपरामर्शादुभयविधिरिति ।

इति विशेषणतादर्थ्यविचारः ।

प्रकृतौ वा ऽद्विरुक्तत्वादित्यधिकरणे ( अ० ३ पा० ६ अ० १ ) द्विरुक्तत्वदोषापत्तिः कालवैषम्यं चेति सिद्धान्तहेतुद्वयमुक्तम् । तत्रान्योन्यव्यभिचारात् "सप्तदशो वै प्रजापतिर्यज्ञे यज्ञे न्वायत्त" इति तदधिकरणान्तरे च वार्त्तिककृदुक्ते प्रत्युदाहरणे प्राकृतद्वारप्रतीक्षणानपेक्षत्वात्प्राप्तिकालवैषम्याभावे ऽप्युपदेशातिदेशाभ्यां प्राप्तौ द्विरुक्तताप्रसङ्गो ऽस्त्येव । तथा फलचमसे सोमसामानविध्ये उच्यमाने विकृतित्वस्योभयवादिसिद्धत्वेन द्विरुक्तत्वोद्भावनायोगान्नित्यविधेः प्रथमं प्रवृत्तेर्नैमित्तिकविधेस्तु पश्चात्प्रवृत्तेः प्राप्तिकालवैषम्यमस्त्येव । तेन नैमित्तिकमतुल्यत्वादसमानविधानं स्यादिति सोमधर्मसामानविध्याधिकरणे अपि च नैमित्तिकः फलचमसः स सोमधर्मान् प्रतीप्सति तत्र धर्माः साधारणाः सन्तो द्विरुक्ता इत्युच्येरन्निति ग्रन्थेन सामानविध्ये द्विरुक्तताप्रसङ्गाभिधानं भाष्यकारीयमुपेक्ष्यमेवेति ।

ननु "सप्तदशो वै प्रजापति"रित्यत्र द्विरुक्तत्वप्रसङ्गे सति सामानविध्याभावात्कथं प्रत्युदाहरणत्वं वार्त्तिककृतोक्तम् । उच्यते

तदर्थशास्त्रादाविवाम्नानर्थक्यपरिहारः प्रकृतौ वाऽद्विरुक्तत्वादित्यधिकरणे ( अ० ३ पा० ६ अ० १ ) पूर्वपक्षप्रयोजनेन कार्यः । पर्णतादावप्येवमेव तदुद्धारः सुवचः । अतश्च प्राप्तिकालवैषम्यमेवात्र मुख्यो हेतुः सिद्धान्तसिद्धेः । द्विरुक्तताप्रसङ्गस्त्वभ्युच्चयहेतुरेव । अन्यथा हि संशय एव स्यात् किमतिदेशाभ्युपगमेन द्विरुक्तताख्यमानर्थक्यं परिहर्त्तव्यं किं वातिदेशेन प्राप्स्यमानस्यापि पर्णतादेः पूर्वपक्षप्रयोजनरूपप्रायश्चित्तविशेषप्राप्त्यर्थस्याभ्युपगमेनानर्थक्यं परिहर्त्तव्यमिति सन्देह एव दुष्परिहरः स्यात् । अभ्युपगतो हि तत्र शतशोऽतिदेशादिमध्यप्रमाणान्तरप्राप्स्यमानस्याप्यर्थस्य पुनर्विधिः प्रयोजनविशेषेण अग्नेरुक्थ्यावौ तमुनक्ष्येनेत्यादिना ।

गवामयने चाद्ययोरह्नोरैन्द्रवायवाग्रताविधिना प्राग्धर्मत्वात्प्राप्स्यमानाया ऐन्द्रवायवाग्रतायाः । तथा तदर्थवाक्तायामपि लिङ्गात्प्राप्स्यमानस्य मन्त्रस्य । तथा ज्योतिष्टोमादौ सार्वकाम्यप्राप्तस्य स्वर्गार्थत्वस्य । एवमाम्नातेनार्थवादेन विधिवत् प्राक्षेप्स्यमानस्यापि प्राशस्त्यस्य । एवमन्यत्रापि । तस्मात्प्राप्तिकालवैषम्यमेव संशयापनयायोपात्तं प्रकृतौ वाऽद्विरुक्तत्वादित्यत्रेति निष्कर्षः ।

अथैतदधिकरणप्रयोजनं न सुज्ञेयमित्यतोऽभिधीयते । यद्यपि कोऽर्थः सामान्यविध्ये चेद् गुणकामप्रवर्तनमित्यन्यत्रोक्तं तथापि तद्यजनादिक्रियायामेव युज्यते । तदाश्रितगुणकामसम्भवात् पर्णत्वादिजातेस्त्वक्रियत्वेन तदाश्रितगुणकामो न सम्भवति । अतः प्रयोजनान्तरं वाच्यम् । तत्र पूर्वपक्षे पर्णत्वादीनामुपदिष्टत्वाविशेषेण तल्लोपे प्रकृतौ विकृतौ च प्रायश्चित्तसाम्यं सिद्धान्ते तूपदिष्टातिदिष्टयोर्लोपे प्रायश्चित्तविशेष इति भवदेवः । तन्न ।

न ह्युपदिष्टातिदिष्टयोर्लोपे प्रायश्चित्तविशेषः क्वाप्याम्नातो दृश्यते । अतः प्रयोजनं वाच्यम् । तदुच्यते । वाक्यपादाद्ये "उच्चैर्ऋचा क्रियत" इत्याविस्वरस्य यदुक्तो यत्र आर्तिमियाद् "भूः स्वाहे" ति "गार्हपत्ये जुहुयादि"त्यादिनैमित्तिकप्रायश्चित्तस्य च वेदधर्मत्वमुक्तम् ।

ततो द्वितीयाधिकरणे उत्पत्तिवेदनिबन्धनमिदमुभयमिति पूर्वपक्षिते सिद्धान्तितं विनियोगविधिनिबन्धनमुभयं ऋग्वेदादिना यद्वियुज्यते तद्दोषस्त्वादि तस्यैव वार्त्तौ प्रायश्चित्तमिति । ततश्च याजुर्वेदिकाज्ज्योतिष्टोमात्तद्विकृतौ सामवैदि-

के श्येने या दीक्षणीयादीष्टयः स्वाङ्गविशिष्टा अतिदिष्टास्तास्वपि या जुहूस्तत्रापि पर्याप्तात्यपूर्वपक्षे याजुर्वैदिकविधिनियुक्तेति तद्भ्रेषे याजुर्वैदिकाङ्गभ्रेषप्रायश्चित्तं कार्यं सिद्धान्ते तु तस्याः प्रकृतौ याजुर्वैदिकविधिविनियुक्तत्वे ऽपि श्येने सामवैदिकातिदेशविनियुक्तत्वात्सामवैदिकाङ्गभ्रेषप्रायश्चित्तं न चोहादीनामनाम्नातमन्त्रत्वमिवातिदिष्टस्यावेदत्वम्। ऊहप्रवरनाम्नाममन्त्रत्वमित्यत्रैव हीदमुक्तम्। अवहननादिविधौ द्रव्यादिपदवद्विश्वजिदादौ फलपदवत्सौर्यादावतिदेशवदूहादेरपि श्रुतार्थापत्तिकल्प्यस्य अर्थाद्वा कल्पनैकदेशत्वादिति वेदैकदेशत्वोक्तेर्वेदत्वाभ्युपगमे ऽपि मन्त्रो ब्राह्मणमित्युक्तं द्वैराश्यं प्रत्यक्षवेदस्यैव न कल्पस्येति प्रसङ्गादुक्तमेतदधिकरणमिति।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमी-
मांसाद्वैतसाम्राज्यधुरन्धरभट्टनारायणात्मजभ-
ट्टशङ्करकृते मीमांसाबालप्रकाशे
तृतीयाध्यायार्थसङ्ग्रहः।

---

चतुर्थे प्रयोजकाप्रयोजकौ निरूपितौ। तत्र प्रयोजको ऽपि सप्तधा। अप्रयोजको ऽपि सप्तधा।

तथा हि। कश्चिदुत्पत्तेरपि प्रयोजकः उपादानस्यापि पालनस्यापि।

यथा ऽऽग्नेययागामिक्षायागादिर्यथाक्रममष्टाकपालामिक्षादेः।

कश्चित्तु त्रितयस्याप्यप्रयोजको यथा तुषोपवापः कपालस्य नोत्पत्तेः प्रयोजको नोपादानस्य च पालनस्य स तु पुरोडाशार्थमेवोत्पन्नमुपात्तं पालितं च कपालं साधनत्वेन गृह्णाति। कश्चित्तु उत्पत्तेरप्रयोजक उपादानपालनयोस्तु प्रयोजकः यथा ऽक्षाभ्यञ्जनं न पांसूनामुत्पत्तेः प्रयोजकं स्वत एव तूत्पत्त्या सिद्धानां तेषां पदग्रहणरूपोपादानस्य प्रयोजकं पालनस्य च। एवं प्रातर्दोहयागो ऽपि अशितपीतोत्पन्नस्यैवोधःस्थितदुग्धस्य दोहनरूपमुपादानं पालनं च प्रयुङ्क्ते।

वाजिनयागो ऽपि वाजिनोत्पत्तेरप्रयोजकस्तस्या आमिक्षार्थदध्यानयनाधीनत्वात्। वाजिनोपादानपालनयोस्तु प्रयोजक एव। कश्चित्तूत्पत्तेरेव प्रयोजिका नोपादानपालनयोर्यथा ऽऽमिक्षा वाजिनोत्प-

त्तेः प्रयोजिका नोपादानपालनयोः। एवं स्वर्गादिफलं यागोत्पत्तेरेव प्रयोजकं न यागोपादानपालनयोः उत्पत्तिव्यतिरिक्तयागोपादानासम्भवात् । क्षणिकस्य च पालनासम्भवात् । कश्चित्तूत्पत्त्युपादानयोर्न प्रयोजकः पालनमात्रस्य तु प्रयोजको यथा स्विष्टकृद्यागादिः शेषस्य । कश्चित्तूपादानस्यैव प्रयोजको नोत्पत्तिपालनयोर्यथा प्राशित्र सममपदनिधाने ऽक्षाभ्यञ्जनमसंस्कृतपांसूपादानस्यैव प्रयोजकं न पांसूत्पत्तिपालनयोः । एवं चरौ तुषोपवापो हस्तोपादानस्यैव प्रयोजको न तदुत्पत्तेः पालनस्य वा । एवमाग्नेयादियागो देवताया उद्देशात्मकोपादानस्यैव प्रयोजको न देवतोत्पत्तेस्तत्पालनस्य वा ।

कश्चित्तूत्पत्तिपालनयोरेव प्रयोजको न तूपादानस्य यथा स्वर्गादिफलमपूर्वस्योत्पत्तेः प्रयोजकं पालनस्यापि धर्मनाशककर्मनाशाजलस्पर्शादौ हि कृते स्वर्गानुत्पत्तेः । न तूत्पत्तिव्यतिरिक्तं किं चिदपूर्वस्योपादानं यत्स्वर्गादिना फलेन प्रयुज्येत । कश्चित्तूत्पत्त्युपादानयोरेव प्रयोजको न पालनस्य । यथाऽऽग्नीषोमीयविकारे निरूढपशावसति दीक्षिते मैत्रावरुणाय दण्डदानं दण्डोत्पत्त्युपादानयोः प्रयोजकं न तत्पालनस्य पूर्वमविद्यमानत्वात्तस्येति । एवं प्रयोजको ऽप्याद्यभेदस्य तृतीयादिभेदानां च गणनया सप्तविधः । अप्रयोजको ऽपि द्वितीयस्य तृतीयादिभेदानां च गणनया सप्तविध इति सिद्धम् ।

पुनरपि प्रयोजको द्विविधः ।

कश्चित्स्वार्थं प्रयुङ्क्ते यथा शेषी स्वर्गादिः शेषं यागादिकं स्वार्थं प्रयुङ्क्ते न परार्थम् ।

कश्चित्तु परार्थं किं चित्प्रयुङ्क्ते न स्वार्थम् । यथा निमित्तं जीवनभेदनादि अशेषिभूतं दर्शादिकं भेदनहोमादिकं च न स्वार्थं प्रयुङ्क्ते किं तु पापक्षयकृदुपकारादिशेष्यर्थं प्रयुङ्क्ते । तदुक्तमाचार्यैः ।

तथा होमाः प्रयुज्यन्ते भेदनस्कन्दनादिभिः ।
निमित्तैर्न च तेष्वेषां होमानां शेषता मता ॥

इति । अप्रयोजकोऽपि पुनर्द्विविधः । कश्चित्स्वाङ्गस्याप्यप्रयोजको यथा तुषोपवापः । कपालस्य स्वाङ्गभूतस्याप्यप्रयोजकः ।

कश्चित्तु पराङ्गस्य स्वोपकारिणो ऽप्यप्रयोजकः यथा दध्यानयनस्य वाजिनयागः । यथा चाक्षाभ्यञ्जनम् एकहायनीनयनसाध्यमपि

न तस्य प्रयोजकम् । यथा वा प्रतिपत्तिः शकृल्लोहितनिरसनस्विष्टकृद्यागचात्वालप्रासनादिः प्रतिपाद्यस्य शकृल्लोहितस्य शेषस्य कृष्णविषाणादेश्चाप्रयोजकाः। तथा प्रसङ्गेऽपि पशुपुरोडाशयागादिः पश्वङ्गस्य प्रयाजादेः स्वोपकारिणो ऽप्यप्रयोजकः । अप्रयोजकादिलक्षणं भाष्ये ।

साधारणं भवेत्तन्त्रे परार्थे त्वप्रयोजकः ।
एवमेव प्रसङ्गः स्याद्विद्यमाने स्वके विधौ ॥

इति । अस्यार्थः । साधारणम् अनेकेषां यत्र प्रयोजकत्वशक्तिरस्ति तत्तन्त्रम् । यथा प्रयाजादेः सकृदनुष्ठानं तद्विषया ह्यनेकेषामाग्नेयादीनां प्रयोजकत्वशक्तिरस्ति । परार्थे त्वप्रयोजकः । अत्र परार्थे परमात्रार्थे इत्यर्थः । अन्यथा तन्त्रे ऽतिप्रसङ्गात् । एवमपि पुरोडाशकपाले अव्याप्तिः । कपालेषु श्रपयतीति सप्तम्या परस्मिन्श्रपणइव कपालानां पुरोडाशकपालेनेति तृतीयया तुषोपवापे ऽपि तादर्थ्यात् । अतः परार्थे इत्यस्य परमात्रप्रयुक्त इत्यर्थः । एव मेव प्रसङ्गः स्यादित्युक्ते कस्तर्ह्यप्रयोजकप्रसङ्गयोर्भेदः इत्यत उक्तं विद्यमाने स्वके विधाविति ।

यद्यपि भट्टनये पशुपुरोडाशे प्रसङ्गोपकारिप्रयाजादेरनङ्गत्वात्तदंशो पुरोडाशीयो ऽतिदेशः प्रयोगवचनश्च लुप्यते तथापि पिष्टलेपफलीकरणाज्यभागादिसाधारण्येन तावत्प्रयाजादिप्रयुक्तिसमर्थो विधिरस्ति वाजिनादिविधिस्तु वाजिनादेव विषयीकरोति न च तस्य तत्र प्रयोजकशक्तिरस्ति अन्यत्तु किं चिन्नैवासौ विषयीकरोतीति वैषम्यमित्यर्थः । अत्रैवार्थे द्वादशाध्यायाद्यभाष्यगतस्य तच्छ्लोकव्याख्यानग्रन्थस्य तात्पर्यं वर्णनीयम् ।

इति तन्त्रप्रसङ्गाप्रयोजकलक्षणनिरूपणम् ।

चतुर्थे प्रयाजशेषाभिघारणाधिकरणे

किं चिदुच्यते । चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तदिति प्रयाजार्थे चतुर्गृहीते चतुर्गृहीतं वा एतदभूतस्याघारमाघार्य त्रिरितः प्राचीनं प्रयाजान्यजतीत्यनेन प्रयाजत्रये उपसंहृतं तेन जुह्वा जुहोतीति होमे विहिते कृत्स्नमेव होतव्यम् ।

ननु प्रयाजशेषाभिघारणरूपप्रतिपत्त्यनुरोधेनाकृत्स्नहोमः स्यात् । न । प्रतिपत्तीनामप्रयोजकत्वात् । नचोत्पत्तिप्रयोकत्वमेव तासां नास्ति धारणप्रयोजकत्वं तु तासामस्त्विति वाच्यम् । अधिकरणचतुष्टयविरोधात् । तथा हि । स्तोमे डयचनात्कृष्णो न विद्यते इति पूर्वपक्षिते । अग्रैर्जुहोति चमसैर्जुहोतीति सर्वहोमप्राप्ता-

यपि अल्पं जुहोतीति वचनेन सिद्धान्तितं तद्विरुध्येत अकृत्स्नहोमस्य न्यायप्राप्तत्वे ऽल्पवाक्यस्य विधित्वायोगात् ।

तथा आज्याच्च सर्वसंयोगादित्यत्र चतुर्गृहीतं जुहोतीति ध्रौवाज्याद् गृहीतेन चतुर्गृहीतेनोपांशुयाजे कृते ऽपि शेषकार्यानुरोधेन शेषः स्थाप्येतेति तदधिकरणविरोधः । एवं साकम्प्रस्थाय्ये स्विष्टकृदिडं च तद्वत् सौत्रामण्यां च ग्रहेष्वित्यनयोरप्यधिकरणयोः ( अ० ३ । पा० ५ । अ० २ । ३ । ) सिद्धान्तौ प्रत्युद्धृतौ स्याताम् किं च न केवलं सिद्धान्तविरोध एव किं तु प्रतिपत्तीनां प्रतिपाद्यप्रयोजकत्वायोगरूपन्यायेन यथा प्रतिपाद्योत्पत्तिप्रयोजकत्वाभावः सिध्यत्येव प्रतिपाद्यस्य शास्त्रतः कृत्स्नहोमे प्राप्ते तद्धारणाप्रयोजकत्वमपि सिध्यत्येव । तदुक्तं साम्ने ऽवचनादित्यधिकरणे (अ०३।पा०५।अ०६) शास्त्रदीपिकायाम् । अथ शेषकार्यवशाच्छेष्येत ततस्तेषामपि प्रयोजकत्वाच्छेषनाशदोषापत्तावहविरन्तरागमः स्यादिति । तस्मादल्पं जुहोतीत्यादिवचनाभावाद्धुवस्य प्रयाजशेषता कृत्स्नहोमात्प्रयाजयेव एव नास्तीति प्रयाजशेषाभिघारणाधिकरणमनुपपन्नम् । अत्र ब्रूमः । कृत्वाचिन्तैवेति कश्चिदपि ग्रन्थकारैरनुक्तमपि कल्पनीयम् ।

यद्वा । कृत्स्नहोमे शास्त्रतः प्राप्ते यदि प्रमादात्सशेषं जुहोति तत इयं शेषस्य प्रतिपत्तिर्विधीयते इति नित्यवदाम्नानभङ्गेन कल्पनीयम् । प्रतिपत्तिविधिनैव च कृत्स्नहोमाभावकृतवैगुण्यप्रतिसमाधिरस्तापि निवर्त्ततइति ।

इति प्रयाजशेषाभिघारणाधिकरणसमाहितिः ।

चतुर्थाध्यायाद्यपादे ऽन्त्याधिकरणे

ऽनारभ्याधीतं "चतुर्गृहीतं जुहोती"ति वाक्यं सिद्धान्तसाधकत्वेनोपन्यस्तं चतुर्गृहीतं जुहोतीति ह्यनारभ्याधीतेन होमाङ्ग चतुर्गृहीतं प्राप्तम् तेनाघ्राद्युपभृति गृह्णाति प्रयाजानुयाजेभ्यस्तादिति होमाङ्गभूतग्रहणाङ्गभूताष्टसंख्या बाधिता चतुष्टुवलक्षणार्थेति । तदनुपपन्नम् ।

चतुर्गृहीतं जुहोतीति हि होमानुवादेन चतुर्गृहीतं विधत्ते न च प्रयाजानुयाजयोर्होमः केन चित्प्राप्तः । एवमाज्यभागयोरुपांशुयाजे च होमस्याप्राप्तेनं चतुर्गृहीतं विधीयते । अथ चतुर्गृहीतं जुहोतीति चतुर्गृहीतविशिष्टहोमविधिरित्युच्यते । तदप्यनुपपन्नं न ह्यत्र दर्शयागादि किं चिदनूदितं न वा "यस्य पर्णमयी जुहू"रित्यादिवत्कर्माव्यभिचारि किं चिद्द्वारमनूद्य होमविधानम् । तेन कर्माङ्गतैवास्य होमस्य न स्यात् । किं तु विश्वजिन्न्यायेन कल्प्यफलं स्व-

तन्त्रमेवेदं होमान्तरमापद्येत ।

अथ मतं चतुर्गृहीतमिति द्वितीयाबलात्तदनूद्य तत्संस्कारकत्वेन प्रतिपत्तिभूतो होमो विधीयते । चतुर्गृहीतस्य होमाङ्गत्वोक्तिस्तु तन्त्ररत्ने होमोपकारकत्वमात्राभिप्रायेत्युच्यते । तदप्ययुक्तम् । एवमप्यस्यानारभ्याधीतत्वाच्चतुर्गृहीतस्य भोजनादौ लोकेऽपि सम्भवादग्निर्वापालम्भवच्च वैदिककर्माङ्गचतुर्गृहीतोपस्थितिरस्तीति नास्य होमस्य प्रयाजाद्यङ्गता सिध्येत् । अथ चतुर्गृहीतस्य होमाङ्गत्वोक्तिवदनारभ्यवादत्वोक्तिर्नाद्रियते ततोऽस्तु नाम कर्माङ्गचतुर्गृहीतोपस्थितिस्तथापि यत्र चतुर्गृहीतं विहितमस्ति चतुर्जुह्वां गृह्णाति, प्रयाजेभ्यस्तदित्यत्र तत्रैव विनैव चतुर्गृहीताक्षेपेण होमविध्युपपत्तौ नोपांशुयाजाज्यभागादौ चतुर्गृहीताक्षेपो होमविधिनोपपद्यते दृष्टस्य विध्याक्षेपयत्कर्मभिः । एतेनेदमपि निरस्तम् । यथाऽध्ययनस्य स्वाध्यायार्थत्वविधिरेव सामर्थ्यदृष्टार्थत्वसनाथः स्वाध्यायस्यार्थज्ञाने विनियोगमाक्षिपति यथा वा "चरुमुपदधाती"ति चर्वर्थोपधानविधिरेव सामर्थ्यदृष्टार्थत्वप्रकरणैश्चरोरेवं होमोऽप्युपांशुयाजाद्यर्थः सन्स्वभाव्यस्य चतुर्गृहीतस्योपांशुयाजाद्यर्थतामाक्षिपतीति ।

अथ मतम् उपांशुयाजाज्यभागादिष्वपि ध्रौवमेव चतुर्गृहीतमङ्गमस्तीति तदनूद्यैव होमविधिरयम् । एवमप्यौपभृते चतुर्गृहीतस्यानेन विध्यभावाप्राप्तत्वस्य चतुष्ट्वलक्षणार्थता सिध्येत् । किं चैवं सति उपांशुयाजादौ ध्रौवस्यैवैकदेशं सकृदेव जुह्वां गृह्णीयात्समानयनपक्षे त्वपरं चतुर्गृहीतं सिध्येत् । अथैवमेतद्दोषद्वयोद्धारोऽभिमतः । औपभृते होमस्यैवासिद्धेर्न होममनूद्य चतुर्गृहीतं विधीयते किं तु चतुर्गृहीतमनूद्य होमो विधेयस्तत्र चान्योन्याश्रयापत्तिः अदृष्टत्वेन चतुष्ट्वलक्षणायां सत्यां प्राप्तं चतुर्गृहीतमनूद्य होमो विधेयः । होमविधौ च तस्याङ्गत्वानिर्वाहाय चतुर्गृहीतस्याक्षेपतः प्राप्तौ तल्लक्षणादृष्टत्वेनेति । अतः समानयनदृष्टार्थत्वादेवौपभृते होमप्राप्तौ चतुर्गृहीतविधिरित्याद्यदोषपरिहारः । किं चेत्यादिद्वितीयदोषस्य परिहारस्तु उपांशुयाजादौ ध्रौवैकदेशस्य चतुर्गृहीतत्वाभावात् । अतः तदनूद्य होमविध्ययोगाद्धोमानुवादेनैव चतुर्गृहीतं विधेयमिति । एतदप्ययुक्तम् ।

उपांशुयाजादौ होमाप्राप्तेरेव । किं च यदुक्तम् । ध्रौवैकदेशस्य चतुर्गृहीतत्वाभावादिति । तदपि न । प्राकृतप्रयाजप्रयाविषयजौहवेऽपि चतुर्गृहीतैकदेशस्यैव चतुर्गृहीतशब्देन लक्षणयोक्तेस्तद्वदेव ध्रौवेऽपि सम्भवात् । एवमप्यौपभृते चतुर्गृहीतस्यानेन विध्यभावा-

प्राप्तत्वस्य चतुष्ट्वद्वयलक्षणार्थता सिध्योदिति दोषः पूर्वोक्तः स्यादेव । किं चैवं ध्रौवाज्जुह्वामुपांशुयाजाद्यर्थं चतुर्गृहीतं न सिध्येदित्यपि पूर्वोक्तो दोषः प्रसज्येत । यदि च तत्र कृत्स्नचतुर्गृहीतसंस्कारकहोमस्याङ्गत्वानुपपत्त्या चतुर्गृहीतं प्रति होममाक्षिप्येत ततः प्रयाजत्रयेऽपि प्रत्येकं तादृशहोमस्याङ्गत्वानुपपत्त्या प्रत्येकं चतुर्गृहीतमाक्षिप्येत । अथ चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामिति सामान्यतोऽभिक्रामं जुहोतीत्यादिविशेषतो लिङ्गदर्शनैरेवोपांशुयाजप्रयाजानुयाजाज्यभागेषु होमप्राप्तिः । चतुर्गृहीतं जुहोतीत्यनेन तु प्राक्तनप्रयाजत्रये चतुर्गृहीतसत्त्वात्तद्व्यतिरिक्तेषु होमवत्सु चतुर्गृहीतं विधीयते । प्राक्तनप्रयाजत्रये तु चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तदित्युद्देश्यभूतप्रयाजसाहित्यस्याविवक्षितत्वेन प्रतिप्रयाजं चतुर्गृहीतप्राप्तत्वा शङ्कायामपि जुह्नेत्यादेकस्यैव चतुर्गृहीतस्य तन्त्रेण लिङ्गदर्शनाप्राप्तहोमसाधनतासिद्धेर्न तत्र चतुर्गृहीतं जुहोतीत्यस्य व्यापार इति ।

तदप्ययुक्तम् । लिङ्गदर्शनमात्रस्य होमप्रापकत्वायोगात् । अत एव तत्र तत्र भाष्यकारेणोक्तं लिङ्गमसाधकं प्राप्तिरुच्यतामिति । न च सप्तमे ( पा० ३ । अ० ९ ) स्वरसामैककपालामिक्षं च लिङ्गदर्शनादित्यत्र लिङ्गमात्रस्य प्रापकत्वमिवात्रापि तथा स्यादितिवाच्यम् । तत्रापि इतिकर्तव्यताकाङ्क्षाभावनाविध्यन्यथानुपपत्त्या सामान्यतोऽतिदेशाकल्पनेऽक्ताः शर्करा इत्यत्रार्थवादेनेव लिङ्गेविशेषमात्रावगमादिति ।

अत्र ब्रूमः । यजतिचोदनाचोदितेषु द्रवद्द्रव्यकेषु प्रतिपत्तिरूपे आचाराद्धोमे प्राप्ते ऽनारभ्यवादेन चतुर्गृहीतं जुहोतीत्यनेन चतुर्गृहीतमात्रविधिः सोऽप्युक्तरीत्याद्यप्रयाजत्रयव्यतिरिक्तेष्विति ।

यत्तु शास्त्रदीपिकायां सर्वप्रदानाधिकरणे (अ० ३ पा०४। अ०१४ ) नन्वाचारादेव होमः प्राप्त इत्याशङ्क्य दूषितम् । न । आचारस्य स्वतः प्रामाण्याभावात् श्रुतिकल्पनस्य च प्रत्यक्षश्रुतिसद्भावेऽनुपपत्तेः । यदि चाचारप्रमाणको होमः स्यात्ततस्तस्य प्रकृतिविकृतिसाधारणत्वाद्विकृतिष्वप्यौपदेशिक एव होम इति प्रत्यक्षद्वारत्वादाहवनीयादयः । पवमानेष्ट्यादिपूपदेशादेव प्राप्येरन्नाश्रयश्च स्वकालत्वादिति न्यायात् । तत्र तासामग्निः प्रकृतितः प्रयाजवदिति सूत्रकारव्यवहारो नोपपद्येतेति । तदपि चतुरवत्तहोमविषयमेव तत्रैव प्रत्यक्षश्रुत्योपस्तरणादिवाक्यप्राप्तचतुरवत्तानुवादेन होमविधिसम्भवादाद्यदूषणापाताच्चतुर्गृहीतं जुहोतीत्यत्र तु न तत्प्राप्तिः चतुर्गृहीतमा-

प्रथमाचास्तदनुवादेन होमविधेरसम्भवस्योक्तत्वात् । नापि द्वि-तीयदोषप्रसक्तिः । तासामग्निरिति सूत्रस्य चतुरवत्तहोममात्रवि-षयतयाप्युपपत्तेरिति ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमी-
मांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्म-
जभट्टशङ्करकृते मीमांसाबालप्रकाशे
चतुर्थोऽध्यायार्थसङ्ग्रहः ।

---

पञ्चमे ( पा० १ । अ० ३ ) अनियमोऽन्यत्रेत्यधिकरणे शाखाभेदेनाम्नातानां प्रयाजाद्यनुमन्त्रणानामेको ममैका च तस्येत्या-दीनां वसन्तमृतूनां प्रीणामीत्यादीनां च समुच्चयं सिद्धं कृत्वा किं क-ल्पित क्रमो श्रुतानियत इति चिन्तितम् । तत्र शङ्क्यते । ननु य-द्यनुमन्त्रणानामदृष्टार्थत्वं ततो मन्त्राधिकरणविरोधः । तथा क्रमश्च देवसामान्यादित्यत्र न चाविज्ञातलिङ्गानां प्रक्रिया विनियोजिका म-न्त्रस्य च सामर्थ्यं सन्निधानुपसंहृतमित्यनुमन्त्रणदृष्टार्थत्वोक्त्य-विरोधः । तथा ।

मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत् ।
धपियां तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ॥

इत्येव लक्षणानुमन्त्रणत्वव्याघातः । अथ दृष्टार्थत्वं तत समुच्चयाभावे क्रमचिन्ता न युक्तेति । अत्र कश्चित् । मन्त्राणां स्मृ-तिरूपं दृष्टमेव प्रयोजनम् । स्तोत्रशस्त्रमन्त्राणामिव स्मृतिस्तु स्तो-त्रशस्त्रवद्दृष्टार्था प्रयाजाद्यनुमन्त्रणेषु च यद्यपि श्रुतिद्वारा कर्मस्मृ-तिर्न भवति तथाप्यनुमन्त्रणसमाख्यया । तात्पर्यमहिम्ना तदर्थाभ्यु-पेया या ऽनुमन्त्रत्वेत्यत्र स्मृतेरपि दृष्टार्थत्वोक्तिः कृतयागप्रत्यवेक्षणेन दृष्टार्थत्वादितिग्रन्थे सा ऽभ्युपेत्यवादमात्रमिति तदयुक्तम् ।

तथा सति पूषादिस्मृतेरप्यदृष्टार्थाया दर्शप्रकरणग्रहणसम्भ-वे तदनुमन्त्रणानामुत्कर्षायोगात् । अतो यत्र मन्त्राणां लिङ्गात्कर्मस-मवेतार्थप्रकाशकता तत्र स्मृतेरपि दृष्टार्थतैव । तद्विपर्ययादिव च प्रायिकमनुमन्त्रणलक्षणं लिङ्गमूलत्वात् । अतो न तद्वशात्प्रयाजाद्यनुमन्त्र-णमन्त्राणां लक्षणया स्मृत्यर्थत्वेनादृष्टार्थत्वमेव । कृतयागेत्यादिवार्तिके च स्मृत्यर्थानुमन्त्रणविषयमेव नाभ्युपेत्यवादः । तद्विषयमेव तु स-

र्थोपि चादृष्टार्थत्वमिति वार्त्तिकं नित्यानुवाद इति ।

यद्वा मन्त्रार्थत्वेनेति न मन्त्रप्रतिपाद्यत्वेत्यर्थः । करणमन्त्रे॰ ष्वतिप्रसङ्गात् । किं तु प्रयोजनवचनो ऽयमर्थशब्दः । ततश्च क्व चित्प्रतिपाद्य. क्व चित्प्रतिपाद्यः शेषी मन्त्रप्रयोजनत्वेन यत्र स्मर्यते तदनुमन्त्रणमित्यर्थः । एव च मन्त्रमुच्चारयन्निति शतृप्रत्ययो वर्तमानार्थः समर्थितो भवति । मन्त्रजन्यानुस्मृतिर्मन्त्रपाठोत्तरकालेति तत्र मन्त्रमुच्चारयन्स्मरेदित्यनुपपन्नम् । तेन दृष्टार्थस्याप्यग्नेयाद्यनुमन्त्रणस्यादृष्टार्थस्यापि च प्रयाजाद्यनुमन्त्रणस्य पाठकाले शेष्यनुसन्धानादुत्तरत्रानुमन्त्रणतापि युक्ता भवत्यर्थस्यच्च स्वसमुच्चयो ऽपीति ।

भट्टजयस्तु करणत्वाभावे सतीति विवक्षितत्वान्न करणेष्वतिप्रसङ्गः । उच्चारयन्निति च "वर्तमानसामीप्ये वर्तमानवद्वे" ति शता मन्त्रार्थत्वेनेति मन्त्रप्रतिपाद्यत्वेनेत्यर्थ. । ततश्च प्रयाजानुमन्त्रणेष्वप्यनुमन्त्रणसमाख्ययैव लक्षणया दृष्टार्थत्वकल्पने ऽपि अग्न्याद्यावानमन्त्रवद्वचनं समुच्चयार्थं भविष्यति इत्याचिन्ता वे॰ त्याहुः । इति प्रयाजानुमन्त्रणक्रमाधिकरणसमर्थनम् ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्मजभट्टशङ्करकृते मीमांसाबालप्रकाशे पञ्चमाध्यायार्थसङ्ग्रहः ।

---

षष्ठाध्याये "यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति स त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं ये ऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमि" त्यत्र प्रकान्ते दर्शकर्मणि देवतातद्गुणचरुत्वविधौ वाक्यभेदात्कर्मान्तरमिति पूर्वपक्षयित्वा सिद्धान्तितम् । मन्त्रार्थवादादौ शिपिविष्टो विष्णुरित्यादिसामानाधिकरण्यादिशिष्टावगता चैवास्ति दातृप्रदातृशिपिविष्टशब्दानां च यौगिकत्वेन श्रुत्यैवाग्न्यादिपदसामानाधिकरण्यात्पदद्वयप्रतिपादितं विशिष्टं देवताकारकमेकमेव विधेयम् । अभ्युदयेष्टिप्रकरणे च सह श्रपयतीति वचनमस्ति तद्देवतैक्याद्धविरविप्रयोः शृताग्निप्र॰

योश्च सह पाकं विधत्ते ततश्चार्थतः प्राप्तं चरुत्वं दधिशृतयोश्चाधिकरणत्वमनूद्यते केवलं तु देवताकारकं विशिष्टं विधीयते प्रकृते दर्शे इति वाक्यभेदाभावाच्च कर्मान्तरविधिरिति ।

तदेतदाक्षिपन्ति दीक्षिताः । दधिवाक्ये शृतवाक्ये च प्रतिद्रव्यं देवतासम्बन्धबोधनाद्वाक्यभेदो दुष्परिहर इति कर्मान्तरत्वपूर्वपक्षो दुष्परिहरः । अङ्गीकृतं च वाक्यभेदप्रसङ्गपरिहाराय प्रकृतयागहानेन कर्मान्तरविधिपरत्वम् । यथा "यस्योभयं हविरार्तिमार्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेद्" इत्यत्रौदनद्रव्यविधानात्पञ्चशरावपरिमाणविधानान्महेन्द्रेण च सह विकल्पतः प्राप्तस्येन्द्रस्य नित्यवद्विधानाद्वाक्यभेदमियैव प्रकृतकर्महानेन कर्मान्तरस्य दोहाधिनिमित्तकस्य विधिः सिद्धान्ततः । अन्यथाऽभ्युदये वाक्यभेद सांहृया देवतान्तरमात्रविधिर्यस्योभयमित्यत्राप्यार्तिदोहप्रतिनिधिविधिरिति पूर्वपक्ष एव पराघर्षेति । तदेतदनतिक्षुण्णमीमांसान्यायानां विभीषिकामात्रमेव ।

तथा हि । वाक्यभेदादपि बलवदानर्थक्यमप्रामाण्यापत्तेः । अत एव श्रुत्यादीनामप्यानर्थक्यप्रतिहतानां विपरीतं बलाबलमित्युक्तम् । तदिह विध्यन्तरैकवाक्यत्वाभावात्सह श्रपयतीति सह पाकविधिरभ्युदयवाक्यस्य कर्मान्तरविधित्वे दधंश्चरुं शृते चरुमित्यत एव सह पाकप्राप्तेरनर्थकः स्यात् । न च " प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः" इति प्रधानविधौ घृते श्रपयतीति गुणविधिप्राप्तघृतानुवादवत्कर्मान्तरत्वे ऽप्यभ्युदयवाक्ये सहश्रपणविधिसिद्धचरुत्वानुवादः स्यादिति वाच्यम् । उभयप्राप्तावनुभयप्राप्तौ वा सम्बन्धविधिरिति हि आग्नेय्यधिकरणे ( अ० ३ पा० ३ अ० १० ) उक्तं चर्वनुवादे च तद्देवतासम्बन्धविधानायोगविध्यासिद्धिः । अतः सहपाकविध्यानर्थक्यपरिहाराय तद्बलेनैव तात्पर्यग्राहकाद्विर्वपेदित्यस्यानुषङ्गेण त्वाविद्धक्षाद्विद्दधिशृतरूपद्रव्यचतुष्टये ऽपि देवतान्वयविधानार्थत्वात्प्रतिद्रव्य वाक्यभेदमेवाभ्युपेत्य न प्रकृतकर्महानमप्रकृतकर्मान्तरविधानं च युक्तम् । तदुक्तम् ।

गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम् ।
वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेदिति ॥

वाक्यभेदाभ्युपगमस्य ह्येतद्वार्त्तिककारस्येदंविधमेवोदाहरणं नान्यत् । गौणत्वोदाहरणं तु "यथा वै श्येनो निपत्यादत्त" इति । लक्षणोदाहरणं तु मत्वर्थलक्षणैव । आर्तिवाक्ये तु सह पाकविधि-

यदानर्थक्येन तात्पर्यग्राहकस्याभावाद्वाक्यभेदपरिजिहीर्षया क्रमान्तरविधिरेव न्याय्य इति वैषम्यम् । इत्यभ्युदितेष्ट्यधिकरणसमर्थनम् । यद्यु एव यद्युद्गाता जघन्यः स्यात्पुनर्यज्ञे सर्ववेदसन्दद्यायथेतरस्मिन्नित्यधिकरणं (पा० ५ अ० २०) उक्तं पौर्वापर्यं पूर्वदौर्बल्ये स्थिते चिन्त्यते यदि प्रतिहर्त्रपच्छेदे जाते पश्चादुद्गाता ऽऽपच्छिद्यते तदा पुनर्यज्ञे सर्ववेदसं देयमुत्त द्वादशशतमिति । तदर्थं यद्युद्गाताऽपच्छिद्येताऽदक्षिणो यज्ञः परिसमाप्यते इत्यदक्षिणता विधीयते ऽनूद्यते वेति । तत्र यः पूर्वस्मिन्दास्यामीति क्रतुस्वामान्याद्द्वादशशतं वा देयं प्रतीयते । न च तस्य प्रतिहर्त्रपच्छेदानिमित्तकसर्ववेदसेन बाधात्सर्ववेदसमेव दास्यामासीदित्युद्गात्रपच्छेदे तदेव पुनः प्रयोगे देयमिति वाच्यम् । तस्याप्युद्गात्रपच्छेदे विहितेनादाक्षिण्येन बाधादिति प्राप्तम् ।

सिद्धान्तस्तु नात्रादाक्षिण्यं विधीयते वाक्यभेदात् । किंतु पूर्वस्मिन्प्रयोगे दातव्या सती दक्षिणा तत उत्कृष्योत्तरप्रयोगे निक्षिप्यते तेनादक्षिणो यज्ञ इत्यनुवादः । पूर्वप्रयोगे चोद्गात्रपच्छेदे सति द्वादशशतं बाधित्वा सर्ववेदसमेव दातव्यमासीत् अतस्तदेव पुनःप्रयोगे देयमिति । तत्रेदं न चिन्तितं । यदि प्रतिहर्ता जघन्यः स्यात्किं भवतीति । तेनेदमवश्यं विचार्यं प्रतिहर्त्रपच्छेदवति प्रयोगे विहिते न सर्ववेदसेन पूर्वजातोद्गात्रपच्छेदे निमित्ते प्राप्त नैमित्तिकं बाध्यमिति पौर्वापर्यन्यायेन स्थिते किं पुनः प्रयोगो ऽपि बाध्यते । उतोत्कर्षविध्यर्थसिद्धमदाक्षिण्यमात्रमिति । तत्र विरोधनिमित्तको बाधः न च पुनः प्रयोगांशेन सह विरोधो ऽस्ति सर्वस्वदानस्य किं तु दक्षिणोत्कर्षेणैव पूर्वप्रयोगादाक्षिण्यद्वारेति तावदेव बाध्यते ।

उच्यते । यथा षष्ठस्य साऽभ्युत्थाने विश्वजिति क्रीते विभागसंयोगादित्यधिकरणे ( पा० ९ अ० ७ ) यदि सत्राय दीक्षितानां साम्युत्तिष्ठासेत्सोममपभज्य विश्वजिता यजेतेत्युदाहृत्य किमयं विश्वजिक्रीतराजकस्यैवोत्थाने उताक्रीतराजकस्यापीति संशय्य तदर्थं च सोममपभज्येति विधिरनुवादो वेति संशय्य विधिस्ततश्च तद्विशिष्टं नैमित्तिकं क्रीतराजक एव शक्नोति कर्तुं नाक्रीतराजक इति तस्य न विश्वजिदिति प्राप्ते सोममपभज्येत्यनुवादो ऽर्थसिद्धत्वात्सत्रार्थं ह्येकीकृतधनानां सम्प्रत्यागे दक्षिणाद्रव्यस्येव सोमस्यापि विभज्य ग्रहणं प्राप्तमेव । न । विधिस्ततश्च विश्वजिन्मात्रं नैमित्तिकम् । तच्च

वाक्यमेवाक्रीतराजकेन कर्तुमिति तत्राप्यधिकार इति सिद्धान्तितम्।

तत्रानुवादेन सिद्धान्तकरणं व्यर्थमेव स्यादित्येवं ज्ञायते यत्र विशिष्टं नैमित्तिकं तत्र विशेषणबाधे विशिष्टमेव बाध्यमिति। अतः प्रकृतेऽपि सर्वस्वदानेन पुनः प्रयोगविशेषणे पूर्वप्रयोगदेयदक्षिणादाने बाधिते पूर्वमुत्पन्नं नैमित्तिकं ज्ञानं विशिष्टपुनः प्रयोगविषयं कृत्स्नमेव बाध्यते इत्येव न्याय्यम्।

तेनायमत्र वाक्यार्थः। प्रस्तोतृप्रतिहर्त्रपच्छेदे दानविकारमात्रम् उद्गात्रपच्छेदे तु पुनः प्रयोगोऽपीति। तनश्च नेतरयोः पुनः प्रयोग इति गम्यते। अन्यथा यौगपद्येऽपि तत्र विप्रतिषेधाद्विकल्प इत्यधिकरणोक्तो विकल्पोऽप्युच्छिद्येत पूर्वपक्षस्य तु समुच्चयः स्थिरः स्यात्। तत्रापि हि विशेषणेनैव सह सर्ववेदसस्य विरोधाद्विकल्पः स्यात्पुनः प्रयोगश्च स्यादेव।

अथ तत्र का दक्षिणेति चेत्। तत्र पौर्वापर्ये पुनः प्रयोगे का दक्षिणेति प्रतिबन्दीमुद्धर अथ सुहृद्भूत्वा पृच्छसि। ततः शृणु। द्वादशशतमुभयत्रेति। पौर्वापर्येण युगपद्वाऽपच्छेदे हि पूर्वप्रयोगे द्वादशशतं दास्यत्वासीदिति तदुत्कर्षविशिष्टः पुनः प्रयोगः स्यादेव। पूर्वप्रयोगे चोभयत्र सर्ववेदस दीयते इति यौगपद्येऽपि समुच्चय एव स्यान्न विकल्प इति तदधिकरणोच्छेदापत्तिः। तस्माद्विशेषणाभावार्थं सर्ववेदसेन यदनुपेक्षणीयं पदेषूपदश्यते।

इति प्रतिहर्तृजघन्यत्वे पुनः प्रयोगबाधनिरूपणम्।

अथेह कथं यत्राद्ये प्रयोगे केवलमुद्गाताऽपच्छिन्नस्तत्रिमित्ते तु द्वितीयप्रयोगे केवलं प्रतिहर्ताऽपच्छिन्नः। अत्राद्यप्रयोगगता द्वादशशतदक्षिणोद्गात्रपच्छेदाद् द्वितीयप्रयोगे प्राप्ता यत्पूर्वस्मिन्दास्यत्स्यादिति सा द्वितीयप्रयोगगतप्रतिहर्त्रपच्छेदनिमित्तेन सर्ववेदसेन बाध्यते।

ननु द्वितीयः प्रायश्चित्तरूपत्वेनाद्यप्रयोगाङ्गम्। यद्युद्गाता जघन्यः स्यादित्यत्र चेदमुक्तं पूर्वप्रयोगाङ्गभूतैव दक्षिणोत्तरप्रयोगे उत्कृष्य तेन स्वाद्यप्रयोगे अदाक्षिण्यं विधीयते इति। ततश्च द्वादशशतदक्षिणाद्यप्रयोगाङ्गत्वात्रैमित्तिकतदीयाङ्गद्वितीयप्रयोगाङ्गभूतं प्रतिहर्त्रपच्छेदनिमित्तं सर्ववेदसमेव बाधेत अङ्गगुणविरोधन्यायादिति चेन्न। न। एवमुत्कर्षविधेरदृष्टार्थत्वं प्रसज्येत। न ह्युत्तरप्रयोगगतया दाक्षिण्यापूर्वप्रयोगोपयिकी आनतिः क्रियते।

किं च पूर्वप्रयोगाङ्गत्वेनप्राप्तगता दक्षिणा तत आच्छिद्योत्तरप्रयोगाङ्गत्वेनेह विधीयते अदाक्षिण्यानुवाक्यशेषाच्च गिरागिरेति वाक्यशेषेणैव गिरापदस्थानापत्तिरिरापदस्य । नन्वाच्छिद्य विधाने चतुर्थे गिरस्तं यज्ञातिथ्यायां बर्हिरित्यादौ । न । तत्र ह्यातिथ्याप्रकरणे प्रस्तुतं बर्हिर्विहितं तन्मकरणपाठे वैयर्थ्यापत्तेरातिथ्याङ्गमेवावश्यम् । ततश्च तस्य निर्विषयतापत्तेः सार्वादिकमाच्छिन्न विधानं न युक्तमित्युक्तम् । इह त्वाच्छिद्य विधानं चरतएव नैमित्तिकत्वात् । निमित्ताभावे च तस्या दक्षिणायाः पूर्वप्रयोगाङ्गत्वोपपत्तेरिति । किं च द्वितीयप्रयोगाङ्गकर्त्रानतिसिद्ध्यर्थैव दक्षिणा तत्प्रयोगाङ्गभूतैवेत्युचितम् ।

नाद्यप्रयोगाङ्गभूतेति आद्यप्रयोगाङ्गकर्त्राऽऽनतिसिद्ध्यर्थत्वाभावात् । अन्यप्रयोगस्य हि ऋत्विजः संस्करोतीति अन्यप्रयोगस्य चाङ्गमित्यपूर्वा युक्तिः । ततश्च तद्दक्षिणादीपं प्रायश्चित्तमपि द्वितीयप्रयोगाङ्गमेव नाद्यप्रयोगाङ्गमिति । तस्मादाद्यप्रयोगगतोद्गात्रपच्छेदनिमित्तके द्वितीयप्रयोगे उत्कृष्टाद्दादशशतदक्षिणा द्वितीयप्रयोगाङ्गतमातिहर्त्रपच्छेदनिमित्तकसर्वस्वदक्षिणावद् द्वितीयप्रयोगाङ्गमेव नाद्यप्रयोगाङ्गमित्यङ्गगुणविरोधन्यायाविषयस्यात्र पूर्वयोत्तरा बाध्यते किं त्वनयोर्द्विनैव पौर्वापर्यन्यायेन पूर्वपरतया बाध्यतरति सुस्पष्टम् । इत्याद्ये प्रयोगे केवलोद्गात्रपच्छेदे द्वितीयप्रयोगे च केवलप्रतिहर्त्रपच्छेदे पौर्वापर्यन्यायप्रसक्तिनिरूपणम् ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमी-
मांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्म-
भट्टशङ्करकृते मीमांसाबालप्रकाशे
षष्ठाध्यायार्थसङ्ग्रहः ।

---

सप्तमाद्ये अतिदेशलक्षणं आप्यते । श्लोकमप्युदाहरन्ति ।
प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु ।
धर्मप्रदेशो येन स्यात्सोऽतिदेश इति स्थितिरिति ॥
स पुनर्विभक्तविभागेन सप्तविधः ।

प्रथमं तावन्नामातिदेशो वचनातिदेशश्चेति द्वेधा । तदुक्तं भाष्ये ।

स च नाम्ना वचनेन च । तत्र नाम त्रिविधमतिदेशकं कर्मनाम संस्कारनाम यौगिकं चेति । वचनम् पुनर्द्विविधम् । प्रत्यक्षश्रुतमानुमानिकं चेति । आनुमानिकमपि त्रिविधं चोदनासामान्यातिदेशः आश्रयातिदेशः स्थानापत्त्यातिदेश इति ।

तत्र यद्यप्यन्त्यौ द्वौ भेदौ सप्तमे ऽध्याये नोक्तौ तथापि तयोराद्य इन्द्रियकामाधिकरणे ( अ० २ । पा० । अ० ११ ) निरूपितः । युद्धौ विपरिवर्तमान आश्रय एव हि तत्र स्वेतिकर्तव्यताया आश्रयवद्विति कल्पनया प्रापको भवति न चोदनासामान्यम् । स्थानापत्त्यतिदेशो ऽपि फलचमसाधिकरणे निरूपितः । न च सोमं भक्षयतीति चोदनासामान्यमिह भक्षश्रुतेरिति वाच्यम् । इन्द्रियकामवाक्ये जुहोतेरिव नारिष्टादिसाधारण्येन भक्षस्यापि इडादिभक्षसाधारण्येन चोदनालिङ्गत्वायोगात् । अतःप्रकृतभक्षयोगात्सोमकार्यस्य च हवेः कयाभिचयादिधर्मैर्विनानुपपत्तेराकाङ्क्षया सोमवदितिकल्पनाजायं चोदनासामान्ये ऽन्तर्गत इति सर्वाविधत्वं सिद्धम् । अतश्च श्लोके तत्समानेष्वित्यविवक्षितं चोदनासामान्यनिमित्तातिदेशव्यतिरिक्ते भेदषट्के अव्याप्तेः । तथा कर्मस्वित्यप्यविवक्षितम् । फलचमसविषये स्थानापत्त्यतिदेशभेदे अव्याप्तेः ।

यद्वा फलचमसवद्धृद्युन्मार्जनस्यापि विधेयत्वेन वाक्यभेदप्रसङ्गात्तदुभयविशिष्टमवेष्टियजमानचमसाऽभ्यासप्रयोगान्तरमेव विधीयतइति कर्मग्रहणे विवक्षिते ऽपि नाव्याप्तिः । तथापि खलेवाली यूपो भवतीति खलेवालीद्रव्यविषययूपशब्दरूपसंस्कारनामातिदेशे कर्मग्रहणविवक्षायामव्याप्तिः स्यादेवेति तदविवक्षितमेवेति । अत्र मिश्राः । षड्विध एवातिदेशः । यौगिकशब्देन हि केवलयौगिकं योक्तं योगरूढं वा । तत्राद्यं विश्वजिति सर्वपृष्ठादि तत्रैव नाम गुणविधिस्थात् । उत्तरं त्वग्निहोत्रोद्भिदादिकर्मनामशब्देनैवोक्तम् । प्रायणीये तु प्रथममयन्त्यनेनेति येनैव योगेन द्वादशाहे प्रवृत्तिस्तेनैव गवामयने ऽपीति श्रुतिवृत्तेने धर्मलक्षकमित्यनतिदेशकमेव ।

भाष्ये त्वतिदेशकानतिदेशकनामसु भूम्नातिदेशक शब्द इति ।

वयं तु कर्मनामेति प्रागुक्तयोगरूढाभिन्नं श्येनादि । न हि तथापि रूढिरस्ति गुणविशेषस्यैव निमित्तत्वात् सिंहो माणवक इति व-

त् । न च योगः । यौगिकमिति च योगरूढमिति भाष्यार्थे न कोऽपि दोषः । टुप्टीका तु यौगिकं नातिदेशकमिति प्रायणीयादिकेवलयौगिकपरं भाष्यस्थं यौगिकपदं न भवति किं तु योगरूढपरमित्येवमाशया । इत्यतिदेशलक्षणतद्भेदनिरूपणम् ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमी-
मांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्म-
जभट्टशङ्करकृते मीमांसाबालप्रकाशे
सप्तमाध्यायार्थसङ्ग्रहः ।

---

अष्टमेऽध्याये यस्य लिङ्गमर्थसंयोगादित्येतत्सूत्रार्थप्रपञ्चार्थेष्वधिकरणेषु नानाविधानि प्रकृतिलिङ्गान्युक्तानि । तेषु तद्धितेन देवतानिर्देश एकाद्विदेवतत्वमौषधद्रव्यकत्वम् आज्यद्रव्यकत्वं पयोद्रव्यकत्वं दधिद्रव्यकत्वम् उज्यलधिपद्द्रव्यकत्वं द्रप्समानवर्णद्रव्यकत्वं पशुप्रभवगतिमद्द्रव्यकत्वं निर्वपतिपरत्वं आलभतिपरत्वं पशुषु पाणिद्रव्यकत्वं क्षुत्याकारत्वं पशुगणत्वम् इत्यादीनि सोमेऽव्यक्तचोदितत्वम् अहर्गणत्वमहीनत्वं सत्रत्वं संवत्सरसत्रत्वं निकायित्वमित्यादीनि । तत्र यस्य लिङ्गमर्थसंयोगादिति सामान्यसूत्रेणैव विशेषविवरणार्थैः सूत्रान्तरैर्नियतान्यपि कानि चिदन्यान्यपि चोदनालिङ्गानि सामान्यतः संगृहीतानीत्यन्यथानुपपत्त्याऽवश्यं कल्पनीयं यथा तेषामुक्तसार्थवशेन पादव्यवस्थेत्यर्थवशेनेति पादव्यवस्था दृश्यन्तरस्यापि शृङ्गादिवशस्योपलक्षणार्थमित्युक्तम् । कानि तान्यन्यानि चोदनालिङ्गानीति चेत् ।

उच्यते । एवं तावच्चोदनालिङ्गं द्रव्यदेवतासम्बन्धप्रतिपादकतद्धितान्तपदाक्षरसाम्यम् । "यथाऽऽग्नेयमेकादशकपालं निर्वपेत्सरस्वतीमाज्यस्य यजेत बार्हस्पत्यं चरुम्" इति । अत्रैकादशकपालत्वमैन्द्राग्नमेकादशकपाले निर्वपेदिति प्राकृते ऐन्द्राग्ने ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छदिति विहिते । प्राकृते ऽग्नीषोमीये यागविशिष्टमेव द्विदेवतत्वं निर्वपतिपरत्वं च । यद्यपि द्वितीये प्राकृताग्नीषोमीयप्रधानचोदनायां नास्ति तथाऽप्यग्निवि-

धिना निर्वापवत्त्वमस्त्येव । अतस्तत्र द्रव्यदेवतासम्बन्धप्रतिपादकतद्धितान्तपदे ऽग्निमुखत्वसाम्यमेव चोदनालिङ्गं प्राकृताग्नीषोमीयविध्यन्तातिदेशनियामकम् । तदेतच्चोदनालिङ्गं मीमांसकानामप्यभिप्रेतं लक्ष्यते । अन्यथाष्टमस्य तृतीयपादाद्य हविर्गणे परमुत्तरस्येत्यधिकरणे आग्नावैष्णवे ऽग्नीषोमीयस्य विध्यन्त इति साध्ये देवतासामान्यादिति हेतुरसङ्गतः स्यात् । द्विदेवत्यत्वस्यैन्द्राग्ने ऽपि तुल्यत्वात्, एवमग्निसमवायमात्रस्यापि । तद्धितमात्रं त्वाग्नेये ऽपि तुल्यं तदयद्वयं पञ्चाक्षरतद्धितान्तपदत्वरूपमग्निमुखतद्धितान्तपदत्वं वा ऽवश्यं किं चिच्चोदनालिङ्गान्तरमिह सिद्धान्तहेतुतया विवक्षितं गम्यते एवमारम्भणीयाया "आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमान" इति । "आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण" इति च "द्यावापृथिव्यमेककपालमि"त्यत्र तु पञ्चाक्षरतद्धितादेव चोदनालिङ्गादग्नीषोमीयविकृतित्वम् । आश्विनाद्विकपाले तु द्विदेवतात्वे सति त्र्यक्षरतद्धितत्वादैन्द्राग्नविकृतित्वम् । एवं "मारुतं सप्तकपालं मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुमि"त्यत्रापि सान्तपने रूपविशेषणाधिक्ये ऽपि प्रधानभूतदेवताविधिस्त्र्यक्षर एवेति त्र्यक्षरदेवताविधिसादृश्यादनेकदेवतत्वाच्चैन्द्राग्नविकृतित्वमेव । "सौमेन्द्रं चरुं निर्वपेच्छ्यामाकं सोमवामिन" इत्यत्र तु त्र्यक्षरत्वे सत्यपि अर्थवादिशब्दगतसंख्यायाः प्रथमोपस्थिताया अपि बहिरङ्गत्वादन्तरङ्गसोमरूपार्थसमवायेनेन्द्रसमवायसाम्ये ऽपि स सोमप्राथम्यात्तदुपस्थितो ऽग्नीषोमीयविध्यन्त एव । एवमिन्द्रासोमीये इन्द्रमुख्यत्वादैन्द्राग्नविकृतित्वम् । सोमापौष्णसोमारौद्रादौ तु सोमसमवायमात्रेणाग्नीषोमीयविकृतित्वं शुनासीरीये ऐन्द्रावैष्णवमित्यत्र सत्यप्यग्नीषोमीयचोदनालिङ्गे पञ्चाक्षरत्वे ऽक्षरसंख्याया बहिरङ्गत्वादन्तरङ्गेन्द्रसमवायेनैन्द्राग्नविकृतित्वम् । एवमैन्द्रापौष्णैन्द्राबार्हस्पत्यादौ । एवमैन्द्रः पुरोडाशः सौम्यश्चरुरित्यत्रेन्द्रसमवायेनैन्द्राग्नविकृतिः पूर्वः । उत्तरस्तु सोमसमवायेनाग्नीषोमीयविकृतिः । "वैश्वदेवं चरुं निर्वपेद् भ्रातृव्यवानित्यादौ चतुरक्षरे किं चित् त्र्यक्षरपञ्चाक्षरत्वादिनियामकमस्तीत्यनियम एवैन्द्राग्नाग्नीषोमीयविकृतित्वे । तादिदमुक्तमापस्तम्बसूत्रे ।

एकदेवता आग्नेयविकारा द्विदेवता अग्नीषोमीयविकारा बहुदेवताश्चैन्द्राग्नविकारा चेति । अथैन्द्राग्नविकारा वेति द्विदेवतेष्वपि सम्बन्धनीयम् । तेनोभयत्र विकल्पः । स च व्यवस्थितो ऽग्न-

उक्तोदाहरणेषु पूर्वोक्तरीत्या क्व चित्त्वान्ययास्थितविकल्पो ऽपीति । कपर्दी तु यासां विकृतीनां द्विबहुदेवतापदेषु चत्वार्यक्षराण्यधिकानि वा ता अग्नीषोमीयविकारा यासां तु त्रीण्यूनानि वा ता ऐन्द्राग्नविकारा अन्यत्र प्रकृतिर्देवताश्च इत्याह तत्र द्व्यक्षरेण सामीप्यात् अक्षरोपस्थितावपि षडक्षरादिभिश्च सामीप्यात्पञ्चाक्षरोपस्थितावपि चतुरक्षरे उभयसाम्यात्कथं पञ्चाक्षरस्यैवोपस्थितिरिति चिन्त्यम् । यस्य तु कर्मणः क्व चिदुत्पत्तिचोदनायां केन चित्प्रकृतिलिङ्गेन किं चिद्विकृतित्वमवधारितं तस्य कर्मणो ऽन्यत्रातिदिष्टस्योहेनान्यदेवतात्वे ऽपि न तद्धेतुकं कर्मान्तरविकृतित्वं भवति पूर्वावधारितकर्मविकृतित्वं वा भवेति । अवधारिताङ्गविशिष्टस्यैवातिदेशात् । यथा ऽग्नीषोमीयपशुपुरोडाशस्या ऽग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपतीत्यग्नीषोमीयपशुप्रकरणे उत्पन्नस्याग्नीषोमीयमिति प्रकृतिलिङ्गसंयोगेन दार्शपौर्णमासिका ऽऽग्नीषोमीयपुरोडाशविकृतित्वेनानवधारितस्याग्नेये सवनीये ऐन्द्राग्ने च निरूढपशावतिदिष्टस्योहेनाग्नेयत्वे ऐन्द्राग्नत्वे च सत्यपि तत्र प्रत्यक्षचोदनाभावेन चोदनालिङ्गासम्भवात्प्राकृतस्यैव पशुपुरोडाशयागस्य प्रकृतावग्नीषोमीयमिति चोदनालिङ्गेनावधारितं दार्शपौर्णमासिकाग्नीषोमीयपुरोडाशविकृतित्वं न बाध्यत इति तदीयमेवानुमन्त्रणादि भवतीति पूर्वस्याभ्यादेः सवनीये आग्नेयस्य पशुपुरोडाशस्याग्नेयविकृतित्वं निरूढे चैन्द्राग्नस्य पशुपुरोडाशस्यैन्द्राग्नविकृतित्वमित्यभिधानमुपेक्ष्यमेव ।

यत्तु तद्धर्मकमापस्तम्बसूत्रं तद्ध्यूहे वा समभिव्याहारादिबलवच्छ्रुतितदनुसारिन्यायविरोधाद् बोध्यम् । अत एव कातीया नैतदनुमन्यन्त इति ।

इत्याष्टमिकप्रकृतिलिङ्गभेदप्रपञ्चनिरूपणम् ।

पार्वणहोमयोस्तत्प्रवृत्तिरिति विशेषातिदेशापवादः फलनियमफलसमुदायवदष्टम एव वक्तव्यो ऽपि कथं चित्प्रसङ्गात्प्रथमे उक्तः प्रमेयं त्वाष्टमिकमितीहैव तत्र किं चिच्चिन्त्यते ।

इद्येण पार्वणौ जुहोतीति संख्यया कर्मभेदाद्वौ पर्वदेवत्यौ होमौ विधीयेते तत्र पर्वशब्दः पुनातेर्दानकर्मणो निष्पन्नः कर्मवचनत्वेन कर्मैव देवता सा च स्मरणीयत्वेन संस्कार्या तत्र यद्येकैको होमः पर्वकर्मदेवत्यः स्यात्ततो ऽविद्यमानकर्मादौ ग्रहणार्थता ऽऽपद्येत तत्परिहाराय एकः पौर्णमासीदेवत्यो ऽपरो ऽमावास्यादेवत्य इति कल्प्यते । तेन प्रकरणाविरोधे ऽपि सूक्तवाकन्यायेन संस्कार्यत्व-

शब्दव्यवस्था । सौर्यादौ च संस्कार्यस्य समुदायस्याभावादनतिदेश इत्यधिकरणार्थः ।

तत्र कालाभिज्येति पूर्वपक्षे निरस्ते ऽपि पूर्वपक्षान्तरं प्रतिभाति पौर्णमास्यमावास्याशब्दयोः पौर्णमास्यधिकरणे समुदायनामत्वनिरासेन यागनामत्वमुक्तम् । तद्वत्पर्वशब्दो ऽपि न समुदायवाची किं तु यागवाची पृणातेर्दानार्थात्सिद्धत्वात् । पर्वेत्येकशब्दोपादानात् (१) त्वाग्नेयादियागत्रयसंस्कारे ऽपि प्रत्येकधर्मत्वात्प्रत्येकविकृतौ सौर्यादावतिदेशः स्यादेवेति ।

अत्रोच्यते । विधिमात्रप्रमाणिका देवतेत्युक्तमिन्द्रमहेन्द्राधिकरणे विधिशब्दस्य मन्त्रत्वे भावः स्यादिति दशमे च अतः पार्वणाविति तद्धितो देवताविधिस्तावदवश्यं वाच्यः तस्यैव तु संस्कार्यसमर्पकत्वे वैरूप्यलक्षणवाक्यभेदापत्तेः स देवताविधिरेव । पर्वदेवत्यस्य च होमस्य पर्वस्मारणसामर्थ्याल्लिङ्गाद्वाक्याच्च पर्व प्रति तादर्थ्ये पदान्तरकल्पनया भवति सामर्थ्यवाक्ययोः श्रुतिकल्पकत्वात् । वाक्यानां च कर्मणां विधेयविशेषणविवक्षया परस्परसहितानां देवतात्वमवगतं तादृशानामेव भाव्यत्वं भवति न प्रत्येकमिति प्रत्येकविकृतावनतिदेशः ।

नन्वेकस्यैव पुंस उपादेयतादशायां विवक्षितमेकत्वं स्वर्गकाम इति पदान्तरेणोद्देश्यदशायां त्वविवक्षितं तद्वत्पर्वणामप्युपादेयतादशायां विवक्षितं साहित्यं पदान्तरेणोद्देश्यदशायां त्वविवक्षितं स्यादिति चेत् । [redacted] । कल्पितवाक्ये उद्देश्यसाहित्यविवक्षायामपि वाक्यभेदाभावाद्वैरूप्यं तदुक्तं चित्राधिकरणे ।

श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने ।
लक्षणावाक्यभेदादिदोषो नानुमिते त्वसाविति ॥

न हि विवक्षितसाहित्यदेवताको होमो ऽदृष्टार्थतया शक्य एकैकेन पर्वणा स्वार्थत्वेन ग्रहीतुमिति विधेयसामर्थ्यादुद्देश्यसाहित्यविवक्षा लभ्यते । " यथोभावग्नी अनुगतावभिनिम्लोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्ति"रित्यत्र षष्ठे विधेयसामर्थ्यान्निमित्तविशेषणाग्निसाहित्यविवक्षा लभ्यते इति । तौ चेमौ पार्वणहोमौ विकृतौ नातिदिश्येते इति सामान्यतो यद्यप्युक्तं तथाप्येकस्मिन्द्वयोर्वा नातिदिश्येते बहुषु त्वतिदिश्येते एव । यथा वैश्वदेवादिपर्वणि तौ हि प्राकृताग्नेयादेस्तत्समप्रधानयागान्तरस

(१) त्वाग्नेयादियागानां साहित्यं प्रतीयतेऽपि तु तेषां संस्कार्यत्वेनोद्देश्यविशेषणत्वादविवक्षितम् । अत. प्रकृतौ तन्त्रानुष्ठानेनैव्यर्थं २ पृ० ।

हितस्य संस्कारकावेति वैश्वदेवाद्यन्तर्गतैकैकयागस्य तत्समप्रधानेन तदेकप्रकृतिकेन तदन्यप्रकृतिकेन वा यागान्तरेण सहितस्य संस्कारार्थमतिदेश्यत्वाच्च । वैकृतप्रधानयागानां प्राकृतप्रधानयागस्थानापन्नत्वात् । यथा ऽऽग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपतीत्यत्राप्यग्नीषोमीयमिति तद्धितो देवताविधिरेव नोद्देश्यपरो वैरूप्यात् । द्वन्द्वोपात्तं च देवतासाहित्यं विधेयविशेषणत्वाद्विवक्षितम् । विवक्षितसाहित्यदेवताकश्च पुरोडाशयागः सामर्थ्यवशात्पाश्वां पशुदेवतासंस्कारार्थः । तदुक्तं कर्माधिकरणे । तद्यथा ऽऽग्नीषोमीयस्य वपया प्रचर्या ऽऽग्नीषोमीयं पशुपुरोडाशमनुनिर्वपतीत्यत्र सत्यपि तद्धितेन देवतोपसर्जनत्वोपादाने यागस्य प्रयाजनाकाङ्क्षायां सत्यामग्नीषोमयोरेव सन्निहितयोः संस्कार्यत्वं विधायतइति न पशोरारादुपकारकत्वेन कल्प्यते न हि पूर्वं गुणत्वमुक्तेन प्राधान्येन विरुध्यतइति स चायं पुरोडाशयागः परस्परसहितानीषोमदेवतासंस्कारकः प्रकृतौ विकृतौ तु तत्स्थानापन्नायामेकस्यां देवतायां द्वयोश्चातिदिश्यते ।

यथा ऽऽग्नेये सवनीये ऐन्द्राग्ने च निरूढे । पार्वणी त्वेकस्मिन्कर्मणि द्वयोश्च नातिदिश्येते एकस्य वैरुस्य कर्मणोः द्वयोश्च वैकृतयोः कर्मणोः प्राकृतबहुकर्मस्थानापत्त्यभावादिति विशेषः ।

एवं च सति यत्र पार्वणपशुपुरोडाशन्यायो नास्ति तत्रानेकेषामेकशब्दोपात्तत्वे ऽप्युद्दिश्यमानसाहित्यस्याविवक्षितत्वात्प्रकृतौ प्रत्येकमङ्गत्वात्प्रत्येकविकृतावतिदेशो भवत्येव । यथा "संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपती"ति । अत्र हि पौर्णमास्यधिकरणे पौर्णमासीशब्दसमुदायवाचित्वनिरासेन समुदायिवाचिनोऽकेरुद्देश्यत्वेन च परस्परसाहित्यस्याविवक्षितत्वेन पार्वणवैरस्यापत्येकमङ्गत्वेन प्रकृतौ तन्त्रन्यायेन सकृदनुष्ठाने ऽपि उपांशुयाजाग्नीषोमीयप्रत्येकविकृतौ वैमृधातिदेशो भवत्येव प्रयाजादिवदिति । ननु पौर्णमासीमिति नोद्देश्यसमर्पकम् अत एव तदधिकरणे वाक्यीयो विनियोग इत्युक्तं न तु स्थान इति । तेन पार्वणावेति यथा विधेयत्वेन विवक्षित( साहित्यानामेव पर्वणां वाक्यीयभाक्त्वदत्राप्यपि विवक्षितसाहित्यतैव भवति । एवं विधेयपौर्णमास्युत्तरकालविशेषणपौर्णमासाख्ययागत्रयसाहित्यस्य विधेयविशेषणविशेषणस्य विवक्षितत्वे तादृशस्यैव यागत्रयस्य वाक्यीयभाक्त्वात्प्रत्येकविकृतावनतिदेशः स्यात् । न । वैरूप्यात् । पार्वणावित्यत्र हि विवक्षि-

तसाहित्यदेवताकस्य होमस्य न प्रत्येकं दृष्टार्थतया ऽङ्गत्वं भवति इति विधेयसामर्थ्यादुद्देश्यसाहित्यविवक्षा लभ्यतइत्युक्तं न (वाक्यीयविनियोगमात्रात् १) वैमृधस्य तु विवक्षितसाहित्यपौर्णमासान्वययागप्रयोगोत्तरानुष्ठितस्यापि प्रत्येकमदृष्टार्थतया ऽङ्गत्वं सम्भवतीति न सामर्थ्येनोद्देश्यसाहित्यविवक्षा लभ्यतइति पूर्वं कालविशेषघटितादृशायां साहित्यविवक्षायामप्युत्तरकालमविवक्षितसाहित्यतायां न कोऽपि विरोध इति । ननु न त्वदुक्तसामर्थ्यं पार्वणहोमयोरुद्देश्यविवक्षालाभहेतुर्येन वैमृधे तदभावाद्वैषम्यं स्यात् किन्तूद्देश्यसमर्पकं पदं कल्प्यते पार्वणहोमयोरिति त्वयैवोक्तम् । तेनैव न्यायेन वैमृधेऽपि तत्कल्प्यते । न च कल्पितवाक्ये साहित्यविवक्षादावपि वाक्यभेदो भवति । तदुक्तं चित्राधिकरणे ।

श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने ।
लक्षणावाक्यभेदादिदोषं नानुमिते त्वसाविति २) ॥

(इय सौर्यं चरुं निर्वपेद् "ब्रह्मवर्चसकाम" इति । अत्र हि स्वर्गकामपदाध्याहारं विश्वजिन्न्यायेन चतुर्थे शङ्कितं निरसितुमुक्तं ब्रह्मवर्चसाख्यान्वाचयार्थे प्रमाणाभावाद् ब्रह्मवर्चसमात्रफलत्वेन न्यूनस्य स्वर्गकल्पनया ऽधिकार्थत्वे फलद्वयसमावेशाद्वाक्यभेदापत्तेरिति । ऊनस्याधिकार्थविपर्ययकल्पने गौणत्वदोष इत्यत्रोदाहरणम् । "वृष्टीरुपदधाति प्राणभृत उपदधाती"ति । अत्र हि वृष्टिशब्देन वृष्टिशब्दवन्त एव मन्त्रा उच्यन्तइति न्यूनस्य गौण्या वृत्त्या अवृष्टिशब्दवतामपि मन्त्राणां ग्रहणेनाधिकार्थत्वे गौणत्वमेव दोषः । स च गत्या मीढ्वियविकल्पवदङ्गीक्रियते । एवं प्राणभृदुदाहरणे द्रष्टव्यम् । न्यूनस्याधिकार्थविपर्ययत्वे ऽध्याहारदोष इत्यत्रोदाहरणम् । विश्वजिता यजेतेति । अयमप्यगत्याङ्गीक्रियते । तृतीयव्याख्याने न्यूनत्वे लक्षणावाक्यभेदौ आधिक्ये चानर्थक्यमित्यस्यार्थः । अधिकस्य सतो न्यूनत्वे न्यूनस्य सतश्चाधिक्य इति । तत्राधिकस्य सतो न्यूनत्वकल्पने लक्षणेत्यत्रोदाहरणम् । "चतुरवत्तं जुहोती"ति । अत्र हि जुहोतेर्देवतोद्देश्यत्यागविशिष्टद्रव्यप्रक्षेपवचनस्याग्नेयादिचोदनयैवेतरयोरंशयोः प्राप्तत्वात्प्रक्षेपमात्रपरत्वेन न्यूनत्वे लक्षणा । अधिकस्य सतो न्यूनत्वे वाक्यभेद इत्यत्रोदाहरणम् । "वषट्कर्तुः प्रथमभक्ष" इति । अत्र हि प्राथम्यमात्रविधौ भक्षानुवादात्प्राथम्यस्य च विधानादेकपदे चोभयासम्भवाद्वाक्य-

(१) अ० पा० २ पु० भा० ।
(२) अ० पा० २ पु० भा० ।

भेद इति । न्यूनस्य सतो ऽधिकत्वे आनर्थक्यमित्यत्रोदाहरणम् । आमनामस्यामनस्य देवा इति तिस्र आहुतीर्जुहोतीत्येव पूर्वोक्तम् । अत्र हि भावानुपादान्न्यूनस्य सतः सांग्रहण्या ग्रामकाम यो यजेतेति प्रधानव्या (१) । उच्यते

ततश्च पार्वणहोमयोर्वैमृधे चोभयत्र कल्पितवाक्ये वाक्यभेदाभावादुद्देश्यसाहित्यविवक्षया विकृतावनतिदेश इति । अत्र भ्रमः ।

सुक्तवाकविभागाधिकरणे ( अ० ३ पा० २ अ०. ६ ) आग्नेयाद्युत्पत्तिवाक्येष्वपि फलसामान्ये विधिबलेन कल्प्यत्वात्सर्गमात्फलवाक्यं तद्विशेषमाकाङ्क्षार्थं ततश्चोत्पत्तिवाक्येषु षण्णां कर्मणां षडाकाङ्क्षा उत्पद्यन्त इति षड् प्रकरणानीत्युक्तम् ।

अङ्गविधीनां चोत्पत्तिविधिभिरेव सह प्रकरणादेकवाक्यता कल्प्यत इत्युक्तं चित्राधिकरणे । उत्पत्तिवाक्यविहितं कर्म सर्वं ह्यनूद्यत इति । व्याख्यातं चैवं सोमेश्वरेण ।

ततश्च पार्वणयोः सामर्थ्यस्योद्देश्यसाहित्यविवक्षाहेतुत्वाभावे प्रत्येकप्रकरणात्प्रत्येकमेवोद्देश्यता ऽऽग्नेयादेः स्यादिति प्रत्येकविकृतावतिदेशापत्तिः । अन्यथा प्रयाजादेरपि विवक्षितसाहित्येष्वेव कल्पितवाक्ये वाक्यभेदाभावात्प्रकरणेन विनियोगात्प्रत्येकविकृतावनतिदेशः स्यात् । वैमृधे ऽपि च तद्वदेव प्रत्येकप्रकरणात्प्रत्येकमेव विनियोगः । अतः पूर्वोक्तसामर्थ्यादेव पार्वणयोरुद्देश्यसाहित्याविवक्षातः प्रत्येकविकृतावनतिदेशः । वैमृधे तद्विपर्यय इति सिद्धम् ।

तस्माद्वाक्षिकवपायां पार्वणान्यायतो कृतिः ।
विकृतौ वैमृधस्येति न्यायधीनार्पितं वचः ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्मजभट्टशङ्करकृते मीमांसाबालप्रकाशे पार्वणवैमृधवैषम्यनिरूपणं अष्टमाध्यायार्थसंग्रहश्च ।

---

(१) षष्ठ अ० ३ पु० मा० ।

ऊहो द्विविधः । वाचनिको न्यायगम्यश्च । आद्यो यथा-सकृदवहन्तीति । द्वितीयस्यतु लक्षणमाहुर्माधवाचार्या अधिकरणमालायाम् ।

प्राकृतस्थानपतितपदार्थान्तरकार्यतः ।
ऊहः प्रयोगे विकृत ऊह्यमानतयोदित इति ॥

अत्र कार्यत उपकारात् प्रयोजनत्वेन चास्य हेतुत्वं तेनोपकारार्थमित्यर्थः । अत्र च प्राकृतस्थानपतितेत्यनुक्तौ पदार्थान्तरं व्रीहितो यवास्तदुपकारार्थं विकृते पदार्थान्तरान्वयादेवान्यथाभूते प्रोक्षणावघातप्रयोगे ऽतिव्याप्तिः स्यादत उक्तम् । प्राकृतस्थानपतितेति न च व्रीहिस्थानापन्ना यवाः ।

प्रत्यक्षविधिना भावे विधानेन विकारतः ।
स्वशब्दाच्च निषेधानुवादात्तत्कार्यकारितेति ॥

सोमेश्वरसंगृहीतनयोक्तस्थानापत्तिप्रमाणपञ्चकाभावात् । अन्यथा वैपरीत्यस्यापि प्रसङ्गाच्च । पदार्थान्तरेत्यनुवादः तत्रैव हि विकृतत्वं सम्भवति नान्यत्रेति भवत्सत्पदकृत्यं न कार्यम्। कार्यत इत्यनुक्ते ऽसकृदवहन्तीति वाचनिके विकृतावघातस्य विकृतप्रयोगे ऽतिव्याप्तिः स्यादत उक्तं कार्यत इति । असौ च वाचनिको न कार्यतः आवृत्तस्यैवावघातस्य तुषविमोकलक्षणकार्यतः प्राप्तेरतो न तत्रातिव्याप्तिरिति । विकृत इत्यनुक्ते पदार्थान्तरेत्यस्यापि लक्षणा । ननु प्रयेशोकेवैकृते व्रीहे हविषि अवघातप्रयोगे अतिव्याप्तिः स्यादत उक्तं विकृत इति न चासाववघातो विकृतः पदार्थान्तरान्वयादिति नातिव्याप्तिरिति । चतुर्थपादेन च ऊहशब्दस्य यौगिकत्वं दर्शितं तेन कार्यकल्प्यत्वं लब्धम् । इतरांशस्तु रूढिलभ्य इति योगरूढो ऽयं पङ्कजादिशब्दवदूहशब्द इति भाव. ।

सोयमूहो विभक्तविभागेनैकादशविधः ।

तद्यथा प्रथम तावत्त्रिविधः । मन्त्रोहः सामोहः संस्कारोहश्चेति ।

अत्र गोबलीवर्दन्यायेन मन्त्रोहसामोहयोः पृथगुक्तिस्तत्साधकनावमिकन्यायभेदात् । नवमद्वितीयपादषोडशाधिकरणे हि सामोहन्यायउक्तः । तदुत्तरपादाद्ये च तदितरमन्त्रोहन्याय उक्तः इति मन्त्रोहो ऽपि नवधा क्व चित्प्रकृतिमात्रमूह्यते न लिङ्गं वचनं च सूर्याय जुष्टमिति १

क्व चिल्लिङ्गमात्रमूह्यते न प्रकृतिर्वचनं च यथा वस्व्यसि रुद्रासीत्येकहायन्या मन्त्र. सा॒ण्डे वसुरसि रुद्रो ऽसीति २

क्वचिद्वचनमात्रमूह्यते न प्रकृतिलिङ्गे च यथा "छागस्य वपाया मेदस" इति मन्त्रः प्राजापत्येषु छागानामिति ३

क्वचित्प्रकृतिलिङ्गे एवोह्येते न वचनं यथा ऽ"ग्नये जुष्टमि"त्येतदग्नायै जुष्टमिति ४

क्वचित्प्रकृतिवचने एवोह्येते न लिङ्गं यथाऽग्नये जुष्टमित्येतद्विश्वेभ्यो देवेभ्य इति वैश्वदेवे हविषि ५

क्वचिल्लिङ्गवचने एवोह्येते न प्रकृतिः यथा प्रास्मा अग्निं भरतेत्यत्रास्मै पदं पुंलिङ्गैकवचनं मल्हा आलभेतेत्यादिषु प्राभ्य इत्येवं स्त्रीलिङ्गबहुवचनरूपेण ६

क्वचित्त्रीण्यपि प्रकृतिलिङ्गवचनान्यूह्यन्ते । यथापो देवीः शुद्धाः स्थेति प्रोक्षण्यभिमन्त्रणार्थो मन्त्रस्तत्राप्शब्दः स्त्रीलिङ्गो बहुवचनान्तो घृतं प्रोक्षणमिति विहिते घृते प्रोक्षणे घृतदेवं शुद्धमसीति नपुंसकलिङ्गैकवचनान्तघृतपदोहे सर्वमेवान्यथा भवति ७

क्वचित्तु प्राकृतस्यैव सकलस्य पदस्याभ्यासात्मक ऊहः यथा पशुगणे एकधैकधेति ८

क्वचिदव्ययसम्बन्धकतद्धितान्तपदस्थाने ऽव्ययसम्बन्धकतद्धितान्तरपदरूपमूह्यते यथा वाजसनेयिनां कर्कमते "मित्रावरुणौ त्वोत्तरत" इत्युत्तरपरिधिपरिधानमन्त्रः । विकृत्यां मित्रावरुणौ त्वा पुरस्तात्परिधत्तामिति यथा चाहवनीयावेक्षणे सूर्यस्त्वा पुरस्तात्पात्विति प्राकृतो मन्त्रः विकृत्यां सूर्यस्त्वा दक्षिणतः पात्वित्यूह्यते । सम्प्रदायमतं त्वत्र मन्त्रद्वये ऽप्यूहो नास्तीत्युक्तम् । क्वचित्तद्धितान्तस्याप्यव्ययस्य स्थाने ऽतद्धितान्तमप्यव्ययमूह्यते । यथा । "अग्निं गृह्णामि सुरथं यो मयोभूर्य उद्यन्तमारोहति सूर्यमह्ने । आदित्यं ज्योतिषां ज्योतिरुत्तमं श्वो यज्ञाय रमतां देवताभ्य" इत्यग्न्याधानमन्त्रे याजमाने सद्यस्कालप्रकृतौ मन्त्रलोपे ऽपि सद्यस्कालविकृतौ अद्य यज्ञाय रमतामित्यूहः क्रियते । तत्र श्व इत्यव्ययस्थाने अद्येत्यव्ययमूह्यते । इत्यूहभेदनिरूपणम् ।

अथैकादशविधमूहप्रयोजनं निरूप्यते । तदुक्तम् ।

मुख्यदर्शार्थता स्वार्थसमवेतार्थतादिभिः ।
प्रयुक्ताः प्रकृतौ मन्त्रा गताः कार्यातिदेशतः ॥
विकारेष्वविशिष्टोहाः कार्यार्थेषु पञ्चधा ।
अर्थान्तरेष्वपूर्वार्थद्वारेणोहं व्रजन्ति नः ॥

इति । तत्रैवमेकादश प्रयोजनान्यत्रोक्तानि । मुख्यार्थत्वं १

दृष्टार्थत्व २ स्वार्थत्वं ३ समवेतार्थत्वं ४ शब्दस्वरूपाविवक्षा आदि॰ शब्दस्यार्थं ५ कार्यमुखो ऽतिदेश ६ विकृतिगतत्व ७ अनिषिद्धोह॰ त्व ८ कार्यापत्ति॰ ९ अर्थान्तरत्वम् १० अपूर्वार्थत्व धर्माणां चेति ११। तानि चैतान्येकादशापि प्रयोजकानि ऋग्यजुर्मन्त्रोहप्रवापेक्षितानि न साममन्त्रोहसंस्कारोहयो । तत्र त्वष्टावेव प्रयोजकानि। दृष्टा॰ र्थत्व १ शब्दस्वरूपाविवक्षा २ कार्यमुखो ऽतिदेश ३ विकृतिगत॰ त्व ४ कार्यापत्ति॰ ५ अर्थान्तरत्व ६ अनिषिद्धोहत्व ७ अपूर्वार्थत्वं धर्माणां चेति ८ मन्त्रा इत्यनेन सूचितम् । अत्रैकादशानामपि मु॰ ख्यार्थत्वादीनामूहप्रयोजकत्वासिद्धौ एकैकव्यतिरेके ऽप्यूहाभाव न॰ ष्टमाधिकरणोक्त दशमाद्यसिद्ध च कार्यमुखातिदेशस्योहप्रयोजक॰ त्वमुच्यते।

तथा हि इय गौस्तया क्रीणामि तस्यै शृतमित्यादौ सोमक्र॰ यार्थैकहायनीप्रकाशनार्थे मन्त्रे क्षीरादियाचिना शृतादिशब्दाना यिकेत्रानमतार्थत्वाद् दृष्टार्थत्वे ऽपि क्रयसाधनस्तुत्यर्थत्वाच्च स्वार्थत्वे ऽपि कालान्तरे चैकहायन्यामपि क्षीरादिसम्भवात्समवेतार्थत्वे ऽपि एकहायन्यवस्थायामुच्यमानस्य क्षीरादिमत्वस्य मुख्यत्वाभावादौ॰ पचारिकस्य क्षीरादिमत्वस्य सावडोत्पादयिष्यमाणधेनुद्वारेण सा॰ पेक्षे ऽप्युपपत्तेरूहाभावान्मुख्येयुक्तम् १ । " पत्नीमित्येकवचनस्य विद्यमानार्थत्वेन मुख्यत्व ऽपि सन्नहनीयपत्नीस्वरूपप्रकाशनाच्च स्वार्थत्वे ऽपि एकत्वस्य चानेकपत्नीप्रयोगे ऽपि पत्नीत्वसामान्ये समवायात्समवेतार्थत्वे ऽपि प्रकृतापूर्वसाधनभूतपत्नीव्यक्तिपर॰ त्वात्सामान्यस्वरूपप्रकाशनस्याद्दृष्टार्थत्वेनोहाभावाद्दृष्टार्थतेत्युक्तम्। २। इडापह्वानमन्त्रे " यज्ञपतिं वर्धय "ति यज्ञपतिशब्दस्य य॰ जमाने मुख्यत्वे ऽपि तत्प्रोत्साहनार्थत्वेन दृष्टार्थत्वसम्भवे ऽपि य॰ जमानस्य च कर्मसमवायात्समवेतार्थत्वे ऽपि इडास्तुत्यर्थवृद्धिवि॰ शेषणत्वात्स्वार्थत्वाभावेनोहाभावात्स्वार्थेत्युक्तम्।

" इन्द्रागच्छ हरिव आगच्छे "ति सुब्रह्मण्यामन्त्रे हरिवच्छ॰ ब्दस्य हरिवत्तालक्षणे गुणे मुख्यत्वे ऽपि तस्य चेन्द्राय हरिवते धाना इति सवनीयहविरादिषु देवतात्वान्तर्गतेस्तत्प्रकाशनार्थत्वेन दृष्टार्थत्वे ऽपि वक्ष्यमाणेन्द्रप्रकाशनाच्च स्वार्थत्वे ऽपि वस्तुतॄ॰ दैवन्द्रे हरिवत्वासमवायात्समवेतार्थत्वाभावेनोहाभावात्समवेतार्थते त्युक्तम् ४। सत्स्वपि मुख्यत्वादिषु अर्थप्रकाशनवच्छब्दरूपस्याप्याद॰ रे सत्यर्थान्तरयुक्ताया विकृतावैन्द्रीवद् गौणत्वोपपत्तेरूहासम्भ॰ वात्प्रवृत्तो यथोत्पत्तिवचनमर्थाना तथोत्तरस्या ततौ तत्प्रकृतित्वा॰

दर्थे चाकार्यत्वादित्येतदधिकरणसिद्धशब्दस्वरूपानादरसूचना-यादिशब्दः ५ ।

ननु प्रकृतौ मन्त्राणां मुख्यत्वादिरूपेण प्रयोगे ऽपि विकृता-वर्थान्तरयुक्तायामतिदेशेन प्राप्तानां तदीयद्रव्यदेवतादिप्रकाशना-सामर्थ्येन प्राकृतकार्यार्थत्वायोगादतिदेशबलात्कार्यान्तरकल्पनैव स्यान्नोहेन प्राकृतकार्यसामर्थ्यकल्पनेत्याशङ्क्य विकारेषु कार्याति-देशतो गता इत्युक्तम् । प्राकृतकार्यनैरपेक्ष्येण पदार्थातिदेशे सा-क्षातिदेशे वा कार्यान्तरकल्पना युज्येत वैकृतभावनाकाङ्क्षावशात्तु करणोपकारलक्षणात्कार्यद्वारस्यैवातिदेशस्य दशमाद्ये वक्ष्यमाण-त्वान्न कार्यान्तरकल्पनेत्याशयः ६ ।

यद्यपि प्रकृतौ व्रीहिमन्त्रे मुख्यत्वार्थतास्वार्थत्वसमवेतार्थ-त्वव्रीहिस्वरूपा विवक्षाः सन्ति यवेषु व्रीहिकार्ययागसाधनता ऽप्य-स्ति तथापि व्रीहियवविध्योर्युगपद्यागानुवादेन प्रवृत्तेर्व्रीहिकार्यं यव-यैः साध्यतइति विनिगमनाविरहादनवगतेर्लैङ्गिकोपदेशेनैव का-र्यापत्तिमुख्यातिदेशेनाप्यप्राप्तेर्व्रीहिमन्त्रानूह इत्यतिदेशाविषयपदा-भ्यां सूचितम् । ७ ।

मुख्यत्वाविदशप्रयोजकसत्त्वे ऽपि " पूयति वा एतदृचो ऽक्षरं यदेनदूहति तस्मादृचं नोहेदि "ति निषेधादनूहं प्राकृतयाज्यानुवा-क्यादौ वक्तुम् अनिषिद्धोहा इत्युक्तम् ।

कार्यद्वारा ऽतिदेशे ऽपि कार्यान्तरार्थे व्रीह्यादौ यूपावट्स्तरण-बर्हिर्न्यायेन मन्त्रप्राप्तेरेवाभावेनोहाभावात्प्राकृते कार्यमापन्नेऽपि-त्युक्तम् ९ ।

प्राकृतकार्यार्थेष्वपि वैकृतव्रीहिष्वर्थान्तरत्वाभावेनाविकृतस्यैव व्रीहिमन्त्रस्य प्रयोगोपपत्तेरूहाभावादर्थान्तरेष्वित्युक्तम् १० ।

ननु कार्यद्वारके ऽप्यतिदेशे व्रीह्यादिकार्यापन्नेष्वपि च नी-वारेषु व्रीह्यादिप्रकाश्याभावेन व्रीहिमन्त्रस्यैवाप्राप्तेर्नोहः स्यादित्याश-ङ्क्यापूर्वार्थद्वारेणेत्युक्तम् । स्वरूपप्रयुक्तत्वनिरासेनापूर्वप्रयुक्तत्वस्य नवमाद्ये वक्ष्यमाणत्वान्नीवारादिषु व्रीह्यादिस्वरूपाभावे ऽपि व्रीह्या-दिलक्षितापूर्वसाधनत्वसद्भावात्तद्द्वारेणास्तिप्राप्तिरित्याशयः ११ ।

पञ्चधा कार्यापत्तिश्च विभक्तविभागात्प्रमाणपञ्चकप्रमेयत्वा-च्च । तद्यथा । क्व चित्प्रत्यक्षानुमानाभ्याम् । शब्दात्तु त्रेधा । क्व चित्प्रत्यक्षादेव स्वशब्दात् । क्व चित्तु प्रतिषेधेन स्वशब्दानुमानमनु-मिताच्च स्वशब्दात्कार्यापत्तिः । क्व चित्स्वभावेन प्रतिषेधानुमानं प्रतिषेधाच्च स्वशब्दानुमानं तेनानुमितानुमानलब्धात्स्वशब्दात्कार्या-

पत्तिः । तत्र नैवारश्चरुरिति विकारतास्थितेन नीवाराणां चरुप्रकृतित्वोक्तेः प्रत्यक्षसहकृतविधिना प्रदेयप्रकृतित्वलक्षणव्रीहिकार्यापत्तिरवसीयते । १ ।

नखावपूतानां चरुरित्यादौ न प्रत्यक्षेण कार्यापत्तिः न हि निर्लुञ्चनावघातयोः प्रत्यक्षेणैक्यदृश्यते । येन प्रत्यक्षतो नखानामुलूखलमुसलकार्यापत्तिः स्यात् । किं त्ववपवनस्य वैतुष्यं फलं प्रत्यक्षेण दृष्ट्वाऽनुमानं भवति नूनमुलूखलमुसलकार्ये नखा वर्तन्त इति । अतोऽत्रानुमानेन कार्यापत्तिः । २ ।

"परिधौ पशुं नियुञ्जीत" त्यत्र तु स्वशब्देनैव परिधिः सप्तम्या यूपकार्ये नियोजने प्राकृते अधिकरणत्वेन यूपवद्विधीयते न ह्ययमप्राकृतनियोजनान्तरविधिर्गौरवात् । ३ ।

"न गिरागिरेति ब्रूयादि" ति गिरापदकार्यं लक्षयति प्रतिषिद्धे हि गिरापदे तत्कार्यं साधनाभिलाषि लक्ष्यते । तत्र च लक्षिते इरापदस्य साध्याभिलाषिणो विधिः । न हीरापदं कार्यप्रतिपादकशब्दाद्दते तत्साधनत्वेन वाक्यं विधातुं न ह्यशब्देन शाब्दस्यैकवाक्यता भवतीति । तस्मादत्र स्वशब्दादनुमानम् । परिधौ त्वाम्नातएव स्वशब्द इति विशेषः । ४ ।

"जुहुवा यतर्हि वाग्भवति यर्हि पृषद्यः पटहः सन्तिष्ठत" इत्यत्र संस्थया प्रतिषेधो लक्ष्यते न हि संस्थितः कर्तव्यो भवतीति । प्रतिषेधेन च पूर्ववत्कार्यं लक्ष्यते । तस्मिंल्लक्षिते मध्वशनघृताशने विधीयेते । एवमत्र लक्षितलक्षणया स्वशब्दः । तदिदं मधुघृताशनोदाहरणं वार्त्तिककृता दूषितम् । संस्था हि समाप्तिर्न चाभूतस्य संस्था संस्थितस्य वा श्रवणः । तेन लिङ्गवाक्याभ्यां कृतपटहस्य पुंसः संस्कारकेऽवगम्यमाने मधुघृताशने कथं पटहफलार्थे स्यातामिति । तस्मादत्रोदाहरणं मृग्यमित्युक्तम् ।

तत्तु धर्यं भ्रमः । षष्ठे ( पा० ४ अ० ११ ) उक्ते " सत्रायागूर्य विश्वजिता यजेत " इत्यागोरणशब्दोक्ते सत्रसङ्कल्पे विहिते विश्वजित्सत्रमकुर्वतोभवति न कुर्वत इति । तेनेदमभावे विधानस्योदाहरणमिति । इत्येकादशविधस्योहप्रयोजकस्य निरूपणम् ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्मजभट्टशङ्करकृते मीमांसाबालप्रकाशे नवमाध्यायार्थसङ्ग्रहः ।

बाधो निवृत्तिरननुष्ठानमिति यावत्। स च द्विविधः। प्राप्तबाधोऽप्राप्तबाधश्चेति।

यत्रातिदेशसामान्यशास्त्रादिजनिते ज्ञाने ऽयं सर्वविषये वा मिथ्येदमिति प्रत्ययान्तरं भवति स प्राप्तबाधः।

यत्र तु लिङ्गादौ श्रुतिकल्पनाप्रतिबन्धात् ज्ञानोत्पत्तिरेव प्रतिबध्यते सोऽप्राप्तबाध इति।

अनयोश्च मध्ये पूर्वो मिश्रैः प्रमेयापहारलक्षणो बाध इत्यपि व्यवहृतः। उत्तरश्च मूलोच्छेदलक्षण इत्यपि। तत्र प्राप्तबाधोऽपि द्विविधो नित्यो वैकल्पिकश्च। तत्र नित्यस्तावदेकविंशतिभेदः।

तद्यथा। प्रत्यक्षेण तदाभासो बाध्यते १। अनुमानेन तदाभासः २। शाब्देन तदाभासः ३। उपमानेन तदाभासः ४। अर्थापत्त्या तदाभासः ५। अभावेन तदाभासः ६। एते षड्लौकिका बाधाः।

अथ शास्त्रीयाः। नित्यं नैमित्तिकेन यथा "दर्शपूर्णमासयोः पञ्चदश सामिधेनीरनुब्रूयादि"ति नित्यं पाञ्चदश्यं "सप्तदश वैश्यस्ये"ति वैश्यनिमित्तकेन साप्तदश्येन वैश्यकर्तृके प्रयोगे बाध्यते। १।

उभयमपि काम्येन पुरुषार्थेन। यथा। पूर्वोक्तं पाञ्चदश्यं साप्तदश्यं च "एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्ये"ति काम्येन एकविंशतित्वेन बाध्यते। २।

पूर्वं परेण। यथा "यद्युद्गाताऽपच्छिद्येत अदक्षिणो यज्ञः परिसमाप्यते यत्पूर्वस्मिन्दास्यन् स्यात्तद्दद्यात्। यदि प्रतिहर्ता सर्ववेदसं दद्यादि"ति द्वयोर्निमित्तयोर्द्वे नैमित्तिके विहिते तत्र निमित्तपौर्वापर्ये परेण नैमित्तिकेन पूर्वनैमित्तिकं बाध्यते। ३।

प्राकृतमर्थलोपेन बाध्यते। यथा। कृष्णलचरावघातः प्राकृतश्चोदकप्राप्तो वैतुष्यरूपार्थलोपात्। यथा वा स्वयं दिने बर्हिषि लवनं प्राप्तिरूपार्थलोपात्। ४।

प्राकृतमेव पर्युदासेन बाध्यते। यथा। "न होतारं वृणीते" इति पित्र्यायां श्रुतं तत्र वैधनिषेधे विकल्पप्रसक्तेः पर्युदासत्वं नित्यबाधार्थं दशमे उक्तं ५।

प्राकृतमेव प्रत्याम्नानेन बाध्यते। तदप्यारभ्याधीतेनानारभ्याधीतेन चेति द्विधा। आद्योदाहरणं यथा "कुशमयं बर्हिर्भवती"ति प्रकृतितः प्राप्ताः कुशा "शरमयं बर्हिर्भवती"ति विकृतौ विहितैः शरै-

बाध्यन्ते । ६ ।

द्वितीयोदाहरणम् । यथा य इष्ट्येत्यनारभ्य विहितेन सद्यस्कालत्वेन विकृतिष्वतिदिष्टद्व्यहकालबाधः ७

सामान्यविहितं विशेषविहितेन बाध्यते । तदपि विधेयभेदे विधेयैक्ये चेति द्विधा । तत्राद्योदाहरणं यथा । पदेनाहवनीयबाधः । द्वितीयोदाहरणमुपसंहारः । ९ ।

सामान्यविशेषबाधो न वाक्यानेकत्वएव किं तु वाक्यैक्ये ऽपि यथा सप्तमे ( पा० ३ । अ० ४ । ) उक्तं " वाचया निष्कासेने "ति द्रव्यविशेषेवाचभूयनाम्ना सामान्यतो ऽतिदिष्टः पुरोडाशो बाध्यते । १० ।

निष्प्रयोजनं सप्रयोजनेन बाध्यते । यथा निगदेषु परसम्बोधनार्थेषु तदर्थं कल्पितविधिनापि प्राप्तेनोच्चैस्त्वेनोपांशुत्वमुपांशुयजुषेत्यनेन प्राप्तं बाध्यते । ११ ।

अल्पं भूयसा बाध्यते यथा । पञ्चदशरात्रे नाम्नां मिथश्चिन्त्यायामेकमग्निष्टुमाग्नेयी सुब्रह्मण्याप्रवर्तकमनेकेनैन्द्रीसुब्रह्मण्याप्रवर्तकेन ज्योतिरादिनाम्ना बाध्यते । १२ ।

सावकाशं निरवकाशेन । यथा । यत्किं चित्प्राचीनमिति वीप्सार्थयत्किञ्चिच्छब्दवशेनाग्नीषोमीयप्राग्भाविपदार्थविधेयोद्देशेन विहितं दीक्षणीयातो ऽन्यत्रापि सावकाशमुपांशुत्वं दीक्षणीयादिमात्रार्थेन वाक्येनेति स्वरेणान्यत्र निरवकाशेन बाध्यते ।

तथा विशेषसमाख्यया सामान्यसमाख्याबाधो ऽपि तार्त्तीयो ऽत्रोदाहरणम् । १३ ।

अङ्गं प्रधानेन बाध्यते यथा । पवमानेष्टिष्वग्निहोत्रहवणी निर्वापेण बाध्यते । १३ ।

अङ्गधर्मः प्रधानधर्मेण बाध्यते । यथा । दीक्षणीयायाः पर्वकालत्वं सुत्यापर्वकालत्वेन । १४ ।

उपादेयमनुपादेयेन । यथा । सान्तपनीयोत्कर्षे ऽग्निप्रणयनं कालेन बाध्यते । १५ । त इमे पञ्चदश शास्त्रीयबाधभेदाः पूर्वे च लौकिकाः षडिति एकविंशतिर्बाधभेदाः । प्रसङ्गलक्षणो ऽपि बाधः प्राप्तबाध एव । स तु सप्तविधः । प्रधानप्रसङ्ग एकप्रकारः यथा काम्यार्थेनाग्निहोत्रादिप्रयोगेण नित्यतत्प्रयोगस्य प्रसङ्गसिद्धिः । १ ।

अङ्गप्रसङ्गस्तु षोढा । तद्यथा । औपदेशिकेनाङ्गेनौपदेशिकस्य प्रसङ्गः । तत्रापि नैमित्तिकेन नित्यस्य यथा । वैद्यनिमित्तकसाद्यस्केन नित्यस्य पाशद्वयस्य । २ ।

तथा काम्येन नित्यस्य नैमित्तिकस्य च । यथा प्रतिष्ठार्थेनैकविंशतिरात्रेण पाञ्चदश्यस्य नित्यस्य वैश्यनिमित्तकस्य च साप्तदश्यस्य । ३ । ४ ।

औपदेशिकेनाऽऽतिदेशिकस्य । यथा । दर्शार्थेन प्रयाजादिना निवीष्ट्यर्थस्य प्रयाजादेः । ५ ।

आतिदेशिकेनातिदेशिकस्य । यथा । पश्वर्थेन प्रयाजादिना पशुपुरोडाशार्थस्य प्रयाजादेः । ६ ।

आतिदेशिकेनौपदेशिकस्य यथा । "एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्ये"ति काम्ये ऽनुवचनान्तरे नित्यानुवचनप्रकृतिके ऽतिदिष्टाभिः सामिधेनीभिः प्राकृतसामिधेनीकार्यस्याग्निसमिन्धनस्य प्रसङ्गतः सिद्धेस्तासां बाधः । ७ ।

तदिमे सप्तप्रसङ्गलक्षणा बाधाः पूर्वैरेकविंशतिसपर्यायैः सहाष्टाविंशतिर्बाधभेदाः सिद्धाः ।

वैकल्पिकस्तु प्राप्तबाधः पूर्वमुद्दिष्टः सो ऽपि विभक्तविभागेन चतुर्विधः । तथा हि । औपदेशिकेनौपदेशिकस्य कश्चित् । सो ऽपि चतुर्धा ।

भावयोर्भावाभावयोश्च । द्विविधो ऽपि चायं प्रकृतौ विकृतौ चेति तत्र प्रकृतौ उपदिष्टयोर्भावयोर्यथा व्रीहियवयोः । विकृतौ उपदिष्टयोर्भावयोर्यथा "खादिरो यूपो भवति बैल्वो यूपो भवती"ति । प्रकृतावुपदिष्टयोर्भावाभावयोर्यथा ऽग्निहोत्रे न दध्यधिश्रयेदधिश्रयेदित्येक इति । विकृतावुपदिष्टयोर्भावाभावयोर्यथा "अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाती"ति । कश्चित्तु उपदिष्टेनातिदिष्टस्य वैकल्पिको बाधः । स तु त्रिविधः । उपदिष्टेन भावेनातिदिष्टस्य भावस्य वैकल्पिको बाधः । यथा पित्र्यायां द्वौ त्रीन्वा परिधीन्परिदध्यादित्यापस्तम्बसूत्रम् । अत्र हि प्राकृतपरिधानानुवादेन त्रित्वस्यापि विधौ वाक्यभेदापत्तेः । परिधिद्वयमेव वैकल्पिकतया विधीयते तदभावपक्षे अतिदेशप्राप्तमेव परिधित्रित्वमनूद्यते । १ ।

उपदिष्टेन भावेनातिदिष्टस्याभावस्य वैकल्पिको बाधः । स च तत्र यत्प्रकृतौ किंचिन्नियमेन निषिद्धं विकृतौ तदेव वैकल्पिकतया विधीयते । तादृशमुदाहरणं मृग्यम् । २ ।

उपदिष्टेनाभावेनातिदिष्टस्य भावस्य वैकल्पिको बाधः । यथा ।

पशावाज्यभागावतिदेशतः प्राप्तौ "न तौ पशौ करोती"ति निषेधाद् बाध्येते । उपदिष्टेनाभावेनातिदिष्टस्याभावस्य वैकल्पिको बाध

इति नैव सम्भवतीति ते एते वैकल्पिकाः सप्त बाधभेदाः । एकचत्वारिंशत्तु वैकल्पिकबाधभेदाः । द्वादशाध्यायार्थनिरूपणे एकचत्वारिंशद्विधविकल्पोक्त्या ऽभिधास्यन्ते । तेनेमे सप्त वैकल्पिकबाधभेदास्तैरेकचत्वारिंशत्संख्यैर्वैकल्पिकबाधभेदैः सहाष्टाचत्वारिंशद्वैकल्पिकबाधभेदाः पूर्वोक्ताश्चाष्टाविंशतिर्नित्यबाधभेदा मिलित्वा षट्सप्ततिः प्राप्तबाधभेदाः सिद्धाः । यदा तु वक्ष्यमाणैकचत्वारिंशद्वैकल्पिकबाधभेदवत्पूर्वोक्ता अष्टाविंशतिसंख्या अपि नित्यबाधभेदा जातिद्रव्यगुणक्रियादिविषयत्वेन भिन्ना निरूप्यन्ते तदा ते द्वादशोत्तरं शतं भवन्ति । तेनैते नित्यैरष्टाचत्वारिंशत्संख्यैः प्राप्तबाधभेदैः सह षष्ट्यधिकं शतं प्राप्तबाधभेदाः सिद्धाः ॥ १६० ॥

इति प्राप्तबाधभेदनिरूपणम् ।

अथा ऽप्राप्तबाधभेदा उच्यन्ते । ते च विभक्तविभागेन पञ्चविंशत्यधिकशतचतुष्टयं भवन्ति । तथा हि । प्रत्यक्षेणानुमानादीनि पञ्च बाध्यन्त इति ते पञ्चबाधभेदाः । ५ ।

प्रत्यक्षव्यतिरिक्तानां तु मध्ये यदेव प्रथमं प्रवृत्तं तेनोत्तरस्योत्पत्तिप्रतिबन्ध एव भवति । तेनानुमानकृताश्चत्वारो बाधभेदाः । ४ । उपमानकृताश्चत्वारः । ४ । शब्दकृताश्चत्वारः । ४ । अर्थापत्तिकृताश्चत्वारः । ४ । अभावकृताश्चत्वारः । ४ । यौगपद्ये तु द्वयोर्द्वयोः प्रमाणयोः सामग्र्योरेकविषयत्वेन विरोधे ऽन्योन्यप्रतिबन्धात्प्रमाणसंप्लव एव ज्ञानानुत्पत्तिलक्षण इति नैयायिकाः । त इमे लौकिकाः पञ्चविंशतिर्बाधभेदाः ॥ २५ ॥

अथ शास्त्रीया अप्राप्तबाधभेदा उच्यन्ते । श्रुत्या लिङ्गादीनि पञ्च बाध्यन्ते । लिङ्गेन वाक्यादीनि चत्वारि । वाक्येन प्रकरणादीनि त्रीणि । प्रकरणेन क्रमादिद्वयम् । क्रमेण समाख्येति । त एते पञ्चदशबाधभेदा यत्रैकः शेषो द्वयोः शेषिणोर्द्वाभ्यां प्रमाणाभ्यां विनियुज्यते तत्रापि सम्भवति (यथा । ऐन्द्र्या श्रुत्या गार्हपत्ये लिङ्गेनेन्द्रे तथा यत्रैकस्मिन् शेषिणि द्वौ शेषौ द्वाभ्यां प्रमाणाभ्यां विनियुज्येते तत्रापि सम्भवन्ति । यथा एकस्मिन् गार्हपत्ये शेषिणि श्रुत्यैन्द्रीलिङ्गेन यो कां चित्प्रकृतावैशेषिसामान्यसम्बन्धापेक्षत्वादिति १) त्रिंशत् । ते च पूर्वोक्तैः पञ्चविंशतिसंख्यैर्लौकिकैः प्रत्यक्षादिबाधभेदैः सह पञ्चपञ्चाशद्बाधभेदाः सम्पन्नाः ५५ ॥ श्रुत्यादिषु च यथा विजातीयैर्विजातीयानां बाध एवं सजातीयैः सजातीयानामपि बाधः । तद्यथा श्रुत्या तावच्छ्रुतिर्बाध्यते । तदुक्तम् ।

(१) पूर्व पा० २ सू० भा० ।

तथा पश्वङ्गमेकत्वं पदश्रुत्या प्रतीयते ।
समानप्रत्ययश्रुत्या बलीयस्याक्रियाङ्गतेति ।१।

तथा ऽसन्दिग्धश्रुत्या सन्दिग्धश्रुतिबाधो यथा । आमिक्षायागे वैश्वदेवीत्यसन्दिग्धतद्धितश्रुत्या वाजिभ्य इति चतुर्थी पञ्चमीत्वेन सन्दिग्धाया श्रुतेर्बाधो गुणाधिकरणे उक्तः ।२।

लिङ्गेनापि लिङ्गं बाध्यते । यथा "स्योनं ते सदनं कृणोमि" इत्यत्र मन्त्रे उभयोरर्थयोः कर्मसमवेतस्वस्वार्थप्रकाशनसामर्थ्येन सन्निहितैकवाक्यतोपगमनसामर्थ्यात्मकं लिङ्गं बाध्यते ।३।

वाक्येनापि वाक्यं बाध्यते । यथा । "प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति" इत्यत्र प्रोक्षिताभ्यामिति तृतीयायाः कयोरप्युलूखलमुसलगतकरणकारकानुवादित्वात्क्लृप्तविनियोगाभावेन वाक्यीयविनियोगे सत्यसौ वैयधिकरण्याभावघाते किंतूलूखलमुसलयोरेवेति नवमे उत्पत्तिसंयोगादित्यधिकरणे वक्ष्यते ।

यत्त्वत्र वार्त्तिकमुदाहरणमुक्तम् "पञ्चदश सामिधेनीरनुब्रूयात्सप्तदश सामिधेनीरनुब्रूयाद्वैश्यस्येति । उभयत्रापि हि सामानाधिकरण्यादेकवाक्यत्वकृते विनियोगे सति निमित्तविशेषसंयोगात्साप्तदश्यं बलीयो भवतीति । तदयुक्तम् ।

निमित्तनैमित्तिकन्यायेनैव तत्र बाधसिद्धेः । किं च नैमित्तिकत्वेन बाधः प्राप्तबाधः तेन वाक्यान्तरत्वे ऽपूर्वं नित्यपाञ्चदश्यप्राप्तेः स एव युक्तः । वाक्ययोस्त्वन्योन्यं बाधो ऽप्राप्तबाधः स वाक्यैकत्व एव युक्तः अवघातसमभिव्याहारवन्निमित्तबोधानुपपत्तेरिति ।४।

प्रकरणेनापि प्रकरणं बाध्यते । यथा "अभिक्रामं जुहोतीत्यवान्तरप्रकरणेन महाप्रकरणम् । महाप्रकरणमपि महाप्रकरणेन बाध्यते । यथा ज्योतिष्टोमप्रकरणेन नित्यानित्यसंयोगविरोधसहकृतेन सत्त्रप्रकरणम् ।५। क्रमेणापि क्रमो बाध्यते । ऐन्द्राग्नयोः कर्मणोरैन्द्राग्नयोश्च याज्यानुवाक्यायुगलयोर्यथासंख्यक्रमेणाद्यन्तदेशसामान्यलक्षणेन पौर्वापर्यप्रत्यासत्तिक्रमो युगलयोरनियमेन कर्मद्वये प्रापको बाध्यते ।६।

समाख्ययापि समाख्या बाध्यते । यथा विशेषसमाख्यया सामान्यसमाख्यायाः । यथोक्तं तृतीये ( पा० ७ । अ० २१ ) तद्व्यपदेशसमाख्यानेन निर्देश इत्यधिकरणे ।७।

त एते सप्त बाधभेदाः शेषशेषिभेदेन द्विगुणा द्वादश पूर्वोक्तैः पञ्चपञ्चाशत्संख्यैरप्राप्तबाधभेदैः सह द्विषष्टिरप्राप्तबाधभेदाः

सिद्धा । ६२ ।

शब्दान्तरादीनां तु मिथ समवायाभावान्न बाधभेदा सम्भवन्ति । क्रमप्रमाणानामपि श्रुतिलिङ्गादिव त्पणा पञ्चदशबाधभेदा । तत्र तु तार्तीयवत्सूत्रक्रमेण बलाबलं किं त्वन्यथा । तथा च निरालम्बनवादे श्रुत्यर्थपठनस्थानमुख्यासत्तिप्रवृत्तिभिरित्ययथासूक्तमनुक्रम्य विरोधे सति दौर्बल्यमतेषामपि पूर्ववदित्युक्त पूर्ववच्छ्रुतिलिङ्गादिवदित्यर्थ ।सूत्रक्रमेण बलाबले सति अवदानाभिघारणासादनेषु प्रवृत्तिक्रमान्मुख्यक्रमस्य बलीयस्त्व पञ्चमोक्त विरुध्यतेति । त च श्रुत्यर्थादीना पणा पञ्चदशबाधभेदा एवम् । श्रुति पञ्चभ्या ऽपि बलीयसीति स्पष्टमेव । तेन श्रुत्यार्थादीना पञ्चाना पञ्चबाधा । ५ ।

अर्थस्यप्रयोजनविरोधे हि यागादीनामप्रसक्तेः क्रमकल्पनासम्भवाद्यर्थेन पाठादीना चतुर्णा चत्वारो बाधा ४ ।

पाठ स्थानादिभ्यो बलवानित्यपि स्फुटमेव । स हि श्रुतिवदाम्नातेन प्रत्यक्षएव स्थानादिषु तु न तदस्ति । श्रुतिस्तु साक्षात्क मविषयैव न पाठ इति श्रुतितो भेद । तेन ते त्रयो बाधा ३ ।

स्थानमपि मुख्यप्रवृत्तिभ्या प्रबलमित्यसन्दिग्धम् । पाठे हि क्रमवतोर्ज्ञाने प्रत्यक्षक्रमेण जाते ऽनुमयक्रमेण स्मृतिस्तत्क्रमेण चानुष्ठानक्रम स्थान तु आश्विनग्रहणेन सवनीयमात्रज्ञान पशुन्तरस्य तु चोदकादवश्यकर्तव्यत्वात् सह पशूनिति साहित्यस्यापरस्य सवनीयाऽऽनन्तर्याक्षेपमात्र परिशेषात्प्रयोगविधिना न तु पश्वन्तरस्य सवनीयानन्तरं ज्ञान पाठेनेवास्ति । मुख्यक्रमे तु मुख्यस्यैव ज्ञानमस्ति न तु क्रमवतोरन्यतरस्यापि पाठेनेव ज्ञाने स्त । एव प्रवृत्तावपि क्रमवद्भ्यां पूर्वयोरेव ज्ञाने सिद्ध न तु क्रमवतोरन्यतरस्यापि पाठेनेव तत तौ द्वौ बाधौ २ । मुख्यक्रमा ऽपि प्रवृत्ते सबल । पूर्वो हि प्रधानानामङ्गासत्त्यर्थ उत्तरस्त्वङ्गानामेव परस्परप्रत्यासत्त्यर्थं इत्यङ्गगुणविरोधन्यायादेवाय बाध सिद्ध इति पञ्चदशैते बाधा । तदेते पञ्चदशापि बाधा विप्रतिपत्तौ वा प्रकृत्यन्वयाद्यथा प्रकृतीति सूत्र तन्त्ररत्न उक्ता । श्रुत्यादिचतुष्टय मुख्यप्रवृत्तिभ्या सर्वत्र बलीय एषामपि हि श्रुत्यादीना पूर्वपूर्वबलीयस्त्व तत्र तत्र साधयिष्यतइति ।

अत्रोदाहरणानि । तत्र श्रुत्यार्थबाधे स्थितोदाहरणाभावाद्दृत्याचिन्तान्यायेनोदाहरणमुक्त तन्त्ररत्न क्रमको यो ऽर्थशब्दाभ्यामित्यधिकरणे ( अ० ५ पा० ४ अ० १ )।

श्रुत्यर्थयोर्विरोधस्तु नैव क्व चन सम्भवी ।
यथाश्रुत्यैव हि न्याय्यमर्थस्य परिकल्पनम् ॥
हुत्वाग्निहोत्रं पक्तव्या यवागूरिति हि श्रुते ।
पाको ऽग्न्यर्थ एव स्यादनुष्ठानं च पश्चिमम् ॥

इति । अनुष्ठाने च पश्चिमं होमोत्तरं स्यादित्यनुषङ्गः । अर्थेन तु पाठबाधः क्रमकोपाधिकरणे ( अ० ५ पा० ४ अ०१ ) यथाग्निहोत्रं जुहोति यवागूं पचतीत्युदाहृत्य सिद्धान्तित इत्यर्थतो दुर्बलस्य पाठस्य श्रुतितो दौर्बल्यं कैमुतिकन्यायेनार्थादेव सिद्धमिति तदुदाहरणानुक्तिः । एवमस्मदुक्तबलाबलरीत्या पाठाद् दुर्बलस्य स्थानस्य श्रुत्यर्थाभ्यां सुतरां दौर्बल्यं कैमुतिकन्यायसिद्धम् । तत्र तु श्रुतिस्थानयोरर्थस्थानयोश्च बाधोदाहरणे पञ्चमे ऽनुक्तत्वात् स इति गम्यते । पाठेन स्थानबाधे तूदाहरणं प्राकृताच्च पुरस्ताद्यदित्यधिकरणे ( अ० ५ । पा० २ अ० ११ ) उक्तम् । सावित्रहोमीयासम्भरणाद्यपूर्वपदार्थाभिधाय दीक्षणीयादयः प्राकृताः सगुणाः श्रुताः । तत्र प्राकृतेन दीक्षणीयाप्राचीनेन पदार्थेनोपस्थितानां दीक्षणीयादीनां स्थानेन प्रागनुष्ठाने ततः प्राक् पाठः सावित्रहोमादेर्न स्यादिति पाठक्रमेण स्थानात्क्रमो बाध्यत इति । पाठेन मुख्यक्रमबाधे तूदाहरणं प्रकृतौ तु स्वशब्दत्वादित्यधिकरणउक्तम् । ( अ० ५ पा० १ अ० ८ ) अग्नीषोमीयनिर्वापं आज्यनिर्वापोत्तरं मुख्यक्रमात्प्राप्तं औषधनिर्वापत्वेनाज्यनिर्वापात्प्राक् । पाठात्तथैव कार्यं इति । मुख्यक्रमेण प्रवृत्तिक्रमबाधे तूदाहरणमवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यादित्यधिकरणउक्तम् । ( अ० ५ पा० ४ अ० २ ) सान्नाय्यधर्मा हि पूर्वं प्रवृत्ताः पश्चादाग्नेयधर्माः प्रधानं त्वाग्नेयस्य प्रथमं पश्चात्सान्नाय्यस्य । ततः स्विष्टकृदवदानं प्रयाजशेषाभिघारणं यथासादनं तत्सान्नाय्यस्य पूर्वं प्रवृत्तिक्रमात्प्राप्तं मुख्यक्रमादाग्नेयस्य पूर्वं कार्यमिति । एवं पञ्चदशानां बाधानां मध्ये ऽर्थेन पाठबाधः पाठेन स्थानबाधः पाठेन मुख्यबाधो मुख्येन प्रवृत्तिबाध इत्येतेषां चतुर्णां बाधभेदानामुदाहरणानि चत्वारि चतुर्ष्वधिकरणेषु विशेषत उदाहृतान्युक्तानि । आद्यबाधभेदोदाहरणं च क्रमको यो ऽर्थशब्दाभ्यामिति जैमिनिनैव कृत्वाचिन्तयोपनिबद्धमुक्तम् । इतरेषां तु दशानां बाधभेदानामुदाहरणान्यनुपलम्भात्पञ्चमे नोक्तान्यस्माभिश्चेति । श्रुत्यर्थादिषु च श्रुतिलिङ्गादिवत्सजातीयानामप्यन्योन्यबाधाः श्रुत्योरर्थयोः स्थानयोर्मुख्ययोः प्रवृत्त्योश्चेत्येवं विधा उदाहरणासम्भवात्पञ्चमे न चिन्तिताः । पाठयोस्तु विधिमन्त्रग-

तयोर्मन्त्रगतो बलवानित्युक्तं मन्त्रतस्तु विरोधे स्यादित्यधिकरणे (अ० ५ पा० १ अ० ९ ) अग्नीषोमीयब्राह्मणं प्राक्पठितं पश्चादाग्नेयब्राह्मणं मन्त्रकाण्डे तु प्रागाग्नेयस्य याज्यानुवाक्यायुगलं ततो ऽग्नीषोमीयस्य तत्र मन्त्रपाठक्रमेण विधिपाठक्रमबाधादाग्नेयः पूर्वमनुष्ठेयः पश्चादग्नीषोमीय इति । तदेते षोडशबाधभेदाः पूर्वोक्तैर्द्विपञ्चसंख्यैर्बाधभेदैः सहाष्टसप्ततिरप्राप्तबाधभेदाः सिद्धाः ॥ ७८ ॥

तथा श्रुत्या स्मृतिर्बाध्यते यथा "औदुम्बरीं स्पृष्ट्वोद्गायेदि"ति श्रुत्या " औदुम्बरी सर्वा वेष्टयितव्ये"ति स्मृतिः । १ ।

तथा श्रुत्या ऽऽचारो बाध्यते । यथा ऽपशब्दप्रयोगरूप आचारस्तस्माद् ब्राह्मणेन न म्लेच्छितवै इति निषेधरूपया श्रुत्या । २ ।

तथा स्मृत्याप्याचारो बाध्यते । यथा ।
मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥

इति स्मृत्या मातुलकन्यापरिणयनाचारो दाक्षिणात्यानां । ३ ।

तथा प्रत्यक्षवैदिकलिङ्गेन स्मृतिर्बाध्यते । अत्रोदाहरणं सोमेश्वरेणोक्तम् । मातुलकन्योद्वाहनिषेधस्मृतिः पूर्वोक्ता श्रौतलिङ्गेन बाध्यते । श्रौतलिङ्गमयं च तत्रोक्तम् । "गर्भे नु नौ जनिता दम्पती कर्देवस्त्वष्टा सविता विश्वरूप" इत्येकम् ।

" आयाहीन्द्र पथिभिरीळितेभिरित्यपरं " मन्त्ररूपम् । वाजसनेयके "स्फ्यौ व्यूहति प्राचीं जुहूं प्रतीचीमुपभृतमि"ति स्फ्यव्यूहनविधिवाक्यशेषरूपं तस्मात् समाना देवपुरुषा दृष्टा चाद्यश्च जायते उत तृतीये सङ्गच्छामहे चतुर्थे सङ्गच्छामहे इति तृतीयम् । तदयं तन्निरासश्च शास्त्रदीपिकाप्रकाशे ऽस्मत्कृतो विस्तरभयान्नेहोक्तः ।

इदं तु तत्रोदाहरणम् ।
आशसनं विशासनमथो अधिविकर्त्तनम् ।
सूर्यायाः पश्य रूपाणि तानि ब्रह्मानुशुन्धतीति ॥

सूर्याख्याया नववध्वा आशासनविशासनविकर्तनाख्यवस्त्रत्रयधारणविषयश्रौतमन्त्रलिङ्गेन सूर्याविदे वधूवस्त्रं दद्यादिति स्मृतेरेकवस्त्रधारणार्थाया बाधः । ४ ।

तथा प्रत्यक्षवैदिकलिङ्गेनाचारो बाध्यते । यथा यवबराहाधिकरणे ( अ० १ पा० ३ अ० ५ ) "यदा वा अन्या ओषधयो म्लायन्ते

अधैते मोदमाना इवोत्तिष्ठन्ती"त्यर्थवादलिङ्गेन पिकनेमादिषु यवशब्द-प्रयोगरूप आचारो बाध्यते ५ ।

एवं श्रुतिस्मृत्याचारसम्बद्धाः पञ्चबाधभेदाः पूर्वोक्तैरष्टसप्ततिसङ्ख्यैर्बाधभेदैः सह त्र्यशीतिरप्रामाण्यबाधभेदाः सिद्धाः ॥ ८३ ॥

तथा आप्तस्मृत्या अनाप्तस्मृतिर्बाध्यते । यथा । नात्मानं घातयेदिति मन्वादिस्मृत्या केदारे पातयेद्देहमिति पाषण्ड्यादिस्मृतिः १ । तथा अविगीतस्मृत्या विगीतस्मृतिर्बाध्यते यथा न स्तेनः स्यादित्यनया ।

तथैव सप्तमे भक्ते भक्तानि षडनश्नता ।

अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः ॥

इत्यादिस्मृतिरपि दण्डाभावमात्रपरा अल्पदोषपरा वा २ ।

अदृष्टार्थस्मृत्या दृष्टार्था स्मृतिर्बाध्यते । यथा । न जातु ब्राह्मणं हन्यादित्यनया जिघांसन्तं जिघांसीयादित्यात्मरक्षणादिदृष्टार्था । ३ ।

एवं आप्ताचारेणानाप्ताचारो बाध्यते । यथा पिकाद्यधिकरणोक्त ( अ० १ पा० ३ अ० ५ ) वृष्भविषयपीलुशब्दप्रयोगरूपाचारेण हस्तिविषयम्लेच्छरूपानाप्तप्रयोगरूपाऽऽचारबाध इति । ४ ।

तथा । अविगीताचारेण विगीताचारो बाध्यते । यथा ब्राह्मणानां मांसभक्षणवर्जनाचारः प्राच्यादीनां च मांसभक्षणाचारः । तयोरुभाभ्यामाचाराभ्यां श्रुत्यनुमाने सामान्यत एव स्यात् दाक्षिणात्यप्राच्याद्युपपदकल्पनाया होलाकाधिकरणन्यायेन ( अ० १ पा० ३ अ० ८ ) निरस्तत्वात् । ततश्च किं विकल्प उताऽन्यतरेणान्यतरबाधः । बाधे अपि केन कस्येति वीक्षायां लोभादिमूलकत्वेन भक्षणाचारस्य विगीतत्वात्तस्य लोभादिमूलकेनाविगीतेन वर्जनाचारेण बाधः । ५ ।

तथा अदृष्टार्थेनाचारेण दृष्टार्थ आचारो बाध्यते । यथा वसन्तोत्सवाद्याचारेण अहि धा कारणाग्रहणे अयुक्तानि प्रतीयेरन्निति वर्णके ( अ० १ पा० ३ अ० ४ ) श्रुतिकल्पनोक्तादृष्टार्थेन तत्समानकालीनस्य यस्य कस्य चिद्दृष्टार्थस्याचारस्य बाधः ६ । तदेते षट् स्मृत्याचारसम्बद्धा बाधभेदाः पूर्वोक्तैस्त्र्यशीतिसङ्ख्यैर्बाधभेदैः सह एकोननवतिर्बाधभेदाः सिद्धाः ॥ ८९ ॥

तथा ऐन्द्र्येति चतुर्थ्यादिश्रुतिप्रभवया स्मृत्या लिङ्गादिसमाख्यान्तप्रभवा बाध्यते । यथा पुत्र प्रतिग्रहीष्यत्प्रवेशनस्य मध्ये व्याहृतिभिर्हुत्वेत्यादया होमादीतिकर्तव्यतायुक्तपुत्रप्रतिग्रहादिवि-

पयत्याद्विधिश्रुतितृतीयाश्रुतिप्रभवया स्मृत्या न शेषो अग्रे अन्यजातमस्तीत्यादेः शेषोऽपत्यमन्योत्पादितं नास्तीत्यर्थत्वेन दत्तकपुत्रनिषेधलिङ्गत्वात्तत्प्रभवा यस्य ये बीजिनो जातास्तस्य ते नेतरस्य त्विस्याधेति । तेनैते ऽपि पञ्चदशभेदाः शेषसमवाये, पञ्चदश च शेषिसमवाये इति त्रिंशत् । ततश्चैते पूर्वोक्तैरेकोननवतिबाधभेदैः सह एकोनविंशत्यधिकं शतमप्रासबाधभेदाः सिद्धाः ॥ ११९ ॥

तथा विधिप्रभवया स्मृत्या अर्थवादप्रभवा सा बाध्यते । यथा मागामनागामदितिं वधिष्टेति विधिप्रभवया गां न हन्यादित्यनया तथवेयादो मनुष्यराज आगते अन्यस्मिन्वार्हत्युक्षाणं वा वेहतं वा क्षदन्त इत्यर्थवादप्रभवा महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेदिति । १ ।

तथा सन्दिग्धमसन्दिग्धेन । यथा शर्कराञ्जनं केनेति सन्दिग्धं घृतस्तुत्या । २ ।

तथा दुर्बलाश्रयं बलवदाश्रयेण बाध्यते । यथादुर्बलकमाश्रयं " वेदं कृत्वा वेदिं करोती "ति वेदवाक्यं बलवत्पदार्थाश्रयेण "क्षुते आचामेदि"ति स्मृतिवाक्येन । ३ ।

तथा उपसंहारस्थमुपक्रमस्थेन । यथा उच्चैर्ऋचेत्याद्युपसंहारस्मृगादिपदं वेदोपक्रमेण । ४ ।

तथा अत्यन्तादृष्टार्थं नियमादृष्टार्थेन यथा ऽवघाते भाज्यसाज्यार्थत्वमौपधार्थत्वेन । ५ ।

आरादुपकारित्वं सन्निपातित्वेन यथा पशुपुरोडाशादौ । ६ ।

अनेकार्थविधानमल्पार्थविधानेन बाध्यते । यथा । दध्ना जुहोतीत्यादौ विशिष्टविधिर्गुणविधिना । ७ ।

तथा अनेकार्थत्वमेकार्थत्वेन बाध्यते । यथा । आकृत्यधिकरणे ( अ० १ पा० ३ अ० १० द्वि० वर्णके ) । ८ ।

तथानेकशब्दत्वमेकशब्दत्वेन बाध्यते । यथा व्याकरणाधिकरणे ( अ० १ पा० ३ अ० ९ )

बहुबाधो ऽल्पबाधेन बाध्यते । यथाश्वप्रतिग्रहेष्टेः । प्रतिग्रहीतृविषयत्वे वरुणायेति चतुर्थ्याः पञ्चम्यर्थत्वमनयदित्यस्य च प्रतिग्रहार्थत्वं स स्वां देवतामिति च तच्छब्दस्याप्राधान्यनिर्दिष्टवरुणपरामर्शित्वं दातृत्वे च वरुणस्यादेवतात्वाद्देवताशब्दायोग इति बहुबाधः । दातुरिष्टिपक्षे प्रतिगृह्णातिमात्रस्य स्वार्थत्यागः । १० ।

तथा वेदान्तरोत्पन्नं वेदान्तरविहितत्वेन बाध्यते । यथाधाने सामवेदोत्पन्नं वारवन्तीयादि उच्चैस्त्वेन प्राप्तं यजुर्वेदविहितत्वेनो-

पांशुत्वप्राप्त्या । ११ ।

तथा परशाखाविहितं स्वशाखाविहितेन बाध्यते । यथोदित-होमाद्यनुदितहोमादिना । १२ ।

अनारभ्याधीतं प्राकरणिकेन बाध्यते । यथाऽनारभ्याधीतं साप्तदश्यं पाञ्चदश्येन । १३ ।

नन्विदं मित्रविन्दाद्युपसंहारेणैव प्रकृतावनारभ्याधीतसा-प्तदश्यबाधे सिद्धे न प्रकरणाधीतपाञ्चदश्येनेत्यसङ्कीर्णमुदाहरणं वाच्यं यत्र प्रकरणाधीतेनैवानारभ्यवादो बाध्यत इति । तदुच्यते । यत्तु श्रुतं "षडरत्निसमिता मिनुयादि"ति यूपैकादशिनीमाम्नाय तत्राप्रा-प्तत्वाद्यच्छन्दस्त्वागतं विधिरङ्गीकृतो वार्तिकमते । तेन ज्योतिष्टोमेऽग्निविधिना प्रकरणाधीतेन बाधितो रथाक्षमात्राणि यूपान्तराला-नि भवन्तीत्यनारभ्यवादो विकृतीरग्निषोमीयादिता गच्छतीति । तदिदं शा-खान्तराधिकरणे उक्तम् (१) ।

तथा प्रयाजवचनाश्रयं चोदकाश्रयेण बाध्यते । यथा श्येने माहत्याङ्गभूतानां कर्तृत्वं चोदकप्राप्तं नानार्त्विक्कर्तृकत्वेन ॥ १४ ॥

तथा देवताश्रयं द्रव्याश्रयेण बाध्यते । यथा ऐन्द्रपुरोडाशो देवतासामान्यात्सान्नाय्यविध्यन्तं स्यात्स तु द्रव्यसामान्यादाग्ने-येनाग्नेयविध्यन्तेन बाध्यते । १५ ।

पश्चादाम्नातं पूर्वाम्नातेन यथाऽष्टदशकपालायामामावैष्याय द्वा-दशकपालस्यैन्द्राग्नविकारत्वादामावास्यतन्त्रता सप्तदशसामाज्यभा-गाया प्राप्तं पौर्णमासतन्त्रम् । १६ ।

श्रुत्या लक्षणा बाध्यते । यथा उद्भिदादौ नामधेये श्रुत्या च समानाधिकरण्याद् गुणविधौ प्रसक्ता मत्वर्थलक्षणा निषादस्थ-पत्यादौ च ॥ १७ ॥

श्रुत्यैव गौण्यपि बाध्यते । यथा । बर्हिर्मन्त्रप्रकाश्य गौण कु-शसदृशउलपादिमुख्यकुशरूपार्थेन । १८ ।

लक्षणयापि गौणी बाध्यते । यथोक्तं तद्व्यपदेशाधिकरणे (अ० १ पा० ४ अ० ४) पूर्वपक्षे । वत्सर्गोपादानेन कर्मणि प्रवृत्तावत्यन्तविप्रकृष्टा गौणता स्यादिति । न चैतत्पूर्वपक्षोक्ति-मात्रं सिद्धान्ते क्लृप्तत्वेन गौण्यङ्गीकरणादक्लृप्तत्वे दौर्बल्यस्य स-मतत्वात् । दौर्बल्यबीजं तु लक्षणायां शक्यसम्बन्धमात्रापेक्षणात् । गौण्यां शक्यसम्बन्धिगुणसम्बन्धापेक्षणात् । अत्र स्थितोदाहरणम् । सप्तम । पृष्ठैरुपतिष्ठतइत्यत्र चित्राधिकरणन्यायेन स्तोत्रवचन पृष्ठ-

(१) षष्ठ अ० २ पु० भा० ।

शब्द इति निर्विवादम् । स मासमग्निहोत्रमितिवद् गौण्या हिङ्कारादिपृष्ठधर्मातिदेशार्थं इत्याशङ्क्य गौणीतो बलीयस्या लक्षणया मन्त्रा एव करणतया विधीयन्ते इति सिद्धान्तितम् । ननु उपान्मन्त्रकरणइति मन्त्रकरणके ऽभिधाने ऽर्थे प्रयोजने विवक्षिते ऽपपूर्वात्तिष्ठतेरात्मनेपदस्मरणादभिधानार्थमग्निसमीपे तिष्ठेदित्याख्यानपदार्थावगमात्समीपस्थितौ च पृष्ठधर्माणां हिङ्कारादीनामप्राकृतकार्यतापत्तेरनतिदेश इति न्यायान्तरेणैव सिद्धान्ते उक्तो न लक्षणा प्राबल्यादिति चेत् । सत्यम् । तथापि न्यायद्वयेन सिद्धान्तसाधनं न विरुध्यते । यथा नैमित्तिकेन सामद्वयादिना नित्यपाश्चदश्यादिबाधे यथा वा काम्येन एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्येत्यादिना नित्यनैमित्तिकयोर्बाधे तार्तीये इति । १९ ।

तथा लक्षणानामपि मध्ये लक्षणया लक्षितलक्षणा बाध्यते । यथोक्तं नवमे " यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयादित्यादिः स्वरयोर्नियमो न लक्षितलक्षणया ज्योतिष्टोमापूर्वार्थः किं तु लक्षणया दीक्षाया ऽपूर्वार्थ एवेति । २० ।

तथा लक्षणानां मध्ये अजहत्स्वार्थया जहत्स्वार्था बाध्यते । पूर्वस्यामुख्यार्थस्य वाक्यार्थान्वयात् उत्तरस्यां तदभावात् । एतद्बीजं गौणीतो मत्वर्थलक्षणाया बलीयस्त्वाय तत्प्रख्यपदशास्त्राधिकरणपूर्वपक्षे वार्त्तिककृतोक्तम् । गुणविधिपक्षे हि स्वार्थापरित्यागेनैव श्येनपदं तद्वन्तमुत्तरकाले लक्षयति । आरम्भोच्चारणकाले स्वार्थमेव विनियुङ्क्ते भवतस्तु श्येनार्थानुपयोगात्त्यक्त एव साहश्यविवक्षया पद प्रवृत्तामभ्युपगमात् श्रुतिबाधप्रसङ्ग इति । एतच्च बीजं जहत्स्वार्थाजहत्स्वार्थलक्षणयोरपि बलाबले तुल्यम् । तत्रोदाहरणं स्रुक्कार्येण प्रस्तर प्रहरतीति । अत्र हि श्रुतिविनियुक्तस्य स्रुक्कार्यस्य करणत्वात्तत्प्रकाश्यानां देवतानां संयोगे कल्पिते तदुपपत्त्यर्थं कल्पितो यागः प्रहरतिना लक्ष्यते तत्र यागमात्रं न लक्ष्यते किं तु प्रक्षेपविशेष्यक इति । गौतमीयास्तु यत्र वाच्यलक्ष्ययोरुभयोरपि प्राधान्यं काकेभ्यो दधि रक्ष्यतामित्यादौ तत्रैवाजहत्स्वार्थालक्षणेत्याहुः तत्परिभाषामात्रम् । २१ ।

तदिदमुदाहरणं प्रकृतिरूपैकशब्दविषय प्रकृतिप्रत्ययरूपशब्दभेदविषयं तूदाहरणं यथा । प्रोद्गातृणामित्यत्र उद्गातृप्रातिपदिकं उद्गीथाख्यद्वितीयसामभक्तेर्गातुरेकस्यैव मुख्यस्य पुरुषस्याभिधायकं तत्रोद्गात्रादिपुरुषत्रयलक्षणा अजहत्स्वार्था बहुवचने त्वेकत्वलक्षणा जहत्स्वार्था सा पूर्वया बाध्यमित्युक्तं तृतीये । २२ ।

तथा निरूढलक्षणया अनिरूढलक्षणा बाध्यते । उदाहरणं मृग्यम् । २३ ।

तथैकलक्षणया ऽनेकलक्षणा बाध्यते । यथा दशमे रथघोषेणेत्यत्र समाहारद्वन्द्व इति पूर्वपक्षे पदद्वयलक्षणा स्यात्तत्पुरुषे तु पूर्वपद एवेति स एव युक्त इति सिद्धान्तितम् । २४ ।

तथाल्पलक्षणया बहुलक्षणाबाधः बहुबाधो ऽल्पबाधेनेत्यत्रोदाहृतः । २५ ।

तथा क्लृप्तया लक्षणया अक्लृप्ता लक्षणा बाध्यते ।यथा "ऋग्भिः प्रातर्दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्य" इत्यत्र ऋगादिशब्दानां वेदपरा लक्षणा क्लृप्तेत्युच्चैर्ऋचा क्रियत इत्यत्र ऋगादिशब्दा एव वेदपरा न वेदपदं ऋगादिलक्षकं तल्लक्षणाया अक्लृप्तत्वादिति ।२६।

तथा लक्षणयोरपि कार्यलक्षणया धर्मलक्षणा बाध्यते । यथा वैयातव्या दीक्षणीयेति । २७ ।

तथा गौणीनामपि मध्ये भूमलिङ्गसमवायाख्यां या गौणी तयैतरा गौणी बाध्यते । पूर्वस्यां मत्वर्थलक्षणायामिव वाक्यस्यापि वाक्यार्थान्वयादुत्तरस्यं तदभावात् । २८ ।

तथा भूमलिङ्गसमवाययोरपि पूर्वयोत्तरा बाध्यते । पूर्वस्यां बहूनां वाक्यानां वाक्यार्थान्वयात् उत्तरस्यां तदभावात् । २९ ॥

तथा नियमविधिना अपूर्वविधिर्बाध्यते । यथोपांशु यजुषेति निगदेष्वपूर्वविधित्वापत्तेर्यजुरन्तरेषु नियमविधिरेवाङ्गीकृत. । ३० ।

तथा नियमविधिनैव परिसंख्याविधिर्बाध्यते । यथा ऋतौ भार्यामुपगच्छेदिति । ३१ ।

तथा मन्त्रक्रमेण ब्राह्मणक्रमो बाध्यते । यथोक्तं मन्त्रतस्तु विरोधे स्यादिति । ३२ ।

तथोत्पत्तिशिष्टेनोत्पन्नशिष्टं बाध्यते । यथाऽऽमिक्षया वाजिनम् । ३३ ।

तथा ऽनुवादेन विधित्वं विध्यन्तर्गतिः।यथा ऽवभृथेऽग्नीवरुणौ स्विष्टकृतौ यजतीति स्विष्टकृच्छब्दलक्षिते स्विष्टकृत्त्वविशिष्टाग्निकार्ये ऽग्निवरुणयोर्विधौ विशिष्टस्यानापत्तेरस्विष्टकृच्छब्दकं वचनं कार्यमिति पूर्वपक्षिते यतिना प्राकृतस्विष्टकृद्यागमेवोद्दिश्याग्नीवरुणयोर्विधाने कविशेष्यस्यानापत्तिरेव द्वयोरिति विशेषणं प्राप्तमेवानूद्यते स्विष्टकृतावितीत्युक्तं दशमे । इत्थं सङ्कीर्णोदाहरणादेवानेकार्थविधिरूपार्थविधानेनेत्यनेनागतार्थता । ३४ ।

तथार्थवादत्वेन विधिरर्थं वाध्यते । अर्थवादायोगाद्धि विधिद-त्त उपरि हि देवेभ्यो धारयतीति । यथा " विष्णुरुपांशु यष्टव्य " इत्यादौ । ३५ ।

तथा प्रतिप्रसवविधिना नियमविधिर्बाध्यते । यथा घृते श्रपयतीति श्रपणप्रतिप्रसवस्य घृतनियमस्य चैकत्र वाक्ये कर्तुमशक्यत्वात्पूर्वेणोत्तरबाधे उत्पत्तिवाक्यप्राप्तघृतानुवाद इत्युक्तं दशमद्वितीयपादाद्ये । ३६ ।

तथा प्रतिप्रसवविधिना अपूर्वविधिरपि वाध्यते । यथा " पूषा प्रपिष्टभाग "इति पेषणस्य चरौ प्रतिप्रसवेन पशौ पुरोडाशे चापूर्वविधिः । ३७ ।

तथा वैदिकत्वसामान्योपस्थितेनावैदिकं बाध्यते । यथा ऽऽ-श्वप्रतिग्रहेष्टेर्निमित्तं वैदिकं दानं न लौकिकम् । ३८ ।

तथा ऽनपेक्षितविधिरपेक्षितविधिना बाध्यते । यथा सोमवमनेष्टिर्वैदिकसोमस्य वमने न तु लौकिकस्य । ३९ ।

तथा देवताविधौ तद्धितेन चतुर्थी बाध्यते । यथा वैश्वदेवीति तद्धितेनामिक्षाया विश्वैर्देवैः सम्बन्धं बोधयता वाजिभ्य इति चतुर्थी वाजिनस्य विश्वैर्देवैः सम्बन्धं बोधयन्ती । ४० ।

तथा तद्धितेनैव मन्त्रवर्णो बाध्यते । यथा पात्नीवतं गृह्णातीति तद्धितेन निरपेक्षस्य पत्नीवतो देवतात्वं बोधयता अग्नाइ पत्नीवन्नित्याद्येयमन्त्रवर्णस्त्वष्टृदेवतात्वप्रापकः । ४१ ।

तथा तद्धितेन द्वितीया बाध्यते मृग्यमुदाहरणम् । ४२ ।

तथा चतुर्थ्या मन्त्रवर्णो बाध्यते । यथा सोमेश्वरमते ऽग्निहोत्रे "यदग्नये च प्रजापतये च सायं जुहोती"ति चतुर्थ्या केवलस्याग्नेर्देवतात्वप्रापिकया ऽग्निर्ज्योतिरिति मन्त्रवर्णो ज्योतिष्ट्वविशिष्टस्याग्नेर्देवतात्वप्रापकः । ४३ ।

तथा चतुर्थ्यैव द्वितीयापि बाध्यते । मृग्यमुदाहरणम् । ४४ ।

तथा मन्त्रवर्णेन द्वितीया बाध्यते । यथोपांशुयाजे ऽग्नीषोमीययाज्यामन्त्रवर्णेन ताववृतामाज्यस्यैव नाविति द्वितीयया । ४५ ।

तथा प्रतिनिधिनियमेन द्रव्यनियमविधिर्बाध्यते । यथा प्रतीकेषु । ४६ ।

तथा प्रतिनिधिनियमेनैवाभावे विधिरपि बाध्यते । यथा पूतीकेष्वेव । ४७ ।

तथा ऽनुषङ्गेणाध्याहारो बाध्यते । यथा "याते अग्ने रजाशये"त्यादौ । ४८ ।

तथा फलस्य रूढ्या योगो बाध्यते । यथा रथकार इति ॥ ४९ ।

तथा अन्यत्र योगेन रूढिर्बाध्यते यथा प्रोक्षणीशब्दे । ५० ।

तथा फलप्रजातिवाचित्वेन संस्कारनिमित्तत्वं बाध्यते । यथा बार्हिराज्यपुरोडाशादौ । ५१ ।

तथा फलसंयोगेन संस्कारनिमित्तत्वं बाध्यते यथा प्रोक्षणी-शब्दएव । ५२ ।

तथा यौगिकप्रसज्ञाक्यभेदतत्प्रख्यतद्व्यपदेशेषु नामधेय-त्वेन गुणविधित्वं बाध्यते । निरूढेषु तु गुणविधित्वेनैव नामधेयत्वं बाध्यते सोमादिषु । एते पञ्चबाधभेदा द्विपञ्चाशद्भिः सह सप्तप-ञ्चाशदप्राप्तबाधभेदाः पूर्वोक्तैरेकोनविंशत्यधिकशतसंख्यैरप्राप्तबाध-भेदैः सह षट्सप्तत्यधिकं शतमप्राप्तबाधभेदाः सिद्धाः ॥ १७६ ॥

तथा पूर्वोक्ताः षट्षष्ट्यधिकं शतं प्राप्तबाधभेदा, एते च षट्-सप्तत्यधिकं शतमप्राप्तबाधभेदा मिलित्वा शतत्रयं द्विचत्वारिंशच्च बाधभेदा भवन्ति ॥ ३४२ ॥

एतेषामपि च सर्वेषां बाधभेदानामानर्थक्यप्रतीघाते विपरी-तो बाधो भवति । तेन सर्वे ऽपि द्वैगुण्यमापन्नाः सन्तश्चत्वारि श-तानि चतुरशीतिश्च सम्पद्यन्ते ।

तद्यथा "व्रीहीनवहन्ती"त्यत्र व्रीहिमात्रावघातप्रापिका श्रु-तिः, प्रकरणेन बाध्यते । एवं तत्रैव लक्षणया मुख्य-वृत्तिरपि । श्येनादौ चोपमानानर्थक्याद् गौण्या मत्वर्थलक्षणा बाध्यते । न केवलं तार्तीयप्रमाणमेयानर्थक्यप्रतीघातेन बाध्यते । किं तु द्वैतीयकमपि यथा ऽभ्युदितेष्टौ ये मध्यमा ये ऽणिष्ठा इत्यन-योर्वाक्ययोरनेकार्थोपादानाद्वाक्यभेदापत्तेर्गुणेन कर्मभेदस्य प्रसक्त-स्य सह प्रयुक्तीति विध्यानर्थक्याद् बाधः श्रुत्यादीनां चानर्थक्याभा-वे ऽप्युत्तरोत्तरेणान्यथानुपपत्त्यादिसहकृतेन पूर्वस्य पूर्वस्य बाधो भवति । तस्योदाहरणं प्रपञ्चयामः ।

तद्यथा लिङ्गेन श्रुतिबाधे तावत्स्रुवेणावद्यति स्वधितिना ऽवद्यतीति स्रुवादिरेकः शेषः श्रुत्या द्रवावदाने इतरावदाने चानेकत्र शेषिणि प्राप्तो लिङ्गेन द्रवावदानएव नियमनात् शेष्यन्तरे बाध्यते । तथैकस्मिन्नपि शेषिणि द्रवावदानादौ श्रुत्यैव स्रुवः करणान्तरं चानेक-शेषः प्राप्तस्तत्र लिङ्गेन स्रुवमेव नियच्छता करणान्तरं श्रौतमपि बा-ध्यते वाक्येन लिङ्गबाधे "देवस्य त्वे"ति मन्त्रे सवित्रादिदेवताप्रका-शनसामर्थ्ये तमशं सविभागे विनियुञ्जानं वाक्येन प्रकृतानिर्वापस्य-निर्वापे विनियुञ्जानेन बाध्यते ।

पशौ च "हिरण्यगर्भः समवर्तताग्र" इत्याघारमाघारयतीत्याघारयतेः पूर्वाघारविषयता हिरण्यगर्भमन्त्रलिङ्गादापक्षोत्तराघारे "इन्द्र ऊर्ध्वो ऽध्वर" इति मन्त्रजन्यनियमादृष्टस्य कल्प्यत्वात्तद्विषयतानिश्चये तत्समभिव्याहारात्मकाद्वाक्याल्लिङ्गं बाध्यत इति दशमे स्थितम् । प्रकरणेन वाक्यबाधे श्येने "निवीता ऋत्विजः प्रचरन्ती"ति विहितं निवीतं तार्तीयवेदिबर्हिस्तद्धर्मन्यायेन वाक्यादङ्गप्रधानार्थं प्रसक्तं श्येनप्रकरणात्प्रधानमात्रार्थं भवति । अत एव दशमे तदङ्गेष्वैष्टिकेषु चोदकप्राप्तमुपवीतं भिन्नविषयमिति नारिष्टीयहोमबाधसमुच्चयचिन्ताविषय इति वक्ष्यते ।

नन्वेवं निवीतमङ्गान्तरे ऽपि न स्यात् किं च तार्तीयबर्हिर्वेदिन्यायवैयर्थ्यम् । उच्यते । सौमिकदीक्षादक्षिणवत्प्रधानार्थमेव सत्कर्तृद्वारा प्रयोगाङ्गत्वात्प्रसङ्गादङ्गान्तरेषूपकरिष्यतीति न तदर्थमपि वाक्यमायासनीयम् । प्रधानहविषि तु वेदिबर्हिषोरासादितेनाङ्गहविरासादितं भवतीति तदर्थमपि वाक्यस्य पृथगायासेन भाव्यमिति तार्तीयन्यायवैयर्थ्यमिति ।

क्रमेण प्रकरणबाधे दर्विनामासीति मन्त्रमाग्नेयादिष्वपि विनियुञ्जानं प्रकरणमुपांशुयाजमात्रे विनियुञ्जानेन यथासंख्याम्नानक्रमेण बाध्यते । न ह्यक्रियात्मको मन्त्रो ऽर्थाभिधानक्रियावेशेन ग्राह्यः । अथ चास्पष्टलिङ्गो ऽस्यार्थस्याभिधायक इत्यज्ञानात्कथं प्रकरणविषय इति वाच्यम् । मिश्रमते उच्चारणावेशेनैव ग्रहणसम्भवात् । अन्यत्प्रकाशे ज्ञेयम् ।

समाख्यया क्रमबाधे ज्योतिष्टोमे वरणोपासनामृत्विजां सन्निधानात्सर्वत्राव्यवस्थया कर्तृत्वे प्राप्ते समाख्यया व्यवस्था । एवमेकान्तरिताद्यपीति पञ्चदशैते ऽपि बाधाः ते ऽपि शेषशेषिभेदाद् द्विगुणास्त्रिंशत्पूर्वैश्चतुरशीत्यधिकशतचतुष्टयसंख्यैः सह चतुर्दशाधिकानि पञ्चशतानि बाधभेदा भवन्ति ॥ ५१४ ॥

तथा प्रत्यक्षैः श्रुत्यादिभिरानुमानिकानां श्रुत्यादीनां बाधः । यथा श्येनादौ "शरमयं बर्हिरि"ति प्रत्यक्षश्रुत्या "बर्हिषि हवींष्यासादयती"त्यानुमानिकश्रुतेः । त इमे पञ्चदश बाधाः । १५ ।

तथा ऽऽनुमानिकैः श्रुत्यादिभिरानुमानिकानां तेषां बाधः । यथा पशावनुमेयैः प्रयाजादिविनियोजकैः श्रुत्यादिभिः पशुपुरोडाशे तद्विनियोजकानामानुमानिकानां श्रुत्यादीनाम् । ते ऽपि पञ्चदश बाधाः । तथा ऽऽनुमानिकानां श्रुत्यादीनां प्रत्यक्षैर्लिङ्गादिभिर्बाधः । यथा कृष्णलेषु सामर्थ्येन व्रीहीनवहन्तीत्यतिदेशानुमितश्रुतेः । ते

अपि पञ्चदश । एवं पञ्चचत्वारिंशद्बाधभेदाः पूर्वोक्तैश्चतुर्दशाधिकपञ्चशतमितैर्बाधभेदैः सह एकोनषष्ट्यधिकं शतपञ्चकं बाधभेदा भवन्ति । ५५९ ।

ये केऽपि तत्र तत्र स्युर्बाधा न्यायसहस्रगाः ।
तत्रैवान्तर्भवन्तीति न भेदान्तरसम्भवः ॥

प्रमाणानामिव च न्यायानामप्यन्योन्यं तत्र बाध्यबाधकभावो भवति तं वाक्यभेदनिरूपणग्रन्थानन्तरं निरूपयिष्याम ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्मजभट्टशङ्करकृते मीमांसाबालप्रकाशे दशमाध्यायार्थसङ्ग्रहः ।

---

अथैकादशाध्यायार्थः । तत्र तन्त्रलक्षणमुक्तमेव, साधारणं भवेत्तन्त्रमिति । अत्र साधारणशब्दो विशेषाग्रहणमाह ततश्च विशेषग्रहणे सति प्रसङ्गाप्रयोजकत्वं भवत । विशेषाग्रहणे तु तन्त्रं सकृदनुष्ठानमित्यर्थः । विशेषाग्रहणं च सप्तधा ।

फलकामनातो निमित्ततो रूपतः संख्यातः कालतो मन्त्रतः कर्तृतश्चेति ।

तन्त्रं च प्रधानानामङ्गानां चेति द्विविधम् । यथा सान्नाय्ययागयोः प्रयाजानां च दर्शपूर्णमासयोः । तत्र चोभयत्र पूर्वोक्त सप्तधा विशेषग्रहणं नास्ति । आद्ये स्वर्गकामनाया द्वितीये करणोपकारकामनाया अविशेषात् न ह्यत्र काम्याग्निहोत्रेण नित्याग्निहोत्रप्रसङ्ग इव कामनातो विशेषग्रहणमस्ति । न चोक्त तन्त्रोदाहरणद्वये निमित्ततो विशेषग्रहणमस्ति यथा वैश्वानिमित्तकसामद्वयेन नित्यपात्रद्वयस्य प्रसङ्गसिद्धौ । न च तन्त्रोदाहरणद्वये द्रव्यदेवतारूपतो विशेषग्रहणमस्ति यथा पाशुकैः पृषदाज्येनानुयाजान्यजतीति पृषदाज्यद्रव्यकैरनुयाजैः केवलाज्यद्रव्यकाणामनूयाजानां पौरोडाशिकानां प्रसङ्गसिद्धौ । नापि पूर्वोक्ततन्त्रोदाहरणद्वये संख्यातः कालतो वा विशेषग्रहणमस्ति यथा पाशुकैः "प्रयाजैस्तिष्ठन्तं पशुमयजन्ती"ति तिष्ठतिपशावपकृष्यमाणैरेकादश प्रयाजान्यजतीत्येकादश

संख्याकेभ्यः पौरोडाशिकानामासन्नेषु हविःषु प्रयजन्तीति हविरासाद-नोत्तरकालविहितानां पञ्चसंख्यानां चातिदेशिकानां प्रयाजानां प्रस-ङ्गसिद्धौ । न च प्रागुक्ततन्त्रोदाहरणद्वये मन्त्रतः कर्तृतो वा विशेष-ग्रहणमस्ति यथा सवनीयपशौ मैत्रावरुणकर्तृकाग्निमद्यहोतारमवृ-णीतायं सुतासुती यजमान इत्यग्नीषोमीयादनतिदिष्टात्सूक्तवाकप्रैषा-त्सन्निधौ सवनीयहविरङ्गानां मैत्रावरुणपठितानां प्रसङ्गोपकारित्वे । तदुक्तं शास्त्रे । पशुसवनीयेषु विकल्पः स्यादित्यत्र । तस्मात्समर्थ-विशेषाग्रहणे तन्त्रं भवतीति सिद्धम् । सत्यपि च विशेषग्रहणे प्रस-ङ्गो भवतीत्यपि सिद्धम् । तत्र च प्रसङ्गात्सप्तविधान्युदाहरणान्य-प्युक्तानि ।

अथ तन्त्रं त्रिविधम् । तत्र द्विविधमुक्तं प्रधानतन्त्रमङ्गतन्त्रं च प्रधानाङ्गतन्त्रं च तृतीयम् ।

प्रधानतन्त्रमपि त्रिविधम् । प्रकृत्योर्विकृत्योः प्रकृतिविकृत्यो-श्च । तत्र प्रकृत्योर्यथा सान्नाय्ययोरित्युक्तम् । द्वितीयं यथा । आहि-ताग्नेर्युगपदनेकगृहदाहादौ क्षामवत्यादीनाम् । तृतीयभेदे श्रौतमुदा-हरणं मृग्यम् ।

स्मार्तं तु हेमाद्रिणोक्तम् । अमावास्याव्यतीपातश्राद्धादीना-मेकदिनकर्तव्यत्वापत्ताविति ।

अङ्गतन्त्रमपि त्रेधा । उपदिष्टानामेवाङ्गानामन्योन्यम् । यथो-दाहृतं दर्शाङ्गानां प्रयाजानाम् ।

उपदिष्टातिदिष्टयोरन्योन्यं यथा "दीक्षासु यूपं छिनत्ती"त्यप-कृष्यमाणस्याग्नीषोमीये उपदिष्टस्य सवनीये चातिदिष्टस्य यूपस्य तत्संस्काराणां चान्योन्यम् ।

अतिदिष्टानामेवान्योन्यं यथा वरुणप्रघासेषु उत्तरे वि-हारेऽष्टसु हविःषु अतिदिष्टानां प्रयाजानां तन्त्रम् । प्रधानाङ्गतन्त्रं तु द्वेधा ।

प्रकृतिप्रधानस्य स्वाङ्गविकृत्या सह तन्त्रं यथा "यस्योभयं ह-विरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदि"ति सान्नाय्ययागाङ्गभूत-या ऽऽग्नेययागविकृतिभूतयेष्ट्या सह सान्नाय्ययागस्य तन्त्रम् । तथा विकृतिप्रधानस्य स्वाङ्गविकृत्या तन्त्रं यथा ऐन्द्रस्यामिक्षायागस्य प्रधानभूतस्यामिक्षार्तौ चातिदिष्टेन तदङ्गभूतेन विकृतिरूपेण सा-न्नाय्यहविरार्तिनिमित्तकैन्द्रपञ्चशरावयागेन सह तन्त्रम् । न चो-क्तोदाहरणद्वये प्रसङ्ग एवेति वाच्यम् । सान्नाय्यवद् द्रव्यभेदाद्दैव-तैक्याच्च । तदेवमष्टविधं तन्त्रं निरूपितम् ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमी-
मांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्म-
जभट्टशङ्करकृते मीमांसाबालप्रकाशे
एकादशाध्यायार्थसंग्रहः ।

---

अथ द्वादशाध्यायार्थः । तत्र विशेषग्रहणे सकृदनुष्ठानं प्रसङ्ग इत्युक्तमेव । विशेषग्रहणं च सप्तधा फलतो निमित्ततो रूपतः संख्यातः कालतो मन्त्रतः कर्तृतश्चेत्यप्युक्तमेव । तदुदाहरणान्यप्युक्तान्येव एकादशे । इदानीं भेदा एव निरूप्यन्ते । प्रसङ्गस्त्रिविधः । प्रधानप्रसङ्गो ऽङ्गप्रसङ्गः प्रधानाङ्गप्रसङ्गश्चेति ।

तत्र प्रधानप्रसङ्गस्त्रिविधः । प्रकृत्योर्विकृत्योः प्रकृतिविकृत्योश्च ।

तत्र प्रकृत्योः प्रसङ्गो यथा । काम्येनाग्निहोत्रादिप्रयोगेण नित्यतत्प्रयोगस्य प्रसङ्गः ।

विकृतिप्रधानयोः प्रसङ्गो यथा या विकृतयो निमित्ते कामे च विहितास्तत्र युगपन्निमित्तफलकामोत्पत्तौ अग्निहोत्रवदेव काम्यप्रयोगेण नित्यप्रयोगस्य प्रसङ्गसिद्धिः । स्मार्तोदाहरणं तु दर्शश्राद्धविकृतिभूतयोर्महालयापरपक्षश्राद्धनित्यश्राद्धयोर्मध्ये पूर्वेणोत्तरस्य प्रसङ्गसिद्धिः ।

प्रकृतिविकृतिप्रसङ्गस्तु द्विविधः प्रकृत्या विकृतेर्विकृत्या वा प्रकृतेः । तत्रोभयत्र श्रौतमुदाहरणं मृग्यम् । स्मार्तं तु आद्योदाहरणं यथा दर्शश्राद्धेन नित्यश्राद्धस्य प्रसङ्गसिद्धिरिति । द्वितीयोदाहरणं तु यथा । तीर्थश्राद्धेन दर्शश्राद्धस्य प्रसङ्गसिद्धिरिति ।

अङ्गप्रसङ्गस्तु षोढा । तद्यथा । औपदेशिकेनाङ्गेनौपदेशिकस्याङ्गस्य प्रसङ्गः । यथा वैश्यनिमित्तकेन साप्तदश्येन नित्याङ्गस्य पाञ्चदश्यस्य ।

तथा काम्येन नित्यस्य नैमित्तिकस्य च । यथा प्रतिष्ठार्थस्यैकविंशत्यनुवचनस्याङ्गेन एकविंशतित्वेन नित्यस्य पाञ्चदश्यस्य वैश्यनिमित्तकस्य च साप्तदश्यस्य प्रसङ्गसिद्धिः ।

तथा औपदेशिकेनाङ्गेनातिदेशिकस्य प्रसङ्गो यथा । दर्शार्थेन प्रयाजादिना निशीथार्थस्य प्रयाजादेः प्रसङ्गसिद्धिः ।

तथा आतिदेशिकेनातिदेशिकस्य प्रसङ्गो यथा । पशुधर्मेण प्रयाजादिना पशुपुरोडाशार्थस्य प्रयाजादेः प्रसङ्गसिद्धिः ।

तथा आतिदेशिकेनौपदेशिकस्य प्रसङ्गो यथा । श्येने ऽतिदिष्टैः कर्तृभिः प्रयोगविधितश्चादकलीयस्त्वेन प्रापितैः श्येनस्योद्गात्रसमाख्यया प्रापितस्योद्गातुः कार्यसिद्धेः प्रसङ्गः प्रधानाङ्गप्रसङ्गश्चतुर्धा । प्रकृतिप्रधानेनाङ्गस्य प्रसङ्गसिद्धिः । अङ्गेन च प्रकृतिप्रधानस्येति द्वौ भेदौ । विकृतिप्रधानेनाङ्गस्य प्रसङ्गसिद्धिः । अङ्गेन च विकृतिप्रधानस्येति द्वौ भेदाविति । एषु चतुर्ष्वपि भेदेषु श्रौतोदाहरणानि मृग्याणि ।

स्मार्तानि सूच्यन्ते । तत्राद्ये भेदे उदाहरणं यथा । काम्येनामावास्याश्राद्धेन यात्राद्यङ्गभूतश्राद्धस्य प्रसङ्गसिद्धिः ।

द्वितीयभेदे उदाहरणं यथा यात्राद्यङ्गभूतश्राद्धेन नित्यामावास्य प्रसङ्गसिद्धिः । तृतीयभेदोदाहरणं यथा काम्यभरण्यादिश्राद्धेन यात्राद्यङ्गभूतश्राद्धस्य प्रसङ्गसिद्धिः । चतुर्थभेदोदाहरणं यथा यात्राद्यङ्गभूतश्राद्धेन नित्यश्राद्धस्य प्रसङ्गसिद्धिरिति ॥ तदेवंचतुर्दशविधः प्रसङ्गो निरूपितः ॥

अथ द्वादशे ऽध्याये एकार्थास्तु विकल्पेरन्नसमुच्चये ह्यावृत्तिः स्यात्प्रधानस्येत्यधिकरणे ( पा० ३ । अ० ४ ) व्रीहियवादीनां विकल्पे एकार्थत्वं हेतुरुक्तः । तेन न दृष्टार्थत्वं तत्र हेतुः द्वादश ( पा०३अ०५ )एव दर्शपूर्णमासात्ययजदोषनिर्घातार्थानां पवित्रवत्वेष्ट्यानरीयादीनां विकल्प उक्तस्तानि चादृष्टार्थानीति दृष्टार्थत्वहेतुरव्यापकः ।

तथा पञ्चमे परेणावेदनाद्दीक्षितः स्यादित्यधिकरणे ( पा० ३ । अ० ११ ) काम्यानामेकार्थानां कर्मणां विकल्पः सम्भरति उक्तस्तत्राप्यव्यापको ऽदृष्टार्थत्वहेतुः अत एकार्थ्ये सूत्रे हेतुरुक्तः तत्रापि श्रुतं साम्य गृहीत्वैकार्थ्यं बोध्यम् । न त्वश्रुतमवान्तरकार्यं गृहीत्वा काम्यानामेकफलानां कर्मणां तदभावात् । नन्वेवमाग्नेयादीनामेकार्थ्याद्विकल्पापत्तिः । अत्र समादधे भट्टसोमेश्वरः । निरपेक्षसाधनत्वमपि विकल्पे हेतुः समर्थः पदविधिरिति हि स्मृत्या पदसम्बन्धिविधिमात्रे सामर्थ्यापेक्षोक्तेः समासो यथा पदयोर्विधिरिति कृत्वा पदविधिरयं पदत्वसम्पादकः सुब्विधिरपि पदविधिरिति तृतीयादिविभक्त्यापि सामर्थ्यं प्रतीयते । तच्च व्यपेक्षारूपम् । विगतापेक्षत्वं च व्यपेक्षा । तेन निरपेक्षसाधनत्वावगमाद् व्रीह्यादौ विकल्पः । आग्नेयादीनां तु फलवाक्ये उपादेयत्वाद्यजतिरूपैकशब्दोपा-

दानाद् द्वन्द्वश्रवणाच्च साहित्यविवक्षया निरपेक्षसाधनत्वाभावान्न विकल्पापत्तिरिति ।

तदयुक्तम् । पञ्चमे हि परेणावेदनाद्दीक्षित स्यादित्यत्र दण्डेन दीक्षयति मेखलया दीक्षयतीति तृतीयया दीक्षाया दण्डादीनां समुच्चय उक्तः । सोऽनुपपन्नः स्यात्तृतीयया निरपेक्षसाधनत्वावगमात् । न च यथा समेकस्मिन्नपि क्रये निरपेक्षसाधनत्वेनैकहायन्यादीनां समुच्चयस्तथा दण्डादीनामपीति वाच्यम् । दृष्टादृष्टार्थत्वेन वैषम्यात् । अजादीनां ह्येकहायन्यसिद्धानत्यतिरिक्तरूपदृष्टार्थत्वान्नैकहायनीमात्रेण क्रयो निराकाङ्क्षो भवतीति युक्तः समुच्चयः । दण्डादीनां तु दीक्षाभिव्यञ्जकत्वम् । इष्टेस्तु तदुत्पादकत्वं दीक्षा चादृष्टरूपा अतस्तदुत्पादकेन नाभिव्यञ्जककाङ्क्षानिवृत्तिः । अभिव्यञ्जकानेकत्वे ऽपि च नान्यतरेणान्यतराकाङ्क्षानिवृत्तिः । अतो दण्डादिसमुच्चयसिद्धान्तभङ्गापत्तेर्न निरपेक्षसाधनत्वं विकल्पहेतुः । अत आग्नेयादीनामैकार्थ्याद्विकल्पापत्तिर्मिथ्याकर्तव्येव समाधेया । तर्हि परेणावेदनादित्यत्र तन्त्ररत्ने उक्तम् । ऐकार्थ्यवत्समुच्चयप्रमाणाभावो ऽपि विकल्पहेतुः । समुच्चयप्रमाणं च युगपत्सर्वाङ्गप्रभावग्राही प्रयोगवचनम् । स चाग्नेयादिषु एकशब्दोपादानद्वन्द्वगर्भो ऽस्तीति न समुच्चयप्रमाणाभावः । व्रीहियवादौ तु स्वार्थे ऽन्यतरेणैव चरितार्थत्वात्सौ समुच्चयेन गृह्णातीति समुच्चयप्रमाणाभावः । काम्यानां त्वेकार्थानां कर्मणामेकप्रयोगवचनाभावादेव समुच्चयप्रमाणाभावः । एवं द्वादशे दर्शपूर्णमासातिपत्त्यर्थनिमित्तकानां पथिकृद्वैश्वानरीयादीनामेकप्रयोगवचनाभावादेव समुच्चयप्रमाणाभावः । दण्डादिषु तु एकप्रयोगवचनसत्त्वाददृष्टार्थत्वेन च व्रीहियवन्यायाभावात्समुच्चयप्रमाणमस्तीति युक्तः समुच्चय इति सर्वं सुस्थम् ।

इति विकल्पप्रयोजकनिरूपणम् ।

अथ विकल्पदोषनिरूपणम् । तत्र द्वयोर्विकल्पे तावदष्टौ दोषाः । तथा हि व्रीह्यनुष्ठाने यवशास्त्रस्य प्रतीतप्रामाण्यत्यागः अप्रतीताप्रामाण्यकल्पनं चेति द्वौ दोषौ । तथा पूर्वं यवानुष्ठानसमये व्रीहिशास्त्रे त्यक्तस्य प्रतीतप्रामाण्यस्य पुनरुज्जीवनम् । अप्रतीतस्य चाप्रामाण्यस्य कल्पितस्य त्याग इति द्वौ दोषौ । तदेवं व्रीह्यनुष्ठाने यवशास्त्रे द्वौ व्रीहिशास्त्रे च द्वाविति चत्वारो दोषाः । एवं यवानुष्ठाने ऽपि व्रीहिशास्त्रे द्वौ दोषौ यवशास्त्रे च द्वाविति चत्वारः । एवं वस्तुद्वयविकल्पे ऽष्टौ दोषाः । एवं वस्तुद्वयविकल्पे प्रतिशास्त्रं दोषचतुष्कापत्तौ वस्तुत्रयविकल्पे एकशास्त्रवृद्ध्या दोषचतुष्कवृद्धे

द्वादशदोषाः ।

नन्वेकस्मिन्युगले दोषाष्टकप्रसक्तौ प्रतियुगलं दोषाष्टकवृद्धेस्त्रिविकल्पे त्रीणि युगलानीति चतुर्विंशतिर्दोषाः स्युः ।

एवं चतुष्टयविकल्पे षड्युगलानीति षडष्टकानि अष्टाचत्वारिंशद्दोषाः स्युरिति चेत् । न । स्याद्धि एतद्यदि सामयिकानां प्रामाण्यत्यागानां सामयिकानां चाप्रामाण्यकल्पनानां भेदः स्यान्न तु तदस्ति । त्रिविकल्पे हि शाखाद्वयार्थानुष्ठानसमन्वये ऽप्यननुष्ठीयमानार्थकतृतीयशाखा कृत. प्रामाण्यत्याग एक एव न समयभेदाद्भिन्नः । एवमप्रामाण्यकल्पनमपि न समयभेदाद्भिन्नम् । ततश्च त्रिविकल्पे तृतीयशाखे तौ द्वावेव दोषौ तद्विपर्ययरूपौ च द्वावेव दोषाविति द्वादशैव दोषा इति द्विविकल्पप्रसक्तदोषाष्टकातिरिक्तं दोषचतुष्कस्यैव प्रवृत्तेश्चतुर्विकल्पे षोडश दोषाः । पञ्चविकल्पे विंशतिः । षड्विकल्पे चतुर्विंशतिः । सप्तविकल्पे ऽष्टाविंशतिः । अष्टविकल्पे द्वात्रिंशत् । नवविकल्पे षट्त्रिंशत् । दशविकल्पे चत्वारिंशदग्निहोत्रद्रव्येषु । एवमुत्तरत्रापि शाखासंख्यातश्चतुर्गुणा दोषाः उन्नेया. ।

इति विकल्पगतदोषनिरूपणम् ।

अथ विकल्पभेदा. । तत्र प्रथमं तावद्विकल्पः सर्वो ऽपि त्रिविध. । न्यायगम्यः, वाचनिक , वैच्छिकश्चेति । तत्राद्यो ऽष्टविधः । जात्योर्द्रव्ययोर्गुणयोः क्रिययोर्जातितदभावयोर्द्रव्यतदभावयोर्गुणतदभावयो. क्रियातदभावयोश्चेति ।

तत्र जात्योर्विकल्पो यथा व्रीहियवयोः । इह च यद्यपि द्रव्यविकल्पो ऽप्यस्ति तथापि द्रव्यपरिच्छेदरूपव्यापारवत्त्वात्मककरणत्वस्य जातौ सम्भवात् द्रव्यलक्षणां विना जात्योरेव करणत्वोपदेशे तयोरेवादौ विकल्पो भवति । जातेः करणत्वान्यथानुपपत्त्या द्रव्यकरणत्वज्जातिविकल्पान्यथानुपपत्त्या द्रव्यविकल्पः प्रसूतो भवन्न स्वातन्त्र्येण व्यपदिश्यत इति । १ ।

द्रव्ययोर्विकल्पो यथा दर्शपूर्णमासयोरग्नीषोमीयैकादशद्वादशकपालयोः शाखाभेदेनाम्नातयोर्विकल्पः शाखान्तराधिकरणोउक्तः । यौगिकानां हि द्रव्यवाचितोक्ता ।

सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयतइति । २ ।

गुणयोर्विकल्पो यथा कृष्णसारङ्गो ऽग्नीषोमीयः । लोहितसारङ्गो ऽग्नीषोमीय इति । ३ ।

क्रिययोर्विकल्पो यथा । ज्योतिष्टोमे बहिःपवमानं प्रसर्पताम-

न्योन्यकच्छधारणे "यदि प्रस्तोता ऽपच्छिद्याद् ब्रह्मणे वरं दद्याद्यदि प्रतिहर्त्ता सर्ववेदसं दद्याद्युद्गाता ऽदक्षिणो यज्ञः परिसमाप्यते तेन पुनर्यजेत यत्पूर्वस्मिन्दास्यन्स्यात्तद्दद्यादि"ति विशिष्टदानादिनैमित्तिकविधीनां युगपदपच्छेदे विकल्प इति षष्ठे ( पा० ५। अ० १८ ) उक्तम् । ४ ।

जातितदभावयोर्द्रव्यतदभावयोश्चविकल्पोदाहरणे यथा वाजसनेयिनाम् । " कृत्तिकानक्षत्रसम्भारचातुर्मास्यजागरणदम्भपूर्वाधोऽन्वारम्भणसार्पराज्ञीभ वा कुर्यादि"त्याधाने श्रुतम् । तदिह नक्षत्रशब्देन कृत्तिकायुक्तेर्जातितदभावयोर्विकल्पः । सम्भारचातुर्मास्यशब्दयोश्च यौगिकत्वेन द्रव्यवाचित्वाद् द्रव्यतदभावयोर्विकल्पः । अत्र वाशब्दश्रवणे ऽपि न वाचनिको विकल्पः किं तु विधिनिषेधवशान्न्यायत एवेति वाशब्दो ऽनुवादः । ५ । ६ ।

गुणतदभावयोर्विकल्पो यथा दार्शिकवेदिमाने वाजसनेयिनामेव वेदिपरिमाणविशेषतदभावयोः । व्याममात्री पश्चात्स्यादित्याहुरिति नात्र मात्रास्तीति च शतपथात् । ७ ।

क्रियातदभावयोर्विकल्पो यथा।"अतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनं गृह्णाती"ति । ८ ।

तदेवमष्टविधो न्यायगम्यो विकल्पः । सो ऽयं न्यायगम्यो विकल्पः क्रत्वर्थपुरुषार्थभेदेन द्विविधः । तत्राष्टविधो ऽपि क्रत्वर्थ उदाहृत एव । स चाष्टविध एव जातिद्रव्ययोर्जातिगुणयोर्जातिक्रिययोर्द्रव्यगुणयोर्द्रव्यक्रिययोर्गुणक्रिययोरिति द्विकविषयाः षट् तथा जातिद्रव्यगुणानां जातिद्रव्यक्रियाणां जातिगुणक्रियाणां द्रव्यगुणक्रियाणां वेति त्रिकविषयाश्चत्वारो भेदास्तथा चतुष्टयविषय एक इत्येकादशभेदा न सम्भवन्त्येकार्थ्याभावात् । पुरुषार्थस्य त्वेते ऽप्येकादश सम्भवन्ति पूर्वोक्ताष्टाविध्येकोनविंशतिविधो ऽसौ ।

तत्र न्यायगम्यः पुरुषार्थजात्योर्विकल्पो यथा । "वानस्पत्येन ब्रह्मवर्चसकामस्य प्रणयेदि"ति वाजसनेयिनामुक्तम् । "कांस्येन ब्रह्मवर्चसकामस्य प्रणयेदि"ति तु चतुर्थे उदाहृतम् । अत्र हि जातिरेव फलार्थं विधीयते।यथा "औदुम्बरो यूपो भवती"त्यत्रातिदेशेन "यस्य पर्णमयी जुहूर्भवती"त्यत्र च जुह्वा जुहोतीत्यनेन द्रव्यप्राप्तेर्जातिमात्रं क्रत्वर्थत्वेन विधीयते । तथा कांस्यवानस्पत्यवाक्ययोरपि "चमसेनापः प्रणयेदि"त्यनेनाकारविशिष्टद्रव्यप्राप्तेर्जातिरेव फले विधीयते । अत एव वानस्पत्यकांस्यमये चमसाकारे एव पात्रे कर्त्तव्ये । तदुक्तं तन्त्ररत्ने चतुर्थे नैमित्तिके विकारत्वादित्यधिकरणे । ( पा० ३ ।

अ० २ ) ननु प्रणयने विशेषत एव चमसो विहितः सत्यम् ।
न तु स कांस्यविधिना विरुध्यते । आकारवाची हि चमसशब्दो न प्रकृतिविशेषमपेक्षते यक्यते हि कांसेनापि तदाकृतिकं पात्रं सम्पादयितुं सामान्यविहितं होमार्थं धारणमेव तेन विरुध्यत इति प्रन्थेन । तस्माज्जात्योरेवात्रैकस्मिन्फले विहितयोर्न्यायगम्यो विकल्प इति । १ ।

न्यायगम्यः पुरुषार्थद्रव्यविकल्पो यथा । "गोदोहनेन पशुकामस्य प्रणयेदि"तियत्रैगिकेनैव शब्देन द्रव्यान्तरस्य पशुफलार्थत्वेन विहितस्य विकल्पो भवति । २ ।

न्यायगम्यः पुरुषार्थगुणविकल्पो यथा । "यदि कामयीत वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुयादि"ति वृष्ट्यर्थविहितनीचैर्मानाख्यगुणेन सह वृष्ट्यर्थविहितगुणान्तरस्य विकल्प इति । ३ ।

न्यायगम्यः पुरुषार्थक्रियाविकल्पो यथा । एकार्थानां काम्येष्टीनाम् । ४ ।

न्यायगम्यस्य पुरुषार्थजातितदभावयोर्द्रव्यतदभावयोर्गुणतदभावयोश्च विकल्पस्योदाहरणानि मृग्याणि । ५ ।

पुरुषार्था हि जातिद्रव्यगुणा गुणफलसम्बन्धेष्वेव सम्भवन्ति तेषां च विकल्पसिद्ध्यर्थो निषेधा यद्यप्यभागिप्रतिषेधसूत्रे वार्त्तिककृता वैयर्थ्यान्निरस्तास्तथापि यत्र तद्विषया गुणफलसम्बन्धविषयः सामान्यतः प्रवृत्ताः सामान्यत एव च तन्निषेधाः ।

अभिचारमहीनं च कृत्वा चान्द्रायणं चरेदिति ।

काम्याहीननिषेधवत्तत्र पुरुषार्थस्यापि जात्यादित्रयस्य विकल्पः सम्भवति । वार्त्तिककृदुक्तं तु वैयर्थ्यं निषेधस्याननुष्ठानमात्रफलकत्वाऽभ्युपगमेन तस्य तु दोषार्थत्वाद्वस्तुतो न वैयर्थ्यम् । निषेधाभावे हि काम्यस्य कामनायामपि सत्यामैच्छिकाननुष्ठानसिद्धावपि काम्याननुष्ठाने दोषो न सिध्येदिति तदनुष्ठाने दोषबोधनेनार्थवन्निषेधः । यथा ।

अभिचारमहीनं च कृत्वा चान्द्रायणं चरेदिति ।

काम्यानामहीनानां निषेधः । तादृशानि तु पुरुषार्थजात्यादित्रयविषयाण्युदाहरणान्यन्वेष्याणि ।

न्यायगम्यः पुरुषार्थक्रियातदभावयोस्तु विकल्पो यथा । अहीनविकल्पएवोक्तः । उदाहरणान्तरमपि यथा । पिण्डपितृयज्ञे जीवत्पितृकस्य होमान्तं जीवत्पितुरनारम्भो वेति । पिण्डपितृयज्ञो विहितो निषिद्धश्च तत्र पुरुषार्थक्रियातदभावयोर्विकल्पो न्यायगम्यः । न चात्र वाचनिको विकल्पो वाशब्दादिति प्र-

मितव्यं विहितप्रतिषिद्धस्य न्यायादेव विकल्पो भवति षोडशिग्रहणाग्रहणयोरिवेति वाशब्दस्यानुवादत्वादिति ॥ ८ ॥

एवं जातिद्रव्यादीनामेकादश ये विकल्पभेदास्तेषामप्युदाहरणान्यन्वेष्याणि। एवं न्यायगम्य एकोनविंशतिविधो विकल्पो निरूपितः। एवमेव वाचनिकस्यापि विकल्पस्यैकोनविंशतिर्भेदा ज्ञेया। तत्र त्वर्थजातिविकल्पे वाचनिके उदाहरणं मृग्यम्।

क्रत्वर्थद्रव्यविकल्पस्तु वाचनिको यथा "य इष्ट्या पशुना सोमेन वा यजेत सो ऽमावास्यायां पौर्णमास्यां वे"ति। न चायं न्यायगम्यो होमान्ते जीवत्पितुरनारम्भो वेतिवद्वाशब्दस्त्वनुवाद इति वाच्यम्। तत्र ह्येकवाक्योपादानाभावात्समुच्चयासम्भवाच्च न्यायाद्विकल्पः। इह त्विष्टिपशुसोमानामुद्देश्यानां भेदादेकवाक्यान्तर्गतत्वसम्भवे ऽपि इष्ट्युद्देशेन कालद्वयविधेरेव पश्वुद्देशेन सोमोद्देशेन च कालद्वयविधेः प्रयोगविधिरवेन "द्वादशाहेन प्रजाकामं याजयेदि"त्यनेकगुणफलान्वयाविधिवदुत्पत्तिविधित्वे ऽप्यनेकगुणविधिनिमित्तवाक्यभेदाभावादेकवाक्योपादानेन समुच्चयप्रसक्तौ वाशब्देन वाचनिक एव विकल्पः अत एव वाशब्दोपादानाभावे दृष्टार्थयोरपि गुणयोरेकवाक्योपादानात्समुच्चय उक्तो वैश्वानराधिकरणे वार्त्तिककृता। यदि चैकं वाक्यं भवेत्ततः सर्वविशिष्टैकभावनाविधानाच्च विकल्पः स्यादिति। प्रयोगविधित्वाच्च वाक्यभेदपरिहारसम्भवे तदर्थं पौर्णमास्यमावास्यापदाभ्यां पर्व लक्ष्यते ततश्चोक्तो विकल्पः पशुना यजेतेत्यत्रायं वा पशुरयं वा पशुरिति यदित्यभिधानं मूर्खस्योपेक्ष्यम्।

वाचनिकः क्रत्वर्थगुणविकल्पो यथा "युग्वा अयुग्वा मुष्टीर्लुनाती"ति। इहापि न न्यायाद्विकल्पसिद्धिः युजां चायुजां च मुष्टीनामेकवाक्योपादानेन समुच्चयप्रसक्तौ वाशब्देन वाचनिकत्वादेव विकल्पस्य। अत्र हि मुष्टीर्लुनातीति विहिते ऽपि लवने कालादिप्रयोगविधिचिन्हाभावे ऽपि च युग्युक्पदलक्षितोभयविशिष्टैकविकल्पविधानाच्च वाक्यभेदः। यथा रथन्तरं वेत्यत्र वक्ष्यते।

*वाचनिकः क्रत्वर्थक्रिययोर्विकल्पो यथा "रथन्तरं पृष्ठं भवति* बृहत्पृष्ठं भवती"ति वाक्यद्वयविहितपृष्ठस्तुत्योर्विकल्पमात्रे रथन्तरं वा पृष्ठं भवति बृहद्वा पृष्ठं भवतीति वाशब्द(१)लक्षितैकविकल्पविधिः। ननु पृष्ठद्वयोद्देशे वाक्यभेदः स्यात्। न। नैकत्वं विवक्षितं न द्वित्वं

(१) [illegible]

किं तु पृष्ठमात्रमुद्दिश्य विकल्पविधौ विधेयविकल्पसामर्थ्यादेव पृष्ठद्वयलाभादिति। क्रत्वर्थयोस्तु जातितदभावयोर्द्रव्यतदभावयोर्गुणतदभावयोः क्रियातदभावयोश्च ये वाचनिका विकल्पास्तदुदाहरणानामेवं विधो विषयः। यत्र विकृतावातिदेशिकजात्यादिचतुष्टयस्य निषेधा वाशब्दयुक्ताः श्रुताः प्राकृतजात्यादेव वा वाशब्दयुक्तं श्रुतं तत्रासौ चतुर्विधोऽपि विकल्पः सम्भवति। न च तत्र न्यायाद्विकल्पसिद्धिर्वाशब्दार्थविध्यभावे हि औपदेशिकेन निषेधेन "न तौ पशौ करोतीतिवत्प्राकृतस्य जात्यादेर्बाध एव स्यादतो न्यायादसिद्धत्वाद्वाचनिको विकल्प इति। तादृशानि चोदाहरणानि मृग्याणि॥ ८॥

एवं जातिद्रव्यादीनामेकादश ये विकल्पभेदास्तेषामपि वाचनिकानामुदाहरणान्यन्वेष्याणि। यथा। "पयसा पायसेन वा श्राद्धं कुर्वीतेत्यादीनि वाचनिक एवापुरुषार्थजात्योः पुरुषार्थद्रव्ययोः पुरुषार्थगुणयोः पुरुषार्थक्रिययोर्विकल्पे उदाहरणानि। तत्र पुरुषार्थजातिविकल्पो वाचनिको यथा।

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा।
दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणामिति॥
पुरुषार्थद्रव्यविकल्पो वाचनिको यथा। मनुः।
कुसूलधान्यको वा स्यात्कुम्भी धान्यक एव वा।
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वेति॥
पुरुषार्थगुणविकल्पो वाचनिको यथा। मनुः।
षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्तते।
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवतीति॥
पुरुषार्थक्रियाविकल्पो वाचनिको यथा।
चतुर्थकालिको वा स्याद्वाप्यष्टमकालिकः।
चान्द्रायणविधानैर्वा शुक्ले कृष्णे च वर्तयन्।
पक्षान्तयोर्वाप्यश्नीयाद् यवागूं क्वथितां सकृदिति॥

पुरुषार्थजातितदभावयोः पुरुषार्थद्रव्यतदभावयोः पुरुषार्थगुणतदभावयोः पुरुषार्थक्रियातदभावयोश्च वाचनिकविकल्पे तूदाहरणानि मृग्याणि। स च यत्र विधिनिषेधौ भिन्नौ स्तस्तत्र न्यायादेव विकल्पः सिद्धो न वाचनिकः किं तु यत्र पुरुषार्थजात्यादिविधिरेव वाशब्दयुक्तः श्रुतस्तत्र भवति वाचनिकः। एवं जातिद्रव्यादीनामेकादश य विकल्पभेदास्तेषामपि पुरुषार्थविषयाणां वाचनिकानामुदाहरणान्यन्वेष्याणि। यथा "पयसा पायसेन वा श्राद्धे दत्तेन

मासं तृप्तिः पितॄणामित्यादीनि ॥ १९ ॥ ऐच्छिकोऽपि विकल्पः क्रत्वर्थविषय एकोनविंशतिविधः पुरुषार्थन्यायगम्यविकल्पश्च क्रत्वर्थवाचनिकविकल्पश्च पुरुषार्थवाचनिकविकल्पश्च । तत्र ।

क्रत्वर्थविषययोर्जात्योरैच्छिको विकल्पो यथा। "ब्राह्मणे ब्राह्मणमालभेते"त्यादौ कौण्डिन्यादिजात्योः इह यद्यपि ब्राह्मणत्वादिजातेरेपाङ्गत्वं न कौण्डिन्यत्वादिजातेस्तथापि क्रतूपकारकत्वमात्रेण क्रत्वर्थत्वव्यवहारः । सन्ति हीदृशा अप्यस्मिन् शास्त्रे व्यवहाराः । तदुक्तं बलाबलाधिकरणवार्त्तिके ।

पशुकामप्रयोगे च क्रमेण चमसाङ्गता ।
श्रौताद् गोदोहनात्तत्र चमसस्य निराक्रियेति ॥

एवमुत्तरत्र क्रत्वर्थविषयो द्रव्ययोरैच्छिको विकल्पो यथा । पशुना यजेतेत्यत्रोपादेयविशेषणस्यैकत्वस्य विवक्षितत्वात्समन्त्रवर्णेन छागनियमे ऽप्ययं वा छागो ऽयं वेत्यैच्छिको द्रव्यविकल्पः । एवमाग्नेय्याग्नीध्रमुपतिष्ठत इत्यत्र प्रकृताग्नेयी ग्राह्येति तार्तीयन्यायेन सिद्धे ऽपीयं वा प्रकृताग्नेयी ऋगियं वेत्यैच्छिक एव ऋग्द्रव्यविकल्पः । क्रत्वर्थविषययोर्गुणयोरैच्छिको विकल्पो यथा "गौरनुबन्ध्य" इत्यादौ निर्गुणोपादानायोगात्किंचिद् गुणोपादाने प्रसक्ते श्वेतो वा रक्तो वेत्यैच्छिक एव गुणविकल्पः । तथा ऽहीने ऽनेकयजमानके येन केनचिद्यजमानेन छुप्त्वान्वारम्भ औदुम्बरीसम्मानं कार्यमिति ह्यादावुक्तम् ।

क्रत्वर्थविषयः क्रिययोरैच्छिको विकल्पो यथा । "वषांसु रथकार आदधीते"ति अत्रैवार्णिकस्याधाने विहिते सति ज्ञानं विना तदनुष्ठानायोगाद् ज्ञाने ऽप्याक्षिप्ते पुस्तकपाठादिजन्यानां ज्ञानानामैच्छिको विकल्पः ।

क्रत्वर्थस्य आत्मादेस्तद्भावस्य च ऐच्छिको विकल्पो नित्यकर्मणि शक्ताशक्तविषयत्वेन व्यवस्थितः सम्भवति ।

षष्ठे नित्यकर्मण्यशक्याङ्गन्यायस्य स्थापितत्वात् । एवमेकादश ये जातिद्रव्यादिविषया विकल्पास्तेषामपि क्रत्वर्थविषयाणामैच्छिकानामुदाहरणान्यन्वेष्याणि । आद्ये हि एषः पायसादिभिन्नैर्वाक्यैर्विहितं तच्च लोकतो भोजने समुच्चयेनापि वस्तं विकल्पेनापि यथा प्राप्तं च विधीयत इति न नित्यं समुच्चयो नापि नित्यं विकल्पः इति हेमाद्र्याद्युक्तं युक्तं च । अत ऐच्छिके क्रत्वर्थजातिद्रव्यादिविषयेषु तदुदाहरणाम । पुरुषार्थजात्यादिविकल्पभेदा अर्थच्छिद्येत एकोनविंशतिरेव । तत्र यद्यपि तुल्यफलानां आत्यादीनां न्यायगम्यो वि-

किं तु पृष्ठमात्रमुद्दिश्य विकल्पविधौ विधेयविकल्पसामर्थ्यादेव पृष्ठद्वयलाभादिति । क्रत्वर्थयोस्तु जातितदभावयोर्द्रव्यतदभावयोर्गुणतदभावयोः क्रियातदभावयोश्च ये वाचनिका विकल्पास्तदुदाहरणानामेवं विधो विषयः । यत्र विकृतावातिदेशिकजात्यादिचतुष्टयस्य निषेधा वाशब्दयुक्ताः श्रुताः प्राकृतजात्यादेर्वा वाशब्दयुक्तं श्रुतं तत्रासौ चतुर्विधो ऽपि विकल्पः सम्भवति । न च तत्र न्यायाद्विकल्पसिद्धिर्वाशब्दार्थवैयर्थ्यभावे हि औपदेशिकेन निषेधेन "न तौ पशौ करोतीतिवत्प्राकृतस्य जात्यादेर्बाध एव स्यादतो न्यायादसिध्यन्वाचनिको विकल्प इति । तादृशानि चोदाहरणानि मृग्याणि ॥ ८ ॥

एवं जातिद्रव्यादीनामेकादश ये विकल्पभेदास्तेषामपि वाचनिकानामुदाहरणान्यन्वेष्याणि । यथा । "पयसा पायसेन वा श्राद्धं कुर्वीत"त्यादीनि वाचनिक एवात्पुरुषार्थजात्योः पुरुषार्थद्रव्ययोः पुरुषार्थगुणयोः पुरुषार्थक्रिययोर्विकल्पे उदाहरणानि । तत्र पुरुषार्थजातिविकल्पो वाचनिको यथा ।

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणामिति ॥
पुरुषार्थद्रव्यविकल्पो वाचनिको यथा । मनुः ।
कुसूलधान्यको वा स्यात्कुम्भी धान्यक एव वा ।
त्र्यहैहिको वापि भवेदश्वस्तनिक एव वेति ॥
पुरुषार्थगुणविकल्पो वाचनिको यथा । मनुः ।
षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्तते ।
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवतीति ॥
पुरुषार्थक्रियाविकल्पो वाचनिको यथा ।
चतुर्थकालिको वा स्यात्स्याद्वाप्यष्टमकालिकः ।
चान्द्रायणविधानैर्वा शुक्ले कृष्णे च वर्तयन् ।
पक्षान्तयोर्वाप्यश्नीयाद् यवागूं क्वथितां सकृदिति ॥

पुरुषार्थजातितदभावयोः पुरुषार्थद्रव्यतदभावयोः पुरुषार्थगुणतदभावयोः पुरुषार्थक्रियातदभावयोश्च वाचनिकविकल्पे तूदाहरणानि मृग्याणि । स च यत्र विधिनिषेधौ भिन्नौ स्तस्तत्र न्यायादेव विकल्पः सिद्धो न वाचनिकः किं तु यत्र पुरुषार्थजात्यादिविधिरेव वाशब्दयुक्तः श्रुतस्तत्र भवति वाचनिकः । एवं जातिद्रव्यादीनामेकादश ये विकल्पभेदास्तेषामपि पुरुषार्थविषयाणां वाचनिकानामुदाहरणान्यन्वेष्याणि । यथा "पयसा पायसेन वा श्राद्धे दत्तेन

मासं तृप्तिं पितॄणामित्यादीनि ॥ १९ ॥ ऐच्छिकोऽपि विकल्पः क्रत्वर्थविषय एकोनविंशतिविधः पुरुषार्थन्यायगम्यविकल्पवत्क्रत्वर्थवाचनिकविकल्पवत्पुरुषार्थवाचनिकविकल्पवच्च । तत्र ।

क्रत्वर्थविषययोर्जात्योरैच्छिको विकल्पो यथा । "ब्राह्मणे ब्राह्मणमालभेते"त्यादौ कौण्डिन्यादिजात्यो इह यद्यपि ब्राह्मणत्वादिजातेरङ्गत्वं न कौण्डिन्यत्वादिजातेस्तथापि क्रतूपकारकत्वमात्रेण क्रत्वर्थत्वव्यवहारः । सन्ति हीदृशा अप्यस्मिन् शास्त्रे व्यवहाराः । तदुक्तं बलाबलाधिकरणवार्त्तिके ।

पशुकामप्रयोगे च क्रमेण चमसाङ्गता ।
श्रौताद् गोदोहनात्तत्र चमसस्य निराक्रियेति ॥

एवमुत्तरत्र क्रत्वर्थविषयो द्रव्ययोरैच्छिको विकल्पो यथा । पशुना यजेतेत्यत्रोपादेयविशेषणस्यैकत्वस्य विवक्षितत्वान्मन्त्रवर्णेन छागनियमे ऽप्ययं वा छागोऽयं वेत्यैच्छिको द्रव्यविकल्पः । एवमाग्नेय्याग्नीध्रमुपतिष्ठत इत्यत्र प्रकृताग्नेयी प्राप्नोति तार्तीयन्यायेन सिद्धेऽपीयं वा प्रकृताग्नेयी ऋगियं वेत्यैच्छिक एव ऋग्द्रव्यविकल्पः । क्रत्वर्थविषययोर्गुणयोरैच्छिको विकल्पो यथा "गौरनुबन्ध्य" इत्यादौ निर्गुणोपादानायोगाद्यत्किंचिद् गुणोपादाने प्रसक्ते श्वेतो वा रक्तो वेत्यैच्छिक एव गुणविकल्पः । तथा ऽहीने ऽनेकयजमानके येन केनचिद्यजमानेन ध्रुवान्वारम्भ औदुम्बरीसम्मार्गं च कार्यमिति द्वादशे उक्तम् ।

क्रत्वर्थविषयः क्रिययोरैच्छिको विकल्पो यथा । "वर्षासु रथकार आदधीते"ति अत्रैवर्णिकस्याधाने विहिते सति ज्ञानं विना तदनुष्ठानायोगाद् ज्ञाने ऽप्याक्षिप्ते पुस्तकपाठादिजन्यानां ज्ञानानामैच्छिको विकल्पः ।

क्रत्वर्थस्य तु जात्यादेस्तदभावस्य च ऐच्छिको विकल्पो नित्यकर्मणि शक्ताशक्तविषयत्वेन व्यवस्थितः सम्भवति ।

षष्ठे नित्यकर्मण्यशक्याङ्गत्यागस्य स्थापितत्वात् । एवमेकादश ये जातिद्रव्यादिविषया विकल्पास्तेषामपि क्रत्वर्थविषयाणामैच्छिकानामुदाहरणान्यन्वेष्याणि । श्राद्धे हि पयः पायसादिभिर्नैवेद्यैर्विहितं तच्च लोकतो भोजने समुच्चयेनापि फलस्य विकल्पेनापि यथा प्राप्तं च विधीयत इति न नित्यं समुच्चयो नापि नित्यं विकल्पः इति हेमाद्रावुक्तं युक्तं च । अत ऐच्छिके क्रत्वर्थजातिद्रव्यादिविकल्पे तदुदाहरणम् । पुरुषार्थजात्यादिविकल्पभेदा अप्यैच्छिका एकोनविंशतिरेव । तत्र यद्यपि तुल्यफलानां जात्यादीनां न्यायगम्यो वि-

कल्पो न त्वैच्छिकस्तथापि भिन्नफलानामन्यतरफलकामनायामैच्छिको विकल्पो भवति । तेषां तूभयफलकामनायां समुच्चयोऽपि भवति अतो वक्ष्यमाणानि तद्विषयाणि समुच्चयोदाहरणान्येवान्यतरफलकामनायां विकल्पोदाहरणानि ज्ञेयानि ।

पुरुषार्थजातितदभावादीनां चत्वार्युदाहरणानि समुच्चयेन सम्भवन्ति विकल्पविषयाणि तान्युच्यन्ते । इन्द्रियार्थदधित्वतदभावयोरैच्छिको विकल्पः । तथा "गोदोहनेन पशुकामस्य प्रणयेदि"ति पश्वर्थविहितगोदोहनद्रव्यतदभावयोरैच्छिको विकल्पः । तथा "यदि कामयीत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयादि"ति वृष्ट्यर्थविहितनीचैस्त्वतदभावयोरैच्छिको विकल्पः । तथा "चित्रया यजेत पशुकाम" इति पश्वर्थविहितचित्रेष्टिक्रियातदभावयोरैच्छिको विकल्प इति । एवमैच्छिकविकल्पस्यैकोनविंशतिक्रत्वर्थविषयो एकोनविंशतिश्च पुरुषार्थविषयो इत्येवमष्टात्रिंशदैच्छिकविकल्पभेदाः पूर्वोक्ताश्च सप्तविंशतिर्न्यायगम्यविकल्पभेदाः अष्टत्रिंशच्च वाचनिकविकल्पभेदा इति सर्वे मिलित्वा ऽधिकं शतं विकल्पभेदाः सिद्धाः ।

पुनरपि द्विविधो विकल्पः पूर्वोक्तो यथासम्भवम् । अव्यवस्थितो व्यवस्थितश्च ।

आद्यः यथाऽग्निहोत्रे दशद्रव्यविकल्पः ।

द्वितीयो यथा "व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत" । "यवेभ्य यवैरिष्ट्वा यवैरेव यजताव्रीहिभ्य" इति व्रीह्याग्रयणोत्तरं व्रीहिभिरेव दर्शपूर्णमासौ कार्यौ यवाग्रयणावधि यवाग्रयणोत्तरं च यवैरेव दर्शपूर्णमासौ कार्यौ व्रीह्याग्रयणपर्यन्तमिति ।

यदा त्वग्निहोत्री वै मालादायित्वास्तस्याः पयसा जुहुयादिति व्रीह्याग्रयणकाले व्रीहियवाग्रयणकाले च यवानग्निहोत्रधेनुं खादयित्वा तत्पयसाऽग्निहोत्रहोमः कृते आग्रयणासिद्धिपक्षस्तदाग्रयणाभावादेव व्रीहियवयोरप्यव्यवस्थितविकल्प एव ।

व्यवस्थितविकल्पस्तु द्विविधः । न्यायगम्यो वाचनिकश्च । तत्राद्यो यथा । "स्रुवेणावद्यति स्वधितिनाऽवद्यति हस्तेनावद्यतीति" संहतद्रव्यमासाद्यदानेऽव्यवस्थितविकल्पे स्रुवादे प्राप्ते न्यायतो व्यवस्थाता अर्थाद्वा कल्पनैकदेशत्वादित्यत्र । स्मार्तोदाहरणं तु । प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा ग्रहणान्तिकमित्यव्यवस्थितविकल्प उक्ते स्मृतिपादे वार्तिककृता समर्थासमर्थगार्हस्थ्ययोग्यायोग्यविषयो ऽयं व्यवस्थितविकल्प इति न्यायेन स्थापितम् ।

वेदानधीत्य वेदौ वा वेदं वापि यथा क्रमम् ।
सामर्थ्याश्रमयोग्यत्वमङ्गीकृत्यैतदुच्यतइति ॥

याचनिकस्तु व्यवस्थितविकल्पः सप्तधा सम्भवति । देशतः कालतः कर्तृतः कर्मतः फलतः निमित्ततः अवधितश्चेति ।

तत्र देशतो याचनिको व्यवस्थितविकल्पो यथा तैत्तिरीयाणां श्रौतसूत्रे ऽत्र यः परिधय इति परिधिषु विहितेषु पश्चाद्देशादित्रये स्थविष्ठादीनां परिधीनामव्यवस्थितविकल्पे प्राप्ते स्थविष्ठः पश्चाद्दणीयान्द्राघीयान्दक्षिणाद्यो ऽणिष्ठो ह्रसिष्ठ उत्तरार्ध्यं इति देशतो व्यवस्थितविकल्प उक्तः । स्मार्त्तोदाहरणमपि । "वसन्ते ब्राह्मणो ऽग्नीनादधीते"त्यादौ यत्र वसन्तस्याङ्गत्वं तत्र त्रिकाण्डमण्डनेन ।

श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रमसर्तुर्ष्विति ।

चान्द्रर्तुनियमे कृते अमावास्यया मासान्सम्पाद्याहरुत्सृजन्ति अमावास्यया हि मासान्सम्पश्यन्ति पौर्णमास्यया मासान्सम्पाद्याहरुत्सृजन्ति पौर्णमास्यया हि मासान्सम्पश्यन्तीति श्रुत्युक्तस्य द्विविधस्य चान्द्रस्य सर्वदेशेष्वव्यवस्थितविकल्पे प्राप्ते त्रिकाण्डमण्डनेन ।

चान्द्रो ऽपि शुक्लपक्षादिः कृष्णादिरिति च द्विधा ।
कृष्णपक्षादिकं मासं नाङ्गीकुर्वन्ति केचन ॥
ये ऽपिच्छन्ति न तेषामपीष्टो विन्ध्यस्य दक्षिणे ।

इति देशतो व्यवस्थितविकल्प उक्तः ।

कालतो याचनिको व्यवस्थितविकल्पो यथा दर्शपूर्णमासयोराज्यभागयोः क्रमे वार्त्रघ्नी युगलं वृधन्वतीयुगलं चेति याज्यानुवाक्यायुगले पठिते तयोः पौर्णमास्याममावास्यायां चाव्यवस्थितविकल्पे प्राप्ते वार्त्रघ्नीपौर्णमास्यामनूच्येते वृधन्वती अमावास्यायामिति वाक्यात्कालतो व्यवस्थितविकल्पः । पौर्णमास्यमावास्याशब्दौ कर्मवाचिनावङ्गीकृत्य कर्मतो व्यवस्थितविकल्पो ऽयमिति सोमेश्वरमतमस्माभिः वादादीपिकाप्रकाशे निरस्तम् ।

कर्तृतो याचनिको व्यवस्थितविकल्पो यथा । याजमाने व्रते तत्प्रकाशकस्य दर्शपूर्णमासप्रकरणाधीतस्य "अग्ने व्रतपते" "वायो व्रतपते" "आदित्य व्रतपते" इति मन्त्रत्रयस्य ब्राह्मणक्षत्रियवैश्येष्वव्यवस्थितविकल्पे प्राप्ते ब्राह्मणादिकर्तृतः क्रमेण व्यवस्थितविकल्प उक्तः । स्मार्तोदाहरणमपि आश्वलायनगृह्यसूत्रे । यदि "वासांसि वसीरन् रक्तानि वसीरन्काषायं ब्राह्मणो माञ्जिष्ठं क्षत्रियो हारिद्रं वैश्य" इति । अत्र वृत्तौ वासांसि वसीरन्नित्यजिनेन पूर्वविहितेन सह वैकल्पिको वासो विधिरित्युक्तं यथा यदि रक्तानि वसीरन्निति यदिशब्दस्य

व्यवहितान्वयो ऽङ्गीकृत तत्र कापायादीनामव्यवस्थितविकल्पे ब्राह्मणादौ प्राप्त ब्राह्मणादिकर्तृत कापायादव्यवस्थितविकल्प ।

कर्मतो व्यवस्थितविकल्पो यथा वरुणप्रघासेषु "द्वावग्नी प्रणयत" इति विहारद्वय विहित तस्याव्यवस्थितविकल्पा नवहविरासादने प्राप्तस्तत्र अध्वर्युरुत्तर विहारे हवींष्यासादयति मारुतीमय प्रतिप्रस्थाता दक्षिणस्मिन्निति मारुतीव्यतिरिक्तहविरासादनमारुतीहविरासादनरूपकर्मतो विहारद्वयस्य व्यवस्थितविकल्प ।

फलतो व्यवस्थितविकल्पो यथा ज्योतिष्टोमे षोडशिसद्ये "सौभरमुक्थ्यानां ब्रह्म साम भवती"त्युक्थ्यत्रयब्रह्मस्तोत्रसाधनत्वेन नित्य सौभर विहितम् । ज्योतिष्टोमातिरात्रे तु "यदि बृहत्सामातिरात्र स्यात्सौभरमुक्थ्यानां ब्रह्मसामकार्यमिति ब्रह्मसामत्वेनैव नैमित्तिक" "यदि रथन्तरसामा सौभर कुर्यादि"ति चोक्थ्यत्रये ऽपि नैमित्तिक विहितम् । तत्र नित्य नैमित्तिक च सौभर पुन फलत्रयसाधनत्वेन विहित "यो वृष्टिकामो यो ऽन्नाद्यकामो य स्वर्गकाम स सौभरेण स्तुवीते"ति । सौभरस्य च नानाशाखीयस्य नानानिधनकस्याव्यवस्थितविकल्पे प्राप्ते "हीषिति वृष्टिकामाय निधन कुर्यात् ऊर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाये"ति । तत्तत्फले तत्तन्निधनकस्य सौभरस्य विधानात्फलतो व्यवस्थितविकल्प ।

निमित्ततो व्यवस्थितविकल्पो वाचनिको यथा ।

दशाह शावमाशौच सपिण्डेषु विधीयते ।

अर्वाक्सञ्चयनादस्थ्ना त्र्यहमेकाहमेव चेति ॥

अर्वागित्यनेन चतुरहोपलक्षणाच्चतुर्णां पक्षाणामव्यवस्थितविकल्पे मनुनोक्ते उपनीते तु विषममिति स्मृत्यन्तरात् ।

दन्तजाते ऽनुजाते च कृतचूडे च संस्थित ।

इति मनुवाक्यान्तरे चापकर्षे अनुलोमक्रम ऽङ्गीक्रियमाणे दन्तजाते दशाहापत्त कृतचूडे च एकाहापत्तेस्तत्र च ।

निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते ।

इति मनुनैव विरोधापत्ते प्रतिलोमक्रमाश्रयणेन दन्तजात एकाह अनुजातमपत्य यस्मात्सोदरो त्र्यह कृतचूडे चतुरह । उपनीते दशाह । इति व्यवस्थितविकल्पो विरोधाधिकरणे वार्त्तिककृतोक्त । अस्मिन्पक्षे निर्वृत्तचूडकानामिति त्रिरात्रपक्ष प्रथमवर्षकृतचूडविषय । चतुरहस्तु तृतीयवर्षकृतचूडविषय । अकृतचूडे शवाप त्र्यह एवेति । प्रकारान्तरेणापि व्य-

वस्थितविकल्पो वार्त्तिककृतोक्तः । ब्राह्मणस्य स्वाध्यायानिवृत्त्यर्थमिति गौतमवचनात् ।

एकाहाद् ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः ।
त्र्यहात्केवलवेदस्तु द्विहीनो दशभिर्दिनैः ॥

इति स्मृत्यन्तराच्च त्रिवेदस्याग्निमत एकाहः द्विवेदस्य चतुरहः अग्निवेदरहितस्य दशाह इति । अयमेव पक्ष आदृतो मेधातिथिविज्ञानेश्वरादिभिः । अनुजातपदव्याख्या मेधातिथेः । अनुजातो दन्तजाताद् बालतर इति स्मरन्तीति ।

सदन्तजातानुजातान्यकृतचूडेषु च क्रमात् ।

चितिक्रिया त्र्यहैकाहा इति वार्त्तिकविरोधादुपेक्ष्यम् । अत्र हि क्रमशब्दस्य प्रतिलोमक्रमपरत्वे केदन्तजातविषयादेकाहादधिकस्त्र्यहो ऽनुजातविषय उक्तः । सदन्तजाताद् बालतरे ऽनुजातशब्दार्थे सद्यः शौचविषये विरुध्येतेति । अवधितो व्यवस्थाया स्तूदाहरणमुक्तमेव "व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेते"त्यादि । सर्वस्मिंश्च व्यवस्थितविकल्पे पूर्वोक्ता अष्टौ दोषा न सन्ति । इतरेतरविषये इतरेतरवाक्याप्रवृत्तेरेव एकानुष्ठाने ऽपीतरशास्त्रस्य प्रतीतप्रामाण्यत्यागाद्यभावात् व्यवस्थितविकल्पे च दोषाष्टकं नास्तीति शाखान्तराधिकरणे । ( अ० २ पा० ४ अ० २ ) न चैकं प्रति शिष्यत इति सूत्रे अथ तेषां विकल्पेनार्थवत्त्वं तद्वरं शाखान्तराणामेव व्यवस्थितप्रतिपद्यमानानामनाकुलतरं कल्पितमिति वार्त्तिके ऽनाकुलतरमित्यनेनोक्तम् । भट्टसोमेश्वरेण व्याख्यातम् । पूर्वपक्षिणा प्रतिचरणमग्निहोत्रादिव्यवस्था ऽनभ्युपगमे निरपेक्षसाधनत्वेन समुच्चयायोगादेकेनैवाग्निहोत्राद्यानर्थक्यापत्तेर्विकल्पेनार्थवत्त्वं वाच्यं तच्च कर्मैक्याभ्युपगमेन शाखानामेव व्यवस्थितेः कठादिचरणैः प्रतिपद्यमानत्वेनाष्टदोषत्वनिमित्ताकुलत्वानापादकत्वात्कल्पितं वरमिति ।

एवमैच्छिकविकल्पे ऽप्यष्टौ दोषा न सन्ति कस्यापि शास्त्रस्य प्रतीतप्रामाण्यत्यागाद्यभावात् । "पशुना यजेते"ति ह्येकमेव पाठं तत्र चैकत्वविवक्षावशेन कदाचित्कस्यचित्पुंव्यक्ते(१)रुपादाने ऽपि सकलस्तच्छास्त्रार्थो ऽनुष्ठीयत एवेति कुत्रं तस्य शास्त्रस्य प्रामाण्यत्यागादि । एवं स्वेच्छया व्यक्त्यन्तरोपादाने ऽपीति । एवमेव वाचनिके ऽपि विकल्पे ऽष्टौ दोषा न सन्ति । "रथन्तरं वा पृष्ठं भवति" "बृहद्वा पृष्ठं भवती"त्यादौ हि उभयोः पाक्षिककर्तव्यतैव प्रतीयते न व्रीहि-

(१) पशुव्यक्तेरिति २ पु० पा० ।

व्यवहितान्वयो ऽङ्गीकृत तत्र काषायादीनामव्यवस्थितविकल्पे ब्राह्मणादेः प्राप्त ब्राह्मणादिकर्तृक काषायादेर्व्यवस्थितविकल्प ।

क्रमतो व्यवस्थितविकल्पो यथा वरुणप्रघासेषु "द्वावग्नी प्रणयत' इति विहारद्वय विहित तत्राव्यवस्थितविकल्पा नवहविरासादन प्राप्तस्तत्र अध्वर्युरुत्तर विहारे हवींष्यासादयति मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्निति मारुतीव्यतिरिक्तहविरासादनमारुतीहविरासादनरूपक्रमतो विहारद्वयस्य व्यवस्थितविकल्प ।

फलतो व्यवस्थितविकल्पो यथा ज्योतिष्टोमे षोडशिसत्रे "सौभरमुक्थ्यानां ब्रह्म साम भवती"त्युक्थ्यत्रयब्रह्मस्तोत्रसाधनत्वेन नित्य सौभर विहितम । ज्योतिष्टोमातिरात्रे तु "यदि बृहत्सामातिरात्र स्यात्सौभरमुक्थ्यानां ब्रह्मसामकार्यमिति ब्रह्मसामत्वेनैव नैमित्तिक' "यदि रथन्तरसामा सौभर कुर्यादि"ति चोक्थ्यत्रये ऽपि नैमित्तिक विहितम । ततो नित्य नैमित्तिक च सौभर पुन फलत्रयसाधनत्वेन विहित "यो वृष्टिकामो य ऽन्नाद्यकामो य स्वर्गकाम स सौभरेण स्तुवीते ति । सौभरस्य च नानाशाखीयस्य नानानिधनकस्याव्यवस्थितविकल्पे प्राप्ते "हीषिति वृष्टिकामाय निधन कुर्यात् ऊर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाये'ति । तत्तत्फले तत्तन्निधनकस्य सौभरस्य विधानात्फलतो व्यवस्थितविकल्प ।

निमित्ततो व्यवस्थितविकल्पो वार्त्तिको यथा ।

दशाह शावमाशौच सपिण्डेषु विधीयते ।
अर्वाक्सञ्चयनादस्थ्नां त्र्यहमेकाहमेव वेति ॥

अर्वागित्यत्र चतुर्होपक्षत्रयाच्चतुर्णां पक्षाणामव्यवस्थितविकल्पे मनुनोक्ते उपनीते तु विषममिति स्मृत्यन्तरात् ।

दन्तजाते ऽनुजाते च कृतचूडे च संस्थिते ।

इति मनुवाक्यान्तरे चापकर्षे अनुलोमक्रमे ऽङ्गीक्रियमाणे दन्तजाते दशाहापत्तं कृतचूडे च एकाहापत्तेस्तत्र च ।

निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते ।

इति मनुनैव विरोधापत्ते प्रतिलोमक्रमाश्रयणेन दन्तजाते एकाह अनुजातमपत्य यस्मात्तादृशे त्र्यह कृतचूडे चतुरह । उपनीते दशाह । इति व्यवस्थितविकल्पो विरोधाधिकरणे वार्त्तिककृतोक्त । अस्मिन्पक्षे निर्वृत्तचूडकानामिति त्रिरात्रपक्ष प्रथमवर्षप्रवृत्तचूडविषय । चतुरहस्तु तृतीयवर्षप्रवृत्तचूडविषय । अकृतचूडे ततोपि त्र्यह एवेति । प्रकारान्तरेणापि व्य-

वस्थितविकल्पो वार्त्तिककृतोक्तः । ब्राह्मणस्य स्वाध्यायानिवृत्त्यर्थमिति गौतमवचनात् ।

एकाहाद् ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः ।
त्र्यहात्केवलवेदस्तु द्विहीनो दशभिर्दिनैः ॥

इति स्मृत्यन्तराच्च द्विवेदस्याग्निमत एकाहः द्विवेदस्य चतुरहः, अग्निवेदरहितस्य दशाह इति । अयमेव पक्ष आदृतो मेधातिथिविज्ञानेश्वरादिभिः । अनुजातपदव्याख्या मेधातिथेः । अनुजातो दन्तजाताद् बालतर इति स्मरन्तीति ।

तद्दन्तजातानुजातान्यकृतचूडेषु च क्रमात् ।

चितिक्रिया त्र्यहैकाहा इति वार्त्तिकविरोधादुपेक्ष्यम् । अत्र हि क्रमशब्दस्य प्रतिलोमक्रमपरतोक्तेर्दन्तजातविषयादेकाहादधिकस्त्र्यहो ऽनुजातविषय उक्तः । सदन्तजाताद् बालतरे ऽनुजातशब्दार्थे सद्यः शौचविषये विरुध्येतेति । अवधितो व्यवस्थाया स्तूदाहरणमुक्तमेव "व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेते"त्यादि । सर्वस्मिंश्च व्यवस्थितविकल्पे पूर्वोक्ता अष्टौ दोषा न सन्ति । इतरेतरविषये इतरेतरवाक्याप्रवृत्तेरेव एकानुष्ठाने ऽपीतरशास्त्रस्य प्रतीतप्रामाण्यत्यागाद्यभावात् व्यवस्थितविकल्पे च दोषाष्टकं नास्तीति शाखान्तराधिकरणे । ( अ० २ पा० ४ अ० २ ) न चैकं प्रति शिष्यतइति सूत्रे अथ तेषां विकल्पेनार्थवत्त्वं तद्वरं शाखान्तराणामेव व्यवस्थितप्रतिपद्यमानानामनाकुलतरं कल्पितमिति वार्त्तिके ऽनाकुलतरमित्यनेनोक्तम् । भट्टसोमेश्वरेण व्याख्यातम् । पूर्वपक्षिणा प्रतिचरणमग्निहोत्रादिव्यक्त्या ऽनभ्युपगमे निरपेक्षसाधनत्वेन समुच्चयायोगादेकैवाग्निहोत्रादिव्यक्तिर्या पक्षे विकल्पेनार्थवत्त्वं वाच्यं तच्च कर्मैक्याभ्युपगमेन शाखानामेव व्यवस्थितैः कठादिचरणैः प्रतिपद्यमानत्वेनाष्टदोषत्वमिभिस्ताकुलत्वानापादकत्वात्कल्पितं वरमिति ।

एवमैच्छिकविकल्पे ऽप्यष्टौ दोषा न सन्ति कस्यापि शास्त्रस्य प्रतीतप्रामाण्यत्यागाद्यभावात् । "पशुना यजेते"ति ह्येकमेव शास्त्रं तत्र चैकत्वविवक्षावशेन कदाचित्कस्याश्चित्पुंव्यक्ते(१)रुपादाने ऽपि सकलस्तच्छास्त्रार्थो ऽनुष्ठीयत एवेति कथं तस्य शास्त्रस्य प्रामाण्यत्यागादि । एवं स्वेच्छया व्यक्त्यन्तरोपादाने ऽपीति । एवमेव वाचनिके ऽपि विकल्पे ऽष्टौ दोषा न सन्ति । "रथन्तरं वा पृष्ठं भवति" "बृहद्वा पृष्ठं भवती"त्यादौ हि उभयोः पाक्षिककर्त्तव्यतैव प्रतीयते न व्रीहि-

(१) पशुन्कोर्विव २ पु० पा० ।

यववत्सर्वदोभयकर्तव्यतेति नान्यतरानुष्ठानेऽपीतरस्याप्रामाण्या-
दिकल्प्यमिति । तस्मान्न्यायगम्यविकल्पे एवाष्टदोषत्वमिति सिद्ध
पूर्वोक्ताश्च विकल्पाः पुनर्यथासम्भवं भावाभावविषयाः पञ्चधा ।

केचित्प्रकृतिगता एव । केचिद्विकृतिष्वुपदिष्टपदार्थविषयाः । के-
चित्प्रकृतिविकृत्यात्मककर्माङ्गोपदिष्टपदार्थविषयाः । केचिद्विकृतावु-
पदिष्टातिदिष्टपदार्थविषयाः । केचिद्विकृतावतिदिष्टमात्रविषया इति ।
तत्र प्रकृतावुपदिष्टपदार्थविषयो भावविकल्पो भावाभावविकल्पश्च
यथा मासाग्निहोत्रप्रकृतौ नित्याग्निहोत्रे पयआदिदशद्रव्याणां
विकल्पः । दध्यधिश्रयणतदभावयोश्च विकल्पः । न दध्यधिश्रये-
दधिश्रयेदित्येक इति बह्वृचब्राह्मणात् ।

विकृतावुपदिष्टयोर्भावयोर्भावाभावयोश्च विकल्पो यथा । वा-
जपेये प्राजापत्यानां ऋतुपशुभिः सहालम्भो ब्रह्मसामकाले चोपदि-
ष्टयोः कालयोर्विकल्पः । "अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षो-
डशिनं गृह्णाती"ति षोडशिग्रहतदभावयोर्विकल्पः ।

प्रकृतिविकृत्यात्मककर्मोपदिष्टयोर्भावयोर्भावाभावयोश्च विक-
ल्पो यथा । आधाने पवमानेष्टीनां पूर्णाहुत्या सह विकल्पः । तत्रैव
वाजसनेयिनामृतुनक्षत्रसम्भारत्वात् प्रादयजागरणेऽप्यपूर्वार्धं वार-
ऽमणसार्वेरात्रीने वा कुर्यादिति पूर्वमुदाहृतम् ।

विकृतावुपदिष्टातिदिष्टयोर्भावयोस्तदभावयोर्भावाभावयोश्च
विकल्पो यथा "य इष्ट्या पशुना सोमेन यजेत सोऽमावास्यायां
पौर्णमास्यां वे"त्यत्रेष्टिशब्दोपात्तायाममावास्याविकृतावतिदिष्टाया अ-
मावास्याया उपदिष्टायाश्च पौर्णमास्या विकल्पः । यथामिष्टिशब्दो-
पात्तायां पौर्णमासीविकृतावतिदिष्टाया पौर्णमास्या उपदिष्टायाश्चा-
मावास्याया विकल्पः । भावाभावोदाहरणं तु "न तौ पशौ करोती"-
ति पशुयागरूपायां विकृतावतिदिष्टयोराज्यभागयोरुपदिष्टस्य च स-
न्निषेधस्य विकल्प इति ।

विकृतावतिदिष्टमात्रविषयस्तु भावयोर्विकल्पो यथा ।
"आघन्या पत्नी संयाजयन्त्याज्येन वेति" विहितम् । पशौ
तु श्रुतं "आघन्या पत्नीः संयाजयन्ती"ति । तत्पत्नीसंयाजानां
आघन्यर्थत्वार्थं न भवति प्रमाणान्तरार्थतापत्तेः किंतु प्रकृतितो चो-
दकप्राप्तया आघन्या नियमार्थम् । तत्र चापादयत्याज्यभाग-
ज्येयत्व विवक्षितमानतश्च पशुगणे प्रतिसंस्थायं संस्कारादृष्टिरिति
आघन्याः समुच्चयस्याप्रसक्तेर्यथा वाचिकत्वाद्युपादयति विकल्पः ।
इह च प्राद्वा(पा० ७४अ०६) द्रव्यविचारे तु पूर्वपक्षप्रमेयत्वादित्यधि-

करणे उक्ते विकृतावतिदिष्टस्य भावस्यानुपदिष्टेनानतिदिष्टेनाभावेन विकल्प उदाहरणम् । अत्र य. कश्चिद्भावः प्रकृतावैकल्पिक एव विकृतौ तु निषेधानुपदेशे ऽपि पदार्थान्तरविकल्पवशादर्थात्स्वाभावेन सह विकल्पं भजते तादृगुदाहार्यमन्त्ये भेदे । तद्यथा । अग्नीषोमीये प्रयाजशेषाभिघारणं वपाया अवैकल्पिकमेवासीत् प्राजापत्यपश्वालम्भे तु कालद्वयं वैकल्पिकं विहितं क्रतुपश्वालम्भकाले ब्रह्मसामकाले वेति । ततश्च प्रयाजशेषाभिघारणं प्राजापत्यवपानां वैकल्पिकं भवति । ब्रह्मसामकालपक्षे प्राजापत्यवपाभिघारणार्थं प्रयाजशेषस्थापनस्य चतुर्थे निरासादिति । तदेवं प्रकृतिविकृतितदुभयात्मककर्मनिष्ठा उपदिष्टातिदिष्टभावाभावविषया द्वय विकल्पभेदा निरूपिताः ।

अथेदमुच्यते ये के चित्पूर्वे भावाभावविषया विकल्पभेदा उक्तास्ते सर्वे वस्तुत्वविषयास्तत्प्रतियोगिकाभावविषया एव ।

के चित्तु तद्भावविषयास्तत्प्रतियोगिकाभावव्यतिरिक्ताभावविषया अपि सन्तो भावविषया अन्यभावान्तरविषया अपि विकल्पाः सम्भवन्ति । तद्यथा अग्निष्टोमसंस्थैव नित्या क्रतोरङ्गं अन्याः काम्याः । संस्था च प्रवृत्तोभाभ्यासविषयव्यापारोपरमात्मककार्येऽभावरूपा । न चात्र समुच्चयः सम्भवति । संस्थितस्य संस्थान्तरायोगात् । तत्र क्रत्वर्थया ऽग्निष्टोमसंस्थया पुरुषार्थानामुक्थ्यादिसंस्थानामैच्छिको विकल्पः ।

तथा पुरुषार्थानामुक्थ्यादिसंस्थानां भिन्नफलानामप्यैच्छिको विकल्पो ऽन्योन्यम् ।

तथा संस्थानां स्वसमानफलैर्ज्योतिष्टोमतद्गुणविधितैजोत्वादिभावैः सहैकार्थ्यान्यायगम्यो विकल्प इति ।

अत्र च ये के चिदन्ये विकल्पा दृश्यन्ते यथोपांशुयाजादौ वैष्णवादियाज्यानुवाक्यामन्त्रविकल्पः यथा वा तत्रैव देवताविकल्पः यथा वा तन्त्रं वा वैश्वदेविकमिति तन्त्रविकल्पः यथा वेष्टिपूर्वत्वादिक्रमविकल्पः । यथा वैको द्वौ बहवो वा ऽहीनेन यजेरन्नित्यादिः कर्तृविकल्पः । यथा वा तलवकारादिसहस्रसामशाखागानानां गीतिप्रकारभेदानां विकल्पः इत्यादयस्ते यथासम्भवं जात्यादिविकल्पेष्वेवान्तर्भवन्ति के चित् ।

तन्त्रक्रमादीनामपि क्रियाधर्मत्वाद्धर्मधर्मिणोश्चाभेदात्तद्विकल्पाः क्रियाविकल्पभेदे एवान्तर्भवन्ति ।

तथा क चिद्विकल्पस्याप्यन्यतरकोट्या सह विकल्पो भवति

यथा असोमयाजिनः सान्नाय्यविकल्पः नासोमयाजी सन्नयेत् तदु-समेव नयेदिति विधिप्रतिषेधबलात् सोमयाजिनस्तु सान्नाय्यमेवे-ति। पुरोडाशाभ्यामेवासोमयाजिनं याजयेद्यावेतावाग्नेयश्चैन्द्राग्नश्च सान्नाय्येन तु सोमयाजिनमिति वचनात्। तदेतद्दशमे प्रतिपादितं पुरोडाशाभ्यामित्यधिकृतानामित्यत्र। स्मार्त्तोदाहरणत्रयं तु विज्ञाने-श्वरेणोक्तम्। श्वश्वा सह भर्त्रा सह पित्रा सहेति सपिण्डीकरणे विकल्पः स्मृतिभेदेनोक्तः। स्मृतिः।

पितामह्यादिभिः सार्धं सपिण्डीकरणं स्मृतम्।

पैठीनसिः।

अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डताम्।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्॥

यमः।

पत्या चैकेन कर्तव्यं सपिण्डीकरणं स्त्रियाः।
सा मृतापि हि तेनैक्यङ्गता मन्त्राहुतिव्रतैः॥

उशनाः।

पितुः पितामहे यद्वत् पूर्णे संवत्सरे सुतैः।
मातुर्मातामहे तद्वदेषा कार्या सपिण्डतेति॥

तत्रापुत्रायां भार्यायां मृतायां भर्त्ता स्वमात्रैव सापिण्ड्यं कुर्यात्।

अन्वारोहणे तु पुत्रः स्वपित्रैव मातुः सापिण्ड्यं कुर्यात्।
आसुरादिविवाहोत्पन्नः पुत्रिकापुत्रश्च मातामहेनैव।
ब्राह्मादिविवाहोत्पन्नः पित्रा मातामहेन पितामह्या वा वि-कल्पेन कुर्यादिति।
तथा मातुः पिण्डदानादौ गोत्रे विकल्पः।
स्वगोत्राद् भ्रश्यते नारी विवाहात्सप्तमे पदे।
स्वामिगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया॥
इति भर्तृगोत्रविषयात्।
पितृगोत्रं समुत्सृज्य न कुर्याद्भर्तृगोत्रतः।
जन्मन्येव विपत्तौ च नारीणां पैतृकं कुलमिति॥
पितृगोत्रविषयाच्च वचनात्।
तत्रासुरादिविवाहेषु पुत्रिकाकरणे च पितृगोत्रमेव।
ब्राह्मादिविवाहेषु व्रीहियववद् गृह्यन्तरवच्च विकल्प एवेति।
तथा क्षयाहभावे एकोद्दिष्टं पार्वणं वेति विकल्पः।

सपिण्डीकरणादूर्ध्वं प्रतिसम्वत्सरं सुतैः ।
मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृते ऽहनि ॥
इति यमेनैकोद्दिष्टविधानात् ।
सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा ।
प्रतिसम्वत्सरं विद्वान्छागलेयोदितोविधिः ॥
इति शातातपेन पार्वणविधानात् ।
तत्र संन्यासिनां क्षयाहे सुतेन पार्वणं कार्यम् ।
एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह ।
सपिण्डीकरणाभावात्पार्वणं तस्य सर्वदा ॥
इति प्रचेतोवाक्यात् ।
अमावास्याक्षयाहे प्रेतपक्षक्षयाहे च पार्वणमेव ।
अमावास्याक्षयो यस्य प्रेतपक्षे ऽथ वा पुनः ।
पार्वणं तस्य कर्त्तव्यं नैकोद्दिष्टं कदा चन ॥
इति स्मृतेः । अन्यत्र क्षयाहे असंन्यासिनः पार्वणैकोद्दिष्टयो-र्व्रीहियववद्विकल्प एवेति ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमी-
मांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्म-
जभट्टशङ्करकृते मीमांसाबालप्रकाशे
विकल्पभेदनिरूपणम् ।

---

यद्यपि शाब्दिकैः प्रत्येकमेकक्रियान्वयः समुच्चय इति । वि-शेषतो ऽसौ लक्षितस्तथापि मीमांसकव्यवहारः साहित्यसामान्ये एव दृश्यते परेणावेदनादित्यत्र हि समुच्चयप्रमाणाभावो ऽष्टैकार्थ्यव-द्विकल्पहेतुरुक्तः ।

समुच्चयप्रमाणं चैकः प्रयोगविधिरित्युक्तम् ।

न च प्रयाजादिषु प्रत्येकं एकस्या दर्शपूर्णमासक्रियाया अ-न्वयो ऽस्ति । ग्रहैकत्वाधिकरणे ( अ० ३ पा० १ अ० ७ ) हि वा-र्त्तिककृता प्रत्येकवाक्यपरिसमाप्तिसमुदायवाक्यपरिसमाप्त्योः उभ-योरेवं विषयभेद उक्तः । प्राधान्ये पूर्वो गुणत्वे तूत्तरः । यथा "ग्रहं सम्मार्ष्टि" "अरुणयैकहायन्या क्रीणातीति" । प्रयोगविधौ च प्रया-

जादेर्गुणत्वात्र प्रत्येकमेकक्रियान्वयो ऽस्ति । अस्ति च समुच्चयप्रमाणत्वव्यवहार इति साहित्यसामान्यपव मीमांसकानां समुच्चयव्यवहारः सिद्धः । सो ऽयं समुच्चयो ऽपि विकल्पवत्प्रथमं तावद्विविधः ।

न्यायगम्यो वाचनिक ऐच्छिकश्चेति ।

तत्र न्यायगम्यः समुच्चयो विकल्पवच्चाष्टविधः ।

*द्रव्यादीनां तदभावानां च समुच्चयायोगात् ।*

नापि चतुर्विध यथासौ जात्योर्द्रव्ययोर्गुणयोः क्रिययोश्चेति । किं तु सजातीयविजातीयविषयत्वेन द्विकत्रिकचतुष्कविषयत्वेन च पञ्चदशविध. समुच्चयः ।

तत्र सजातीयविषयश्चतुर्विध उक्त एव । विजातीयद्विकविषयस्तु षोढा । जातिद्रव्ययोर्जातिगुणयोर्जातिक्रिययोर्द्रव्यगुणयोर्द्रव्यक्रिययोर्गुणक्रिययोश्चेति विजातीयत्रिकविषयश्चतुर्धा चतुष्कविषयस्त्वेकः । एवं पञ्चदशानां न्यायगम्यसमुच्चयभेदानां क्रमेणोदाहरणान्युच्यन्ते ।

तत्र न्यायगम्यो जात्योः समुच्चयो यथा सोमेदयस्सते क्रयेक्रयान्तरेव गवाजादीनां न्यायेन समुच्चयः साधितो द्वादशे ( पा० ४ अ० ३ ) क्रयणेषु तु विकल्पः स्यादेकार्थत्वादित्यधिकरणे । १ ।

न्यायगम्यो द्रव्ययोः समुच्चयो यथा । आधाने "सम्भारान्सम्भरती"त्यत्र संभ्रियन्तइति सम्भारा इति सम्भारशब्दस्य यौगिकत्वेन "परिधीन्परिदधाती"त्यत्र च परिधीयते ऽग्निस्तदायतनं वा यैरिति परितस्सन्ताधीयन्तइति वा परिधिशब्दस्य यौगिकत्वेन द्रव्यवाचित्वात्सस्थायुक्तेषु तु समुच्चय इति द्वादशाधिकरणन्यायात्तो चतुर्भिरग्निमादधइत्यत्र मन्त्रसमुच्चयायोकादाधाने सम्भाराणां दर्शपूर्णमासयोश्च परिधीनां समुच्चय इति । २ ।

न्यायगम्यो गुणयोः समुच्चयो यथा । अरुणयैकहायन्येत्यत्राख्याधिकरणन्यायेनैककर्म्यानियमः स्यादित्यनेनारुण्यस्यैकहायन्येकसंबन्धयोश्चान्योन्यनियमात्समुच्चयः । ३ ।

क्रिययोर्न्यायगम्यः समुच्चयो यथा एकादशे हि अङ्गानां तु शब्दभेदादित्यादिपञ्चदशसूत्रे द्वितीये ऽधिकरणे प्रयाजानुयाजादीनामङ्गानां विकल्पो ऽङ्गभूयस्त्वे फलभूयस्त्वं वेति पूर्वपक्षद्वयं निरस्यैकप्रयोगविधिविधेयत्वात्समुच्चय उक्तः । तथा द्वादशे क्रयणेषु त्वित्यत्र सन्निपातिक्रयसमुच्चयो न्यायगम्य उक्तः । तथा द्वादशे ( पा० ३ अ० ६ ) समुच्चयस्त्वदोषानिर्घातार्थेष्वित्याधिकरणे

नैमित्तिककर्त्वङ्गक्रियासमुच्चयो न्यायगम्य उक्तः । ४ ।

न्यायगम्यो जातिद्रव्ययोः समुच्चयो यथा । "अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाती"ति गोपशमाम्नातमित्याकृत्यधिकरणं भाष्यशब्दस्यादिति सूत्रव्याख्याने वार्त्तिककृतोक्तम् । तत्रैकहायनीपिङ्गाक्षीशब्दाभ्यां यौगिकाभ्यामुक्तस्य द्रव्यस्य गोशब्दोक्तायाश्च जातेरुणाधिकरणन्यायेन समुच्चय । ५ ।

जातिगुणयोरपि न्यायगम्यः समुच्चयोऽत्रैव गोत्वारुण्ययोः । ६ ।

न्यायगम्यो जातिक्रिययोः समुच्चयो यथा । निर्मन्थ्येनेष्टकाः पचन्तीति । न ह्यरुणाधिकरणे ( अ० ३ पा० १ अ० ६ ) नियम्यमानस्य स्वशब्देनोपादानं न्यायशरीरान्तर्गतं किं तु यथा कथं चिदुपादानमपेक्षते अस्ति चात्र पाकेनाक्षिप्ततो ऽग्निजातेरुपादानम् । तेन निर्मन्थ्यशब्दाभिहिताया मथनक्रियाया पाकाक्षिप्तायाश्चाग्निजातेरैककर्म्यादरुणान्यायेनैव समुच्चय इति । ७ ।

न्यायगम्यो द्रव्यगुणयोः समुच्चयो यथा । एकहायनीपिङ्गाक्षीशब्दाभ्यामभिहितस्य द्रव्यस्यारुण्यस्य च समुच्चयः । ८ ।

न्यायगम्यो द्रव्यक्रिययोः समुच्चयो यथा । निर्मन्थ्यशब्देन यौगिकेन द्रव्योपादानात्तस्य मथनक्रियायाश्चान्योन्यनियमादरुणान्यायेनैव समुच्चयः । ९ ।

न्यायगम्यो गुणक्रिययोः समुच्चयो यथा । "लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ती"ति । अत्र हि वस्यते परिधीयते तद्वसनमिति यौगिको ऽयं वसनशब्दो निर्मन्थ्यवत् न वस्त्रजातिवचनः तथा सति उष्णीषस्यापि वस्त्रत्वाल्लोहितवसना इत्यनेनैव सिद्धे लोहितोष्णीषा इत्यनर्थकं स्यात् । ततश्च निर्मन्थ्यशब्देनेव वसनशब्देनोक्तायाः परिधानक्रियाया लोहित्यगुणस्य च प्रचरन्तीत्येकक्रियायद्वीकारादरुणान्यायेनैव समुच्चयः । १० ।

तदेवं न्यायगम्यानां द्विकसमुच्चयभेदानां दशानामुदाहरणान्युक्तानि एवं जातिद्रव्यगुणानां जातिद्रव्यक्रियाणां जातिगुणक्रियाणां द्रव्यगुणक्रियाणामिति त्रिकविषयाश्चत्वारश्चतुष्कविषयश्चैक इति पञ्चानां न्यायगम्यसमुच्चयभेदानामुदाहरणानि वाच्यानि ।

यथारुणाधिकरणे गोत्वजात्येकहायनीद्रव्यारुण्यगुणानामित्यादि । त परे पञ्चदशन्यायगम्यसमुच्चयभेदाः क्रत्वर्थजात्यादिविषया

एवोदाहृताः । एवं पुरुषार्थजात्यादिविषया अपि पञ्चदशन्यायगम्यसमुच्चयभेदा उच्यन्ते ।

तत्र पुरुषार्थयोर्जात्योर्न्यायगम्यः समुच्चयो यथा ।
मनुः । तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणामिति ॥

अत्र हि व्रीहियवैरिति द्वन्द्वोपात्तं समुच्चितं जातिद्वयं प्रकृतश्राद्धाश्रितं फले विधीयते । एवं मूलफलेनेति ।

पुरुषार्थद्रव्ययोर्न्यायगम्यः समुच्चयो यथा ।

मार्कण्डेयः ।

भक्ष्यभोज्यैस्तु संस्कृतैः । रागखाण्डवचोष्यैश्च । दत्तैस्तु मासं प्रीयन्ते श्राद्धेषु पितरो नृणामिति ।

अत्र हेमाद्रिणा व्याख्यातं दन्तैरवखण्ड्य यद्भुज्यते तद्भक्ष्यम् । यत्तनातिकाठिन्यादतिप्रयत्नवत्खण्डनानपेक्षं चर्वयित्वैव निगीर्यते तद्भोज्यम् । यस्योष्ठदशनरसनादिभिर्निष्पीडितस्य ससूत्कारेण मुखमारुतेन रसो निष्पीयते तच्चोष्यं यथेक्षुखण्डादिकं मुद्गादकथादिरसाः क्वाथगृहीताः शर्करादियुक्ता रागाः । अम्लादियुक्ताः खाण्डवा इति । तत्रैते सर्वे न जातिवचनाः किं तु द्रव्यवचनाः । तत्र भक्ष्यभोज्यचोष्यशब्दा उक्तार्थविशेषवचनेभ्यो धातुभ्यः कृत्प्रत्यये कृते निष्पत्तेर्यौगिकत्वाद् द्रव्यवचनाः । रागखाण्डवशब्दौ तु रूढावपि कुलालादिशब्दवदाकृत्यधिकरणाविषयत्वाद् रूढयोपाधिविशिष्टद्रव्यवचनाविति द्रव्याणामेवात्र द्वन्द्वोपात्तानां प्रकृतश्राद्धाश्रितानां फले न्यायगम्यः समुच्चय इति ।

पुरुषार्थयोर्गुणयोर्न्यायगम्यः समुच्चयो यथा ।

वायुपुराणे ।

स्निग्धमुष्णं च यो दद्यादग्निष्टोमफलं लभेदिति ।

न च चशब्ददर्शनाद्वाचनिकोऽयं समुच्चय इति भ्रमितव्यम् । ऐकार्थ्यभावादेकवाक्योपादानादेव समुच्चयसिद्धौ चशब्दस्यानुवादत्वात् । न च स्निग्धोष्णशब्दौ द्रव्यविधौ लोहितोष्णीषादिवत्प्राप्तगुणस्यैव विधानाद् द्रव्यस्य तु श्राद्धविधिना प्राप्तस्यैवानुवादात् ।

पुरुषार्थक्रियासमुच्चयो न्यायगम्यो यथा । "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते"ति । अत्र हि यजिरूपैकपदोपादानादाग्नेयादीनां साहित्यं फले विवक्षितमित्येकादशाद्ये साधितम् ।

पुरुषार्थयोर्जातिद्रव्ययोर्न्यायगम्यः समुच्चयो यथा ।

पद्मपुराणे ।

सम्वत्सरं तथा गव्यं पयः पायसमेव चेति ।

अत्रापि चशब्दो ऽनुवादः एकवाक्योपादानेन न्यायादेव समुच्चयसिद्धेः । न च भिन्नपदोपात्तयोः पयःपायसयोर्विधौ वाक्यभेदः इन्द्रियकामाधिकरणे गुणफलसम्बन्धविधौ भावनान्तरविध्यभ्युपगमेनोभयविशिष्टैकफलभावनाविधानाद्वाक्यभेदात् ।

पुरुषार्थयोर्जातिगुणयोर्न्यायगम्यः समुच्चयो यथा । "खादिरं वीर्यकामस्य यूपं कुर्वीते"ति । इहापि हि खादिरप्रातिपदिकोपात्तया जात्या एकवचनोपात्तया चैकत्वसंख्यया विशिष्टं यदेकं करणकारकं द्वितीयालक्षितं तद्विशिष्टैका फलभावना विधीयते । तत्र खदिरत्वजातेरेकसंख्यायाश्चैकपदोपादानात्पशुना यजेतेतिवत्समुच्चयः । जातिक्रिययोः पुरुषार्थयोः समुच्चयं उदाहरणं मृग्यम् ।

पुरुषार्थयोर्द्रव्यगुणयोर्न्यायगम्यः समुच्चयो यथा । "गोदोहनेन पशुकामस्य प्रणयेदि"ति । अत्रापि हि खादिरपदवद्यौगिकगोदोहनप्रातिपदिकोक्तेन द्रव्येण एकवचनोपात्तया चैकत्वसंख्यया विशिष्टमेकं करणकारकं फले विधीयते । तयोर्द्रव्यसंख्ययोरेकपदोपादानात्पशुनेतिवत्समुच्चयः । ननु "चमसेनापः प्रणयेदि"ति चमसैकत्वं चमसस्थानापन्ने गोदोहने ऽपि प्राप्तमेवानूद्यताम् । न च प्रणयनाङ्गमेवैकत्वस्य द्वारमपेक्षितामिति वाच्यम् । अभ्युदयेष्टिज्यार्थत्वेन श्रपणानङ्गभूतयोरपि दधिपयसोः प्रणीतास्थानापन्नया प्रणीताधर्मप्राप्तेर्नियमे व्यापनात् । नैवम् । प्रणीताधर्माणां हि प्रणीताङ्गत्वात्प्रणीतास्थानापन्नयोर्दधिपयसोर्युक्ता प्राप्तिः चमसैकत्वं तु न चमसस्याङ्गं पश्वेकत्वमिव पशोः ।

तथा पश्वङ्गमेकत्वं पदश्रुत्या प्रतीयते ।
समानप्रत्ययश्रुत्या बलीयस्या क्रियाङ्गता ॥

इति न्यायात् तेन चमसाधर्मत्वान्न चमसैकत्वं चमसस्थानापन्ने ऽपि गोदोहने प्राप्नोति । नन्वेवं स्थानापत्तिरूपेणातिदेशेन प्राप्तचमसैकत्वं गोदोहने उपदेशेनैव तु प्राप्नोतु । चमसेनेति हि चमस एकत्वं च प्रणयनाङ्गं प्रणयनं च गोदोहनस्याश्रयः । तत्र गोदोहनेनैककार्यत्वाच्चमसमात्रबाधे ऽपि भिन्नकार्यत्वान्नैकत्वं बाध्यत इति तदङ्गकमेव प्रणयनमाश्रयो भवतीत्येकत्वानुवाद एव स्यात् । न च "नानृतं वदेदि"ति पुरुषार्थनिषेधे ऽपि क्रत्वर्थं संयोगान्तरमर्थवदित्युक्तं कर्त्रधिकरणे तद्वदत्र क्रत्वर्थत्वे ऽप्येकत्वस्य पुरुषार्थं संयोगान्तरमर्थवदिति वाच्यम् । तत्र हि पुरुषार्थनिषेधेन

नेनाभिध्यति यत्तदतिक्रमे क्रतुफलं न भवतीति तदर्थं संयोगान्तरं इह तु फलार्थसंयोगान्तराभावे ऽप्येकत्वस्य प्रणयनाङ्गत्वातिक्रमे विगुणप्रणयनाश्रिताद्गोदोहनात्फलं न भवतीति सिद्धमेवैकेनैव क्रत्वर्थसंयोगेनेत्यनर्थकं संयोगान्तरम् । तस्माद्गोदोहनेनेत्येकत्वानुवाद एव स्यात् । मैवम् । चमसैकत्वं हि प्रणयने उपदिश्यमानं द्वारमाकाङ्क्षमाणं प्रणयने यद्विधितो नित्यं चमसादि तद्द्वारैव प्रणयने उपदिश्यते अन्यथा नित्यानित्यसंयोगविरोधात् । तस्माद्गोदोहनाश्रयीभूते क्रत्वङ्गे ऽपि प्रणयने नित्यद्वाराभावाचोपदेशतश्चमसैकत्वं प्राप्नोतीति । गोदोहनेनेत्येकत्वानुवादासम्भवाद् गोदोहनं तदेकत्वं चोभयं समुच्चितं फलार्थं विधीयतइति सिद्धम् । द्रव्यक्रिययोः पुरुषार्थयोर्न्यायगम्ये समुच्चये उदाहरणं मृग्यम् ।

गुणक्रिययोः पुरुषार्थयोर्न्यायगम्यः समुच्चयो यथा "ज्योतिष्टोमेन स्वर्गकामो यजेते"ति । अत्र द्वारुण्यैकहायन्येतिवदेकवाक्योपात्तं ज्योतिष्टोमेनेत्येकत्वं करणे यागश्च यजिना करणत्वेन लक्षितः फलभावनायां समुच्चित्य विधीयते इति । एवमेव जात्यादित्रिकविषयेषु चतुर्षु भेदेषु चतुष्कविषये चैकस्मिन्भेदे उदाहरणान्यन्वेष्याणि । तदेवं न्यायगम्यस्त्रिविधः समुच्चयो निरूपितः । वाचनिकस्यापि समुच्चयस्य तावन्त एव भेदास्त उच्यन्ते ।

यद्यपि दर्शपूर्णमासादिसमुच्चयो ऽपि प्रागुक्तः कश्चिदेकपदव्याद्यभिधानश्रुतिगम्यः कश्चिदेकवाक्यगम्य इति वाचनिक एव तथापि चशब्दोभयशब्दादिश्रुतिगम्य एवेह वाचनिकत्वेनाभिप्रेत इति भेदः ।

तत्र क्रत्वर्थजातिसमुच्चयो वाचनिको यथा । गौश्चाश्वश्चेत्यादिः । न चात्रैकवाक्योपादानादेव समुच्चयसिद्धौ चशब्दो ऽनुवादमात्रमिति वाच्यम् । "ऋत्विग्भ्यो दक्षिणां ददाती"ति प्राप्तदक्षिणाद्देशेनानेकद्रव्यविधौ वाक्यभेदापत्तेश्च यद्यार्थविधिशादनेकद्रव्यविधि विनैकवाक्योपादानस्यैवासिद्धेः ।

क्रत्वर्थद्रव्यसमुच्चयो वाचनिको यथा । सवनीयेषु "आग्नेयमजमग्निष्टोमआलभते"त्युक्त्वा ऐन्द्राग्नमुक्थ्ये द्वितीयमैन्द्रं वृष्णिं षोडशिनि तृतीयं सारस्वतीं मेषीमतिरात्रे चतुर्थीमिति द्वितीयादिशब्दैश्चशब्दस्थानीयैर्यौगिकैन्द्राग्नादिशब्दोक्तानां तत्तद्देवताविशिष्टद्रव्याणां समुच्चयो विधीयते । अन्यथा सवनीयसमाख्यया एककार्यत्वावगमादुक्थ्याद्युत्तरसंस्थासु विकृतिरूपदिष्टैरैन्द्राग्नादिभिरतिदिष्टस्य पूर्वस्याग्नेयस्य बाधापत्तेः । तदिदं संख्याधिकरणे वार्त्तिकक्रु-

तोक्तम्।

क्रत्वर्थगुणसमुच्चयो वाचनिको यथा।

ब्रह्मपुराणे।

मृष्टस्निग्धानि यानि स्युरीषत्कट्वम्लकानि च।
स्वादूनि देवभोज्यानि तानि श्राद्धे नियोजयेदिति॥

अत्रापि स्निग्धकट्वम्लकशब्दैररुणादिवद् गुणाश्चनेके गुणाः प्राप्तश्राद्धोद्देशेन चशब्दात्समुच्चिता एव गौण्याश्चैवमित्यादिवद्विधीयन्ते।

क्रत्वर्थक्रियासमुच्चयो वाचनिको यथा। "संसव उभे कुर्याद् गोसव उभे कुर्याद्" इति वार्तिककृन्मते अतिदेशतो विकल्पेन प्राप्तयोर्धर्म्यन्तरसाधनकपृष्ठसाधनकयोः पृष्ठयोः समुच्चयो विहितो समुच्चयाविशिष्टपदार्थवाचिना उभयशब्देन विहितः।

क्रत्वर्थजातिद्रव्यसमुच्चयो वाचनिको यथा।

देवलः।

ततो ऽन्नं बहुसंस्कारं नैकव्यञ्जनभक्षवत्।
चोष्यपेयसमृद्धं च यथाशक्त्युपकल्पयेदिति॥

अत्र प्राप्तश्राद्धोद्देशेनौदनजातिरन्नशब्देनोक्ता यौगिकचोष्यपेयशब्दोक्तं च द्रव्यं वाक्यभेदपरिहाराय चशब्देन समुच्चित्य विधीयन्ते।

क्रत्वर्थजातिगुणसमुच्चयो वाचनिको यथा। देवलः।

अथ पिण्डावशिष्टान्नं भोजयेत्प्रयतो द्विजान्।
भोजनैः सतिलैः स्नेहैर्भक्ष्यपूपविमिश्रितैरिति॥

अत्र स्नेहैरिति गुणास्तिलजातिश्च सहादेशोपस्थापितशब्देन च शब्दसमानार्थेन प्राप्ते श्राद्धे समुच्चित्य विधीयते।

क्रत्वर्थजातिक्रियासमुच्चयो वाचनिको यथा।

शङ्खलिखितौ।

तस्मात्तिलैर्मांसैः शाकैः पूपैः कृसरपायसापूपैर्लाजैर्भक्षैः पानैर्मधुना घृतेन दध्ना पयसा च मधुमतीमिश्रमन्नं दद्यादिति।

अत्र निर्मन्थ्यशब्दवत्पयसा श्रृतं पायसमिति श्रृतार्थलाक्षणोपात्ता श्रपणक्रिया पयआदिजातिश्च चशब्देन प्राप्ते श्राद्धे समुच्चित्य विधीयते।

क्रत्वर्थद्रव्यगुणसमुच्चयो वाचनिको यथा।

ब्रह्मपुराणे।

पूरिकां च रसालां च गोक्षीरं च नियोजयेत्।

यानि चाभ्यवहार्याणि स्वादुस्निग्धानि भो द्विजाः।
ईषदुष्णकटून्येव देयानि श्राद्धकर्मणीति ॥

अत्र रसालाशब्दः कुलालशब्दवद्रूढो ऽपि न जातिवचनः। किं तु।

सिताचतुर्जातमधूषणाढ्यं दधिप्रघृष्टं सरसं रसाला।

इत्युपाधिपुरस्कारेण द्रव्यवचनः। चशब्देन च तद्द्रव्यं स्निग्धोष्णादिश्च गुणः समुच्चित्य प्राप्ते श्राद्धे विधीयते।

कत्वर्थद्रव्यक्रियासमुच्चयो वाचनिको यथा। पूर्वोक्ते शङ्खलिखितवाक्ये पायसशब्दः श्रपणक्रियाविधिनिर्मथ्यपदादिर्युक्तं भक्षशब्दो यौगिको द्रव्यवचन इत्यप्युक्तम्। अतस्तत्र क्रियाद्रव्ये चशब्देन समुच्चित्य प्राप्ते श्राद्धे विधीयेते।

कत्वर्थगुणक्रियासमुच्चयो वाचनिको यथा। सौरपुराणे।
विविधं पायसं दद्यात् भक्ष्याणि विविधानि च।
लेह्यं चोष्य यथाकाममुष्णमेव फलं विमेति ॥

अत्रपायसशब्दे प्रत्ययोपात्ता श्रपणक्रिया उष्णगुणश्च चशब्देन समुच्चित्य प्राप्ते श्राद्धे विधीयते। एवं कत्वर्थजात्यादिविषया वाचनिकसमुच्चयभेदा दश सोदाहरणा उक्ताः।

एवमेव दशपुरुषार्थजात्यादिविषया वाचनिकसमुच्चयभेदास्तदा स्युर्यद्युदाहरणानि सम्भवेयुर्न तु तानि सम्भवन्ति यानि तु।

श्यामाकैश्चणकैः शाकैर्नीवारैश्च प्रियङ्गुभिः।
गोधूमैश्च तिलैर्मुद्गैर्मासं प्रीणयते पितॄन् ॥

इत्यादीनि कूर्मपुराणादिवाक्यानि प्रकृतश्राद्धाश्रितव्रीह्यादिजातीनां चशब्देन समुच्चितानां फलसम्बन्धबोधकानीव दृश्यन्ते। तत्र सर्वत्रानेकव्रीह्यादिविशिष्टफलभावनाविधाने वाक्यभेदाभावात् एकवाक्योपादानेनैव समुच्चये सिद्धे चशब्दस्यानुवादत्वात् क्वापि वाचनिकः पुरुषार्थजात्यादिसमुच्चयो ऽस्ति पुरुषार्थपयआदिजातेः पुरुषार्थगयाश्राद्धक्रियायाश्च चशब्देन फले वाचनिकसमुच्चयोदाहरणं दृश्यते।

पाद्मे।

वार्ध्रीणसामिषं लोहं कालशाकं तथा मधु।
दुहितामिषमन्नं च दत्तान्यात्मकुलोद्भवैः ॥
अनन्तां वै प्रयच्छन्ति तृप्तिं गौरीसुतस्तथा।
पितॄणां नात्र सन्देहो गयाश्राद्धं च भो द्विजाः ॥

इतिग चात्र पयआदिना गयाश्राद्धेन च विशिष्टैका फलभावना

विधीयत इत्यवाक्यभेद इति वाच्यम् । रेवतीवारवन्तीयसम्बन्धेन यागेन च विशिष्टाया एकस्याः फलभावनाया विधानेन वाक्यभेदोऽद्वारा-द्वेवत्यधिकरणसिद्धान्तभङ्गापत्तेः । तस्माच्चशब्देनैवात्र वाक्यभेद-परिहारो वाच्य इति । यदा त्वत्रापि प्रकृतश्राद्धाश्रितजात्यादित्तत्प्र-कृतश्राद्धाश्रितैव यथापि देशः फलाय विधीयते आश्रयश्राद्धानुवा-देन "संक्रमयज्ञेन यजेत साकं प्रस्थाय्येन यजेत" इतिवत्तदा नास्त्येव वाचनिके पुरुषार्थजातिक्रियासमुच्चये उदाहरणम् । एवमेव जात्या-दित्रिकविषयेषु चतुर्षु भेदेषु चतुष्कविषये चैकस्मिन्भेदे पञ्चो-दाहरणान्यन्वेष्याणि ।

इति वाचनिकसमुच्चयभेदास्त्रयो निरूपिताः ।

इदानीमैच्छिकसमुच्चयभेदास्तावन्त एवोच्यन्ते ।

तत्र तु क्रत्वर्थजात्यादिविषयेषु पञ्चदशस्वैच्छिकेषु समुच्चय-भेदेषु प्रायश उदाहरणानि न सन्ति । क्रत्वर्थानां जात्यादीनां प्र-योगविधिना नित्यवत्समुच्चयस्यैव सिद्धेः । पुरुषार्थजात्यादिविषयेषु तु पञ्चदशस्वैच्छिकेषु समुच्चयभेदेषु उदाहरणान्युच्यन्ते । तेषां चैकफलत्वे न्यायेन विकल्पावश्यम्भावात्फलभेदएवोदाहरणानि स-म्भवन्ति । तथा एकाश्रयत्वे फलभेदे ऽप्यैच्छिको विकल्प एव भव-ति । यथा ऽऽश्वलायनसूत्रे यवागूरोदनोदधिसर्पिर्ग्रामकामान्नाद्यका-मेन्द्रियकामतेजस्कामानामिति । अत्र यवाग्वादीनां चतुर्णां क्रमेण फलचतुष्टयकामनायामैच्छिको विकल्प एव भवति न समुच्चयः । तस्मात्फलभेदवन्त्याश्रयभेदवन्ति चेहोदाहरणानि प्रायशः ।

तत्र पुरुषार्थजातिसमुच्चय ऐच्छिको यथा "कांस्येन ब्रह्म-वर्चसकामस्य प्रणयेत्" । "आहार्यपुरीषां पशुकामस्य वेदीं कुर्वीते"ति दर्शपूर्णमासयोर्ब्रह्मवर्चसपशुरूपफलद्वयकामनायां प्रणयनपात्रप्रकृ-तिपरिच्छेदककांस्यजातेर्वेदिप्रकृतिपरिच्छेदकपुरीषजातेश्च ऐच्छिकः समुच्चयः ।

ननु "वेदीं खनती"ति नित्यप्रयोगे खननोत्पाद्यं मृदाख्यं पुरीषं प्राप्तमेव तत्र प्राप्ताप्राप्तविवेकेनाहरणमेवाहार्यपुरीषामित्यत्र विधी-यते न मृज्जातिः । न । आहरणस्याहार्यसापेक्षत्वात्पुरीषमप्यपदयं वि-धेयं तत्राप्रतीतं विशेषणत्वं हित्वा प्रतीतविशेष्यत्वेनैव विधिर्युक्तः । तथा च वेद्याश्रयानुवादो ऽप्युपपन्नः अन्यथा क्रियाया आश्रयानपे-क्षत्वात्तदनुपपत्तिरिति ।

पुरुषार्थद्रव्यसमुच्चय ऐच्छिको यथा । आश्वलायनसूत्रे

गात्मनस्तत्परिमाणस्य वा गुणस्य पशुफलार्थं विहितस्योभयफलकामनायामैच्छिकः समुच्चयः ।

पुरुषार्थद्रव्यक्रियासमुच्चय ऐच्छिको यथा ।

गोदोहनस्य एकविंशत्यनुवचनस्य चोभयफलकामनायामैच्छिकः समुच्चयः ।

पुरुषार्थगुणक्रियासमुच्चय ऐच्छिको यथा ।

वत्सजान्वाकारस्य एकविंशत्यनुवचनस्य चोभयफलकामनायामैच्छिकः समुच्चयः ।

पुरुषार्थजातिद्रव्यगुणत्रिकस्यैच्छिकः समुच्चयो यथा ।

दर्शपूर्णमासयोराहार्यपुरीषगोदोहनवत्सजान्वाकाराणां त्रयाणां पशुत्रयकामनायां समुच्चय ऐच्छिकः ।

पुरुषार्थजातिद्रव्यक्रियात्रिकस्यैच्छिकः समुच्चयो यथा । आहार्यपुरुषगोदोहनैकविंशत्यनुवचनानां पशुद्वयप्रतिष्ठाकामनायामैच्छिकः समुच्चयः ।

पुरुषार्थजातिगुणक्रियात्रिकस्यैच्छिकः समुच्चयो यथा । आहार्यपुरीषवत्सजान्वाकारैकविंशत्यनुवचनानां पशुद्वयप्रतिष्ठाकामनायामैच्छिकः समुच्चयः ।

पुरुषार्थद्रव्यगुणक्रियासमुच्चय ऐच्छिको यथा गोदोहनवत्सजान्वाकारैकविंशत्यनुवचनानांपशुद्वयप्रतिष्ठाकामनायामैच्छिकः समुच्चयः ।

पुरुषार्थचतुष्टयसमुच्चयो यथा आहार्यपुरीषगोदोहनवत्सजान्वाकारैकविंशत्यनुवचनानां चतुर्णामपि पशुत्रयप्रतिष्ठारूपफलचतुष्टयकामनायामैच्छिकः समुच्चयः । एवमैच्छिकसमुच्चयभेदास्त्रिंशन्निरूपिताः । तदेवं न्यायगम्यास्त्रिंशद्वाचनिकास्त्रिंशदैच्छिकास्त्रिंशदिति नवतिसमुच्चयभेदा उक्ताः । एते च जात्यादिसमुच्चयाभावविषया एवेत्युक्तम् ।

ते च पुनः पञ्चधा ।

केचिद् प्रकृतावुपातिदिष्टपदार्थविषयाः ।

केचिद्विकृतावुपदिष्टपदार्थविषयाः ।

केचित्प्रकृतिविकृत्यनात्मककर्मोपदिष्टपदार्थविषयाः ।

केचिद्विकृतावतिदिष्टपदार्थविषयाः ।

केचिद्विकृतावेवोपदिष्टातिदिष्टपदार्थविषया इति ।

तत्राद्योदाहरणम् । यथा क्रये गवाश्वादीनां क्रयाणां च ज्योतिष्टोमे दर्शपूर्णमासयोश्चादोषनिर्घातार्थप्रायश्चित्तानाम् । तत्रो-

सरद्वयं द्वादशे उक्तं तथा द्वादशे याज्यानुवाक्ययोः समुच्चय उक्तः।

द्वितीयोदाहरणे यथा दशपेये "शतं ब्राह्मणाः सोमान्भक्षयन्ती"-त्युपदिष्टायाः ब्राह्मणजातेर्दशदशैकैकं चमसमनुप्रसर्पन्तीत्युपदिष्टायाः शतसंख्यायाश्च समुच्चय इति।

तृतीयोदाहरणं यथा। आधाने पवमानेष्टीनां समुच्चयः। तत्रापि माष्यकृन्मते तासामाधानेन समुच्चयो धार्तिकः संवत्सरे विपेद् द्वादशसु रात्रिषु सद्यो वेति। वार्त्तिककृन्मते ऽप्यङ्गत्वाभ्युपगमात् तासामेव तिसृणामन्योन्य"मग्नये पवमानायाग्नये पावकायाग्नये शुचय"इति।

चतुर्थोदाहरणं यथा। "संसव उभेकुर्यात् गोसवउभे कुर्याद-पचितायप्येकाहे उभे वृहद्रथन्तरे कुर्यादि"ति।

पञ्चमोदाहरणं यथा।संस्थाधिकरणे संस्थापशोरैन्द्राग्नस्य द्वितीयमित्युक्त्यादिविकृतावुपदिष्टस्यैन्द्राग्नादेरतिदिष्टस्य चाग्नेयस्य सवनीयस्य समुच्चय उक्तः।तथा दशमे (पा०२अ०१६) द्रेष्ये धाचोदनाद्दक्षिणापनयः स्यादित्यधिकरणे प्राकृतवैकृतदक्षिणासमुच्चय उक्तः। तथा नैमित्तिके तु कार्यत्वात्प्रकृते स्यात्तदापत्तेरित्यधिकरणे वायव्यादिपशावुपदिष्टश्वेतगुणस्य प्राकृतजात्यादिजातेश्च समुच्चय उक्तः। तथा षड्भिर्दीक्षयतीत्यधिकरणे ( अ० १ पा० ३ अ० ४ )'याकूतिमग्निमित्यादयः। षड्भिर्दीक्षयतीति दीक्षार्थतयोपदिष्टा यवमन्त्राः अतिदिष्टैर्दीक्षार्थैराकृत्ये प्रयुजे ऽग्नय इत्यादिभिः षड्भिर्मन्त्रैः सह समुच्चीयन्ते द्वादश जुहोतीति दीक्षावृत्तिविधेरित्युक्तम्।

तथा यजुर्युक्तइत्याधिकरणे ( अ०१०पा०३अ०१)वाजपेये यजुर्युक्तं रथमध्वर्यवे ददातीति यजुर्युक्तेनोपदिष्टेनातिदिष्टस्याध्वर्युभागस्य समुच्चय इत्युक्तम्।

तथा तदुत्तराधिकरणे ( अ० १० पा० ४ अ०१ ) नक्षत्रेष्टौ सो ऽनुजुहोतीत्युपदिष्टानामुपहोमानामतिदिष्टानां च नारिष्टहोमानां समुच्चय उक्तः।

तथा तदुत्तराधिकरणे वृहस्पतिसवादौ बार्हस्पत्यं गृह्णातीति महान्तरस्योपदिष्टस्यातिदिष्टानां च ग्रहाणां समुच्चय इत्युक्तम्।

तथा तदुत्तराधिकरणे वाजपेये उपदिष्टानां प्राजापत्यपशूनामतिदिष्टानां च संस्थापशूनां समुच्चय उक्तः।

तथा तदुत्तराधिकरणे सांग्रहण्यामुपदिष्टानां त्रयाणामामहोमानामतिदिष्टैस्त्रिभिरनुयाजैः सह समुच्चय उक्तः।

गात्मनस्तत्परिमाणस्य या गुणास्य पशुफलार्थं विहितस्योभयफलकामनायामैच्छिकः समुच्चयः ।

पुरुषार्थद्रव्यक्रियासमुच्चय ऐच्छिको यथा ।

गोदोहनस्य एकविंशत्यनुवचनस्य चोभयफलकामनायामैच्छिकः समुच्चयः ।

पुरुषार्थगुणक्रियासमुच्चय ऐच्छिको यथा ।

वत्सजान्वाकारस्य एकविंशत्यनुवचनस्य चोभयफलकामनायामैच्छिकः समुच्चय. ।

पुरुषार्थजातिद्रव्यगुणत्रिकस्यैच्छिकः समुच्चयो यथा ।

दर्शपूर्णमासयोराहार्यपुरीषगोदोहनवत्सजान्वाकाराणां त्रयाणां पशुत्रयकामनायां समुच्चय ऐच्छिकः ।

पुरुषार्थजातिद्रव्यक्रियात्रिकस्यैच्छिकः समुच्चयो यथा । आहार्यपुरुषगोदोहनैकविंशत्यनुवचनानां पशुद्वयप्रतिष्ठाकामनायामैच्छिक. समुच्चयः ।

पुरुषार्थजातिगुणक्रियात्रिकस्यैच्छिकः समुच्चयो यथा । आहार्यपुरीषवत्सजान्वाकारैकविंशत्यनुवचनानां पशुद्वयप्रतिष्ठाकामनायामैच्छिकः समुच्चय ।

पुरुषार्थद्रव्यगुणक्रियासमुच्चय ऐच्छिको यथा गोदोहनवत्सजान्वाकारैकविंशत्यनुवचनानामपशुद्वयप्रतिष्ठाकामनायामैच्छिकः समुच्चयः ।

पुरुषार्थचतुष्टयसमुच्चयो यथा आहार्यपुरीषगोदोहनवत्सजान्वाकारैकविंशत्यनुवचनानां चतुर्णामपि पशुत्रयप्रतिष्ठारूपफलचतुष्टयकामनायामैच्छिकः समुच्चयः । एवमैच्छिकसमुच्चयभेदास्त्रिंशन्निरूपिताः । तदेवं न्यायगम्यास्त्रिंशद्वाचनिकास्त्रिंशदैच्छिकास्त्रिंशदिति नवतिसमुच्चयभेदा उक्ताः । एते च आत्यादिसमुच्चयाभावविषया एवेत्युक्तम् ।

ते च पुनः पञ्चधा ।

के चिद् प्रकृतावुपातिदिष्टपदार्थविषयाः ।

केचिद्विकृतावुपदिष्टपदार्थविषयाः ।

के चित्प्रकृतिविकृत्यनात्मककर्मोपदिष्टपदार्थविषयाः ।

केचिद्विकृतावतिदिष्टपदार्थविषयाः ।

के चिद्विकृतावेवोपदिष्टातिदिष्टपदार्थविषया इति ।

तत्राद्योदाहरणम् । यथा क्रये गवारणयादीनां क्रयाणां च ज्योतिष्टोमे दर्शपूर्णमासयोश्चादोपनिर्घातार्थप्रायश्चित्तानाम् । तत्रो-

सरद्वयं द्वादशे उक्त तथा द्वादशे याज्यानुवाक्ययो समुच्चय उक्त ।

द्वितीयोदाहरणं यथा दशपेये "शतं ब्राह्मणा सोमान्भक्षयन्ती"-त्युपदिष्टाया. ब्राह्मणजातेर्दशदशैकैकं चमसमनुप्रसर्पन्तीत्युपदिष्टाया शतसंख्यायाश्च समुच्चय इति ।

तृतीयोदाहरणं यथा । आधाने पवमानेष्टीनां समुच्चयः । तत्रापि भाष्यकृन्मते तासामाधानेन समुच्चयो वार्त्तिकमते संवत्सरे निर्वपेद् द्वादशसु रात्रिषु सद्यो वेति । वार्त्तिककृन्मते ऽप्यङ्गत्वाऽप्राकरणिकत्वात्तासामेव तिसृणामन्योन्य"मग्नये पवमानायाग्नये पावकायाग्नये शुचय"इति।

चतुर्थोदाहरण यथा। "ससव उभेकुर्याद् गोसव उभे कुर्याद-भिजितावप्येकाहे उभे बृहद्रथन्तरे कुर्यादि"ति ।

पञ्चमोदाहरण यथा।संख्याधिकरणे संख्या परा ऐन्द्राग्नमुखप्ये द्वितीयमित्युक्त्याऽऽदिविकृतायुपदिष्टस्यैन्द्राग्नादेरतिदिष्टस्य चाग्नेयस्य सवनीयस्य समुच्चय उक्त ।तथा दशमे (पा०२अ०१६) द्वैप्ये चाचोदनाद्दक्षिणापनय स्यादित्यधिकरणे प्राकृतवैकृतदक्षिणासमुच्चय उक्त । तथा नैमित्तिके तु कार्यत्वात्प्रकृते स्यात्तदापत्तेरित्यधिकरणे गायत्र्यादिपदायुपदिष्टयैतद्गुणस्य प्राकृताजादिजातेश्च समुच्चय उक्त । तथा पड्भिर्दीक्षयतीत्यधिकरणे ( अ० १ पा० ३ अ० ४ )प्रायाकूतिमग्निमित्यादय । पड्भिर्दीक्षयतीति दीक्षार्थतयोपदिष्टा षण्मन्त्रा अतिदिष्टैर्दीक्षार्थैराकूत्यै प्रयुज ऽग्नय इत्यादिभि पड्भिर्मन्त्रैः सह समुच्चीयन्ते द्वादश जुहोतीति दीक्षाहुतिविधेरित्युक्तम् ।

तथा यजुर्युक्तइत्यधिकरणे ( अ०१०पा०३अ०१)वाजपेये यजुर्युक्त रथमध्वर्यवे ददातीति यजुर्युक्तेनोपदिष्टनातिदिष्टस्याश्वयुंभागस्य समुच्चय इत्युक्तम् ।

तथा तदुत्तराधिकरणे ( अ० १० पा० ४ अ०१ ) नक्षत्रेष्टौ स्रोऽनुजुहोतीत्युपदिष्टानामुपहोमानामतिदिष्टानां च नारिष्टहोमानां समुच्चय उक्त ।

तथा तदुत्तराधिकरणे बृहस्पतिसवादौ बार्हस्पत्यं गृह्णातीति ग्रहान्तरस्योपदिष्टस्यातिदिष्टानां च ग्रहाणा समुच्चय इत्युक्तम् ।

तथा तदुत्तराधिकरणे वाजपेये उपदिष्टाना प्राजापत्यपशूनामतिदिष्टानां च संस्थापशूनां समुच्चय उक्त ।

तथा तदुत्तराधिकरणे सांग्रहण्यामुपदिष्टानां त्रयाणामामहोमानामतिदिष्टैस्त्रिभिरनुयाजैः सह समुच्चय उक्तः ।

तथा उपगेष्वित्यधिकरण(अ०१०पा०३अ०६)गवामयने महाव्रते दिक्षु दुन्दुभयो नदन्तीति प्रकृत्य पत्नय उपगायन्तीत्युपदिष्टानां पत्नीनामातिदिष्टैरुपगातृभिरृत्विग्भिः समुच्चय उक्तः।

तथा संस्कार चेत्यधिकरण ( अ० १० पा०३अ०७ ) अञ्जनाभ्यञ्जन गौग्गुलवेन प्रातःसवने ऽभ्यञ्जनमित्युपदिष्टगौग्गुलवाभ्यञ्जनस्यातिदिष्टनवनीताभ्यञ्जनेन सह समुच्चय उक्तः।

तथा तदुत्तराधिकरण ( अ०१पा०३अ०८ ) महाव्रते तार्प्यं यजमानः परिधत्त इत्युपदिष्टस्य तार्प्यस्यातिदिष्टस्य चाहतस्य समुच्चय उक्तः।

तथा तदुत्तराधिकरण (अ०१०पा०३अ०९) महाव्रतप्रयोगोपदिष्टश्लोकादिसाम्नामतिदिष्टानां च गायत्रादीनां समुच्चय उक्तः। तथा स्तोमविवृद्धावित्यधिकरण ( अ०१०पा०३अ०१२ ) द्वात्रिंशत्पवमानोऽभिषेचनीय इत्यादिविवृद्धस्तुत्युपदिष्टानां राजसाम्नामतिदिष्टानां च समुच्चय उक्तः।

यथा द्वादश (पा०४ अ०५) गुदेनाप्ययजतीति प्रतिपत्तिरूपस्य गुदस्याऽनेकेषां गुदानां समुच्चय उक्तः। अत्र च य क चिदन्य समुच्चयभेदा इष्यन्ते।

यथा वा द्वादशाध्याये(पा०४अ०३)याज्यानुवाक्ययोः समुच्चयः।

यथा वा द्वादशाध्याये ( पा० ३ अ० १४ ) एष ते चतुर्भिरग्निमादध इत्यादौ मन्त्रसमुच्चयः।

यथा वा ऽग्नहोत्रे अग्निसूर्यप्रजापतीनां देवतानां समुच्चयः।

यथा वा ज्यातिष्टोमे प्राकरणिकग्रहणसमुच्चयादर्थाऽसिद्धो यागे ऽसङ्गभूतानामपीन्द्रवाय्वादीनां समुच्चयः। तदुक्तं पशुसामाधिकरणे वार्त्तिककृद्भिर्देवतानामन्यसंयुक्तत्वादक्रियारूपत्वाच्च न प्रकरणेन यागार्थत्व विज्ञायते इति। यागानङ्गत्वादेव इमाः पुनर्ग्रहणसम्बद्धाः श्रुताः प्रकरणेन यागसम्बन्धं प्रतिपद्यन्त इति प्रसङ्गापकारित्वेन यागान्वयमात्रमुपक्रम उक्तम्।

उपसंहारे ऽपि तद्द्वारेण च देवतानामपि समुच्चयसिद्धिरित्येषापसंहृतं नाङ्गत्वम्। एवं तावद्वार्त्तिकार्थः प्रतिभाति। सोमेश्वरेण तूपसंहारवार्त्तिकमङ्गत्वपरतया व्याख्यातम्।

यथा वा सत्र "चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन्निति कर्तृसमुच्चयः।

यथा वाध्वर्यवे याजमाने च काण्डे दर्शपूर्णमासयोराम्नातेषु "वाजस्य मा प्रसवेन" त्यादिमन्त्रेषु सामाख्यानिकर्तृत्वय-

समुच्चयस्तृतीये (पा० ८अ०७) द्व्याम्नातेषूभौ द्व्याम्नानस्यार्थवत्त्वादित्यत्रोक्तः ।

यथा वा जातेष्टौ नैमित्तिकत्वान्यथानुपपत्तिकल्पितस्य प्रत्यवायपरिहाररूपाभावात्मकस्य फलस्यार्थवादिकेन पूतत्वरूपपापक्षयात्मकाभावफलेन सह भावात्मकैश्च तेजस्वित्वान्नादत्वेन्द्रियावित्वपशुमत्त्वरूपैः फलैः सह तेषामपि चान्योन्यं समुच्चयः । यथा वा स्वर्गादिकाम्यस्वफलार्थं विविदिषार्थं चानुष्ठितैरग्निहोत्रादिभिः प्रसङ्गान्नित्यप्रयोगफलसिद्धौ फलसमुच्चयः ।

यथा वा द्वादशे ( पा० ३ अ० ३ ) एककर्मणि शिष्टत्वाद् गुणानां सर्वकर्म स्यादित्यत्रोक्तः "ऋजुमाघारयति ऊर्ध्वमाघारयति दीर्घमाघारयति सन्ततमाघारयतीति विहितानामृजुत्वोर्ध्वत्वदीर्घत्वसन्ततत्वानां चतुर्णामाघारे समुच्चयः ।

यथा वा "त्वाष्ट्रं पात्नीवतमालभेत" "अग्नये ऽनीकवते प्रातरष्टाकपालं निर्वपेत्" । "अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् विष्णवे शिपिविष्टाय शृते चरुं इन्द्राय प्रदात्रे दधश्चरुं अग्नये पवमानायाग्नये पावकायाग्नये शुचये" इत्यादावनेकवाक्योपादानात्तत्तद्विशेषणानां तत्र तत्रोक्तः समुच्चयस्तु यथासम्भवं जात्यादिसमुच्चयेष्वन्तर्भवन्तीति कश्चित् । ऋजुत्वोर्ध्वत्वदीर्घत्वसन्ततत्वादीनामपि क्रियाधर्मत्वात्कर्मधर्मिणाश्चाभेदात्तत्समुच्चयः क्रियासमुच्चयभेदष्वेवान्तर्भवति । तथा कचित्समुच्चयस्यापि समुच्चयव्यतिरिक्तेन केन चिद्भावेन सह समुच्चयो भवति यथा "यस्य उभे बृहद्रथन्तरे कुर्यादि"त्यादौ द्वन्द्वोपात्तस्येतरेतरयोगात्मकस्य समुच्चयस्य द्विवचनोपात्तया बृहद्रथन्तररूपसमुच्चयव्यतिरिक्तया द्वित्वसंख्यया समुच्चयः । तदुक्तं दशमषष्ठे भाष्यकारेण । उपादेयत्वेन चानयोर्द्वित्वश्रुतिः समासश्रुतिश्च विवक्षितैवेति । अत्रोदाहरणान्तरं लिङ्गपादे सूत्रवाक्यविभागाधिकरणे वार्त्तिके उक्तम् । ननु चायमितरेतरयोगः फलार्थं विधास्यमान इति कर्त्तव्यतासम्बन्धरहितो यदात्मसज्ज्यमानो न शक्यते गमयितुमिति । नन्वेकयाज्याशब्दोपादानावगतेतरेतरयोगपरमेवेदं वार्त्तिकमस्तु न द्वन्द्वावगतेतरेतरयोगपरमिति चेत् । न । तेन सहापि नामान्तरेतरयुक्तत्वमात्रमेव धर्मो ऽभ्यधिको न समुदाय फलवानित्युपपन्नमवार्त्तिकाद् द्वन्द्वसमासोपात्तदर्शपूर्णमासनामगम्यस्यैवेतरेतरयोगस्य विवक्षितत्वाद्विवक्षितत्वाच्चन्नाविषयत्वावगमात् । एवं च यदतो वार्त्तिककृतो ऽपि भाष्यपदेऽयमर्थो ऽभिप्रेतो गम्यते द्वन्द्वं चार्थे द्वन्द्व इति स्मृतिबलाद्वा-

च्य एवेतरेतरयोगः तस्मिंश्च शाब्दे सति एकयजिशब्दोपादानार्थो न विवक्षितस्तस्य सन्निकृष्टप्रमाणद्वन्द्वादागतस्यैकशब्दोपादानेन लक्षणाया विप्रकृष्टेनानुवादादिति। एतत्तूदाहरणं मिश्राणां न सम्मतम्। षष्ठे ऽध्याये द्व्याधाने चेत्यत्र द्वन्द्वे इतरेतरयोगो न वाच्यः प्रधानभूतेन कारकेणाक्रावन्विताः समस्यमानपदार्था गुणभावेन च कारकं प्रति विवक्षितसाहित्यास्तथैव क्रियान्वयिनो भवन्ति। यत्र तु प्रधानभूताः पदार्थास्तत्र द्वन्द्वस्थानामपि साहित्यं न विवक्ष्यतइति प्रतिपादनात्। तदा च न्यायादेव समुच्चयावगमसिद्धेश्चार्थे द्वन्द्व इति स्मृतिः शब्दानुशासनमात्रपरा नार्थानुशासनपरापि। तस्मादेकपदेन समुच्चयसमुच्चये यूहद्रथन्तरे इत्येवोदाहरणम्। एकवाक्योपादानात्तु द्वित्वसमुच्चययोः समुच्चये दर्शपूर्णमासाभ्यामित्यप्युदाहरणमेव।

यदा हि न द्वन्द्ववाच्य इतरेतरयोगस्तदा वाक्यान्तरलभ्यत्वेन विप्रकृष्टात्समासलभ्यादितरेतरयोगाद्धाधार्थाधिकरणन्यायेन फलसम्बन्धिना यजेतेत्येकशब्देनोपादानाल्लभ्यमेव साहित्यं सन्निकृष्टमिति विधीयते द्वन्द्वस्तु तदंशो ऽनुवाद। लिङ्गपादवार्त्तिके तु परमतमभ्युपेत्ययाद एव। तदापि तु दर्शपूर्णमासाभ्यामिति समुदायगत द्वित्वं विवक्षितमेव। अन्यथा पौर्णमास्यधिकरणे दर्शपूर्णमासनाम्नो। प्रत्यक्षवचितोक्ते सङ्कल्पे यजेर्विशेषणापेक्षायां दर्शः पूर्णमासेश्च यक्ष्यइति सङ्कल्पपक्षे। तस्माद्दर्शपूर्णमासाभ्यां यक्ष्य इतीयसङ्कल्पसिद्ध्यै द्वित्वमपि विवक्षितमित्येकवाक्योपादानात् द्वित्वसमुच्चययोः समुच्चये दर्शपूर्णमासाभ्यां यजेतेत्यप्युदाहरणमिति सिद्धम्।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीमद्भनारायणात्मजभट्टशङ्करकृते मीमांसाबालप्रकाशे
समुच्चयभेदनिरूपणम्।

---

अथ द्वादशलक्षण्यां विप्रकीर्णा इतस्ततः।
वाक्यभेदभिदा सर्वाः सङ्क्षिप्येह प्रवीम्यहम्॥

तत्र त्रिविधस्तावद्वाक्यभेदः। आवृत्तिलक्षणो विभागलक्षणो वैरूप्यलक्षणश्चेति।

आवृत्तिलक्षणोऽपि त्रिविधः । प्रकृत्यावृत्तिः प्रत्ययावृत्तिरुभयावृत्तिश्चेति ।

प्रकृत्यावृत्तिरपि द्विविधा । प्रातिपदिकावृत्तिर्धात्वावृत्तिश्चेति।

प्रातिपदिकावृत्तिरपि द्विविधा । समासासमासभेदात् ।

प्रत्ययावृत्तिरपि चतुर्विधा । सुप्तिङ्कृत्तद्धितभेदात् । तदुक्तमर्थैकत्वादेकं वाक्यमित्यत्र वार्तिके । पदतदेकदेशतत्समूहावृत्तिप्रसङ्गात्मकस्तद्विभागलक्षणो वाक्यभेद इति । तथा विभागलक्षणे गम्यमानसम्बन्धत्यागोऽनेकादृष्टकल्पना च दोषः इतरत्रावृत्तेरवेदत्वादप्रामाण्यमिति। एतद्व्याख्यातं भट्टसोमेश्वरेण वाजपेयगुणविध्यावृत्तपदावृत्तिप्रैषैकत्वविवक्षायां पत्न्येकदेशप्रातिपदिकावृत्तिर्होविरातैदमयवेन विशेषणे हविरानिमार्ज्जैदिति पदसमूहावृत्तिरारुणयस्य शास्त्रप्रकरणनिवेशेऽरुणयेति पदस्य पिङ्गाक्ष्यादिवाक्याद्विभाग इति विभागलक्षणवाक्यभेदस्य त्ववान्तरभेदा न सन्तीति नाकाः ।

वैरूप्यलक्षणोऽपि वाक्यभेदोऽनेकविधः । वैरूप्यभेदात् । तत्र वैरूप्यं त्रिविधं प्रकृतौ प्रत्यये वाक्ये चेति ।

आद्यं वाजपेयगुणविधिपक्षे यजौ । कर्मत्वकरणत्वरूपमुद्देश्यत्वोपादेयत्वरूपं गुणप्रधानत्वरूपं विधेयत्वानुवाद्यत्वरूपं चेति चतुर्विधम् ।

द्वितीयं ग्रहमित्येकत्वस्य सम्मार्गं ग्रहं वा प्रति गुणत्वे द्वितीयाविभक्त्या लक्ष्ये ग्रहापेक्षया प्राधान्यस्यापि श्रौतत्वात् ।

तृतीयं तु अरुणयेत्यत्र तृतीयया करणीभूतामेकहायनीमुद्दिश्यारुणप्रातिपदिकार्थविधौ भिन्नपदोपात्तया अपेक्षकहायन्या एकवाक्ये वैरूप्यम् । तथाऽन्यान्यपि नानाविधानि वैरूप्याण्युच्यन्ते । अश्वप्रतिग्रहे लौकिकवैदिकोभयदाननिमित्तकत्वे क्रत्वर्थपुरुषार्थवैरूप्यम् । षष्ठचतुर्थैकादशे च । तत्र हि यः सत्रायागुरते स विश्वजिता यजेतेति विश्वजितः सत्रं प्रवृत्तमप्रवृत्तं च प्रति साधारण्येन विधौ प्रवृत्तं प्रति क्रत्वर्थत्वादप्रवृत्तं च प्रति पुरुषार्थत्वाद्वैरूप्यं स्यादित्युक्तम् । तथावघातस्याज्यौषधसान्नाय्यार्थत्वे दृष्टादृष्टार्थत्ववैरूप्यम् । तथा सोमवमने लौकिकवैदिकसोमवमननिमित्तकत्वेऽपेक्षितानपेक्षितविधिवैरूप्यम् । तथा पूर्वोदाहृते यः सत्रायागुरत इत्यत्रापि। तथा षष्ठेऽभ्युदितेऽष्टौ तण्डुलविवक्षायां दधिशृतयोर्देवतानपनयाद्देवताविधानाकाङ्क्षितानाकाङ्क्षितविधिवैरूप्यम् । तथा मातुलकन्यापरिणयने स्मृत्याचारतुल्यबलत्वे दोषजनकत्वाजनकत्वविरोधाद्वस्तुवैरूप्यम् । इदं

च्य एवेतरेतरयोग तस्मिंश्च शाब्दे सति एकयाजिशब्दोपादानार्थो न विवक्षितस्तस्य सन्निकृष्टप्रमाणद्वन्द्वावगतस्यैकशब्दोपादानेन लक्षणया विप्रकृष्टेनानुवादादिति । एतत्तूदाहरण मिश्राणां न सम्मतम् । षष्ठे ऽध्याये द्व्याधान चेत्यत्र द्वन्द्वे इतरेतरयोगो न वाच्य' प्रधानभूतेन कारकणाद्यान्विता समस्यमानपदार्था गुणभावेन च कारक प्रति विवक्षितसाहित्यास्तथैव क्रियान्वयिनो भवन्ति । यत्र तु प्रधानभूता पदार्थास्तत्र द्वन्द्वस्थानामपि साहित्य न विवक्ष्यतइति प्रतिपादनात् । तदा च न्यायादेव समुच्चयावगमसिद्धेश्चार्थे द्वन्द्व इति स्मृति शब्दानुशासनमात्रपरा नार्थानुशासनपरापि । तस्मादेकपदेन समुच्चयसमुच्चये बृहद्रथन्तर इत्येवोदाहरणम् । एकवाक्यापादानात्तु द्वित्यसमुच्चयया समुच्चय दर्शपूर्णमासाभ्यामित्यप्युदाहरणमय ।

यदा हि न द्वन्द्ववाच्य इतरेतरयोगस्तदा पदान्तरलभ्यत्वेन विप्रकृष्टात्समासलभ्यादितरेतरयोगाद्यावार्थाधिकरणन्यायेन फलसम्बन्धिना यजतेत्यकशब्दनोपादानाल्लभ्यमेन साहित्य सन्निकृष्टमिति विधीयत द्वन्द्वस्तु तदशो ऽनुवाद । लिङ्गपादवार्त्तिक तु परमतमभ्युपेत्यवाद एव । तदापि तु दर्शपूर्णमासाभ्यामिति समुदायगत द्वित्व विवक्षितमत्र । अन्यथा पौर्णमास्यधिकरणो दर्शपूर्णमासनाम्ना । प्रत्यकयाचितोक्ते सङ्कल्पे यजेविंशेषणापेक्षायां दर्शो पूर्णमासैश्च यक्ष्यइति सङ्कल्पापत्ते । तस्माद्दर्शपूर्णमासाभ्यां यक्ष्य इतीष्टसङ्कल्पसिद्ध्यै द्वित्वमपि विवक्षितमित्येकवाक्योपादानात् द्वित्वसमुच्चयया समुच्चये दर्शपूर्णमासाभ्या यजेतेत्यप्युदाहरणमिति सिद्धम ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमी-
मांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्म-
जभट्टशङ्करकृते मीमांसाबालप्रकाशे
समुच्चयभेदनिरूपणम् ।

---

अथ द्वादशलक्षण्यां विप्रकीर्णां इतस्तत ।
वाक्यभेदभिदा सर्वां सङ्क्षिप्येह ब्रवीम्यहम् ॥

तत्र त्रिविधस्तावद्वाक्यभेद. । आवृत्तिलक्षणो विभागलक्षणो वैरूप्यलक्षणश्चेति ।

आवृत्तिलक्षणो ऽपि त्रिविधः । प्रकृत्यावृत्तिः प्रत्ययावृत्तिरुभयावृत्तिश्चेति ।

प्रकृत्यावृत्तिरपि द्विविधा । प्रातिपदिकावृत्तिर्धात्वावृत्तिश्चेति ।

प्रातिपदिकावृत्तिरपि द्विविधा । समासासमासभेदात् ।

प्रत्ययावृत्तिरपि चतुर्विधा । सुप्तिङ्कृत्तद्धितभेदात् । तदुक्तमर्थैकत्वादेकं वाक्यमित्यत्र वार्तिके । पदतदेकदेशतत्समूहावृत्तिप्रसङ्गात्मकस्त्रिविभागलक्षणो वाक्यभेद इति । तथा विभागलक्षणे गम्यमानसम्बन्धत्यागो ऽनेकादृष्टकल्पना च दोषः । इतरत्रावृत्तत्वदन्यादप्रामाण्यमिति । एतद्व्याख्यातं भट्टसोमेश्वरेण वाजपेयगुणविधायापातपदावृत्तिर्ग्रहैकत्वविवक्षायां पदैकदेशप्रातिपदिकावृत्तिर्हविरात्यैकत्वेन विशेषणे हविरार्तिमार्छेदिति पदसमूहावृत्तिरारण्यस्य पुरस्तत्प्रकरणनिवेशो ऽरुणयेति पदस्य पिङ्गाक्ष्यादिवाक्याद्विभाग इति विभागलक्षणवाक्यभेदस्य त्वनान्तरभेदा न सन्तीति नाशङ्का ।

वैरूप्यलक्षणो ऽपि वाक्यभेदो ऽनेकविधः । वैरूप्यभेदात् । तत्र वैरूप्यं त्रिविधं प्रकृतौ प्रत्यये वाक्ये चेति ।

आद्यं वाजपेयगुणविधिपक्षे यजौ । कर्मत्वकरणत्वरूपमुद्देश्यत्वोपादेयत्वरूपं गुणप्रधानत्वरूपं विधेयत्वानुवाद्यत्वरूपं चेति चतुर्विधम् ।

द्वितीयं ग्रहमित्येकत्वस्य सम्मार्गं ग्रहं वा प्रति गुणत्वे द्वितीयाविभक्त्या लक्ष्ये ग्रहापेक्षया प्राधान्यस्यापि श्रौतत्वात् ।

तृतीयं तु अरुणयेत्यत्र तृतीयया करणीभूतामेकहायनीमुद्दिश्यारुणप्रातिपदिकार्थविधौ भिन्नपदोपात्ताया अप्येकहायन्या एकवाक्य वैरूप्यम् । तथा ऽन्यान्यपि नानाविधानि वैरूप्याण्युदाह्रियन्ते । भरतप्रतिग्रहेष्टौ लौकिकवैदिकोभयदाननिमित्तकत्वे क्रत्वर्थपुरुषार्थत्ववैरूप्यम् । पशुचतुर्थैकादशे च । तत्र हि य सत्रायागुरते स विश्वजिता यजेतेति विश्वजित् सत्रे प्रवृत्तमप्रवृत्तं च प्रतिसाधारण्येन विधौ प्रवृत्तं प्रति क्रत्वर्थत्वादप्रवृत्तं च प्रति पुरुषार्थत्वाद्वैरूप्यं स्यादित्युक्तम् । तथावघातस्याज्यौषधसान्नाय्यार्थत्वे दृष्टादृष्टार्थत्ववैरूप्यम् । तथा सोमवमने ऐन्द्रवायवादिलौकिकवैदिकसोमवमननिमित्तकत्वे ऽपेक्षितानपेक्षितविधिवैरूप्यम् । तथा पूर्वोदाहृते य सत्रायागुरत इत्यत्रापि । तथा षष्ठे ऽभ्युदिते ऽग्नौ तण्डुलविवक्षायां दधिशृतयोर्देवतापनयादेवताविधानाकाङ्क्षितानाकाङ्क्षितविधिवैरूप्यम् । तथा मातुलकन्यापरिणयने स्मृत्याचारतुल्यबलत्वे दोषजनकत्वाजनकत्वविरोधाद्वस्तुवैरूप्यम् । इद

च्य एवेतरेतरयोगः तस्मिंश्च शाब्दे सति एकयाजिशब्दोपादानार्थो न विवक्षितस्तस्य सन्निकृष्टप्रमाणद्वन्द्वावगतस्यैकशब्दोपादानेन लक्षणया विप्रकृष्टेनानुवादादिति । एतत्तूदाहरणं मिश्राणां न सम्मतम् । षष्ठे ऽध्याये द्व्याधानं चेत्यत्र द्वन्द्वे इतरेतरयोगो न वाच्यः प्रधानभूतेन कारकेणादाद्यन्विताः समस्यमानपदार्था गुणभावेन च कारकं प्रति विवक्षितसाहित्यास्तथैव क्रियान्वयिनो भवन्ति । यत्र तु प्रधानभूताः पदार्थास्तत्र द्वन्द्वस्थानामपि साहित्यं न विवक्ष्यतइति प्रतिपादनात् । तदा च न्यायादेव समुच्चयावगमसिद्धेश्चार्थे द्वन्द्व इति स्मृतिः शब्दानुशासनमात्रपरा नार्थानुशासनपरापि । तस्मादेकपदेन समुच्चयसमुच्चये वृहद्रथन्तरे इत्येवोदाहरणम् । एकवाक्योपादानात्तु द्विविधसमुच्चययोः समुच्चये दर्शपूर्णमासाभ्यामित्यप्युदाहरणमेव ।

यदा हि न द्वन्द्ववाच्य इतरेतरयोगस्तदा पदान्तरलभ्यत्वेन विप्रकृष्टात्समासलभ्यादितरेतरयोगाद्वाचार्थाधिकरणन्यायेन फलसम्बन्धिना यजेतेत्येकशब्देनोपादानाल्लभ्यमेव साहित्यं सन्निकृष्टमिति विधीयते द्वन्द्वस्तु तदंशे ऽनुवादः । लिङ्गपादवार्त्तिके तु परमतमभ्युपेत्यवाद एव । तदापि तु दर्शपूर्णमासाभ्यामिति समुदायगत द्वित्वं विवक्षितमेव । अन्यथा पौर्णमास्यधिकरणे दर्शपूर्णमासनाम्नो । प्रत्यक्षवाचिनोक्ते सङ्कल्पे यजोर्विशेषणापेक्षायां दर्शः पूर्णमासैश्च यक्ष्यइति सङ्कल्पापत्ते । तस्माद्दर्शपूर्णमासाभ्यां यक्ष्य इतीएतसङ्कल्पसिद्धौ द्वित्वमपि विवक्षितमित्येकवाक्योपादानात् द्विविधसमुच्चययोः समुच्चये दर्शपूर्णमासाभ्यां यजेतेत्यप्युदाहरणमिति सिद्धम् ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्मजभट्टशङ्करकृते मीमांसाबालप्रकाशे समुच्चयभेदनिरूपणम् ।

---

अथ द्वादशलक्षण्यां विप्रकीर्णा इतस्ततः ।
वाक्यभेदभिदा सर्वाः सङ्क्षिप्येह ब्रवीम्यहम् ॥

तत्र त्रिविधस्तावद्वाक्यभेदः । आवृत्तिलक्षणो विभागलक्षणो वैरूप्यलक्षणश्चेति ।

आवृत्तिलक्षणो ऽपि त्रिविध । प्रकृत्यावृत्तिः प्रत्ययावृत्तिरुभयावृत्तिश्चेति ।

प्रकृत्यावृत्तिरपि द्विविधा । प्रातिपदिकावृत्तिर्धात्वावृत्तिश्चेति।

प्रातिपदिकावृत्तिरपि द्विविधा । समासासमासभेदात् ।

प्रत्ययावृत्तिरपि चतुर्विधा । सुप्तिङ्कृत्तद्धितभेदात् । तदुक्तमर्थैकत्वादेकं वाक्यमित्यत्र वार्तिके । पदतदेकदेशतत्समूहावृत्तिप्रसङ्गात्मकस्तद्विभागलक्षणो वाक्यभेद इति । तथा विभागलक्षणे गम्यमानसम्बन्धत्यागो ऽध्याहारकल्पना च दोषः। इतरत्रावृत्तेरवैदत्वादप्रामाण्यमिति। एतद्व्याख्यातं भट्टसोमेश्वरेण वाजपेयगुणविधावधानतपदावृत्तिप्रेक्षैकार्थ्यविवक्षायां पदैकदेशप्रातिपदिकावृत्तिरैहोऽपि तदभयस्येन विशेषणे ह्यर्थवान्निमाछैदिति पदसमूहावृत्तिः। कण्ठस्य प्रकरणनिवेशो ऽङ्गणयेति पदस्य विद्धाख्यादिवाक्याद्विभाग इति विभागलक्षणवाक्यभेदस्य स्थानान्तरभेदा न सन्तीति नोक्ताः ।

वैरूप्यलक्षणो ऽपि वाक्यभेदो ऽनेकविधः । वैरूप्यभेदात् । तत्र वैरूप्यं त्रिविधं प्रकृतौ प्रत्यये वाक्ये चेति ।

आद्यं वाजपेयगुणविधिपक्षे यजौ । कर्मस्वरूपत्वस्वरूपमुद्देश्यत्वोपादेयत्वरूपं गुणप्रधानत्वरूपं विधेयत्वानुवाद्यत्वरूपं चेति चतुर्विधम् ।

द्वितीयं ग्रहमित्येकवचनस्य सम्मार्गं ग्रहं वा प्रति गुणत्वे द्वितीयाविभक्त्या लक्ष्ये ग्रहापेक्षया प्राधान्यस्यापि श्रौतत्वात् ।

तृतीयं तु अरुणयेत्यत्र तृतीयया करणीभूतामेकहायनीमुद्दिश्यारुणप्रातिपदिकार्थविधौ भिन्नपदोपात्तया आश्रेकहायन्या एकवाक्ये वैरूप्यम् । तथा ऽन्यान्यपि नानाविधानि वैरूप्याण्युच्यन्ते । यस्य प्रतिग्रहे लौकिकवैदिकोभयदाननिमित्तकत्वे क्रत्वर्थपुरुषार्थत्ववैरूप्यम् । पञ्चचतुर्थैकादशे च । तत्र हि यः सत्रायागुरते स विश्वजिता यजेतेति विश्वजितः सत्र प्रवृत्तमप्रवृत्तं च प्रति साधारण्येन विधौ प्रवृत्तं प्रति क्रत्वर्थत्वादप्रवृत्तं च प्रति पुरुषार्थत्वाद्वैरूप्यं स्यादित्युक्तम् । तथावघातस्याज्यौषधसान्नाय्यार्थत्वे दृष्टादृष्टार्थत्ववैरूप्यम् । तथा सोमवमने लौकिकवैदिकसोमवमननिमित्तकत्वे ऽपेक्षितानपेक्षितविधिवैरूप्यम् । तथा पूर्वेद्युर्दीक्षे यः सत्रायागुरतस्त्वस्याः वि। तथा षष्ठे ऽभ्युदिते ऽग्नौ तण्डुलावपनार्थं दधिशृतयोर्देवतानयनापादेवताविधानाकाङ्क्षानाकाङ्क्षितविधिवैरूप्यम् । तथा मानुष्यकस्यापरिगणने स्मृत्याचारानुपपत्त्येव दोषजनकत्वाजनकत्वविरोधात्स्तुवैरूप्यम् । इदं

च्य एवेतरेतरयोगः तस्मिंश्च शब्दे सति एकयाजिशब्दोपादानार्थो न विवक्षितमस्य सन्निकृष्टप्रमाणद्वन्द्वावगतस्यैकशब्दोपादानेन लक्षणया विप्रकृष्टेनानुवादादिति । एतत्तूदाहरणं मिश्राणां न सम्मतम् । षष्ठे ऽध्याये द्व्याधानं चेत्यत्र द्वन्द्वे इतरेतरयोगो न वाच्यः प्रधानभूतेन कारकेणादावन्विताः समस्यमानपदार्था गुणभावेन च कारकं प्रति विवक्षितसाहित्यास्तथैव क्रियान्वयिनो भवन्ति । यत्र तु प्रधानभूताः पदार्थास्तत्र द्वन्द्वस्थानामपि साहित्यं न विवक्ष्यत इति प्रतिपादनात् । तदा च न्यायादेव समुच्चयावगमसिद्धेश्चार्थे द्वन्द्व इति स्मृतिः शब्दानुशासनमात्रपरा नार्थानुशासनपरापि । तस्मादेकपदेन समुच्चयसमुच्चये बृहद्रथन्तरे इत्येवोदाहरणम् । एकवाक्योपादानात्तु द्वित्वसमुच्चययोः समुच्चये दर्शपूर्णमासाभ्यामित्यप्युदाहरणमेव ।

यदा हि न द्वन्द्ववाच्य इतरेतरयोगस्तदा पदान्तरलभ्यत्वेन विप्रकृष्टात्समासलभ्यादितरेतरयोगाद्वायार्थाधिकरणन्यायेन फलसम्बन्धिना यजेतेत्येकशब्देनोपादानाल्लभ्यमेव साहित्यं सन्निकृष्टमिति विधीयते द्वन्द्वस्तु तदंशे ऽनुवादः । लिङ्गपादवार्त्तिके तु परमतमभ्युपेत्यवाद एव । तदापि तु दर्शपूर्णमासाभ्यामिति समुदायगतं द्वित्वं विवक्षितमेव । अन्यथा पौर्णमास्यधिकरणे दर्शपूर्णमासनाम्नो । प्रत्येकवाचितोक्ते सङ्कल्पे यजेर्विशेषणापेक्षायां दर्शः पूर्णमासेश्च यक्ष्य इति सङ्कल्पापत्ते । तस्माद्दर्शपूर्णमासाभ्यां यक्ष्य इतीष्टसङ्कल्पसिद्धौ द्वित्वमपि विवक्षितमित्येकवाक्योपादानात् द्वित्वसमुच्चययोः समुच्चये दर्शपूर्णमासाभ्यां यजेतेत्यप्युदाहरणमिति सिद्धम् ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमी-
मांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्म-
जभट्टशङ्करकृते मीमांसाबालप्रकाशे
समुच्चयभेदनिरूपणम् ।

---

अथ द्वादशलक्षण्यां विप्रकीर्णा इतस्ततः ।
वाक्यभेदभिदा सर्वाः संक्षिप्येह ब्रवीम्यहम् ॥

तत्र त्रिविधस्तावद्वाक्यभेदः । आवृत्तिलक्षणो विभागलक्षणो वैरूप्यलक्षणश्चेति ।

आवृत्तिलक्षणोऽपि त्रिविधः। प्रकृत्यावृत्तिः प्रत्ययावृत्तिरुभयावृत्तिश्चेति।

प्रकृत्यावृत्तिरपि द्विविधा। प्रातिपदिकावृत्तिर्धात्वावृत्तिश्चेति।

प्रातिपदिकावृत्तिरपि द्विविधा। समासासमासभेदात्।

प्रत्ययावृत्तिरपि चतुर्विधा। सुप्तिङ्कृत्तद्धितभेदात्। तदुक्तमर्थैकत्वादेकं वाक्यमित्यत्र वार्तिके। पदतदेकदेशतत्समूहावृत्तिप्रसङ्गात्मकत्वाद्विभागलक्षणो वाक्यभेद इति। तथा विभागलक्षणे गम्यमानसम्बन्धत्यागोऽनेकादृष्टकल्पना च दोषः। एतच्चावृत्तत्वं वेदस्याप्रामाण्यमिति। एतच्च व्याख्यातं भट्टसोमेश्वरेण वाजपेयगुणविधावावृत्तपदावृत्तिर्ग्रहैकत्वविवक्षायां पदैकदेशप्रातिपदिकावृत्तिर्हविरार्तिमत्त्वेन विशेषणे हविरार्तिमार्छेदिति पदसमूहावृत्तिरारुण्यस्य एतत्प्रकरणनिवेशोऽरुणयेति पदस्य पिङ्गाक्ष्यादिवाक्याद्विभाग इति विभागलक्षणवाक्यभेदस्य त्ववान्तरभेदा न सन्तीति नोक्ताः।

वैरूप्यलक्षणोऽपि वाक्यभेदोऽनेकविधः। वैरूप्यभेदात्। तत्र वैरूप्यं त्रिविधं प्रकृतौ प्रत्यये वाक्ये चेति।

आद्यं वाजपेयगुणविधिपक्षे यजौ। कर्तव्यकरणत्वरूपमुद्देश्योपादेयत्वरूपं गुणप्रधानत्वरूपं विधेयत्वानुवाद्यत्वरूपं चेति चतुर्विधम्।

द्वितीयं ग्रहमित्येकत्वस्य सम्मार्गे ग्रहं वा प्रति गुणत्वे द्वितीयाविभक्त्या लक्ष्ये ग्रहापेक्षया प्राधान्यस्यापि श्रौतत्वात्।

तृतीयं तु अरुणयेत्यत्र तृतीयया करणीभूतामेकहायनीमुद्दिश्यारुण्यप्रातिपदिकार्थविधौ भिन्नपदोपात्ताया अपेक्षैकहायन्या एकवाक्ये वैरूप्यम्। तथाऽन्यान्यपि नानाविधानि वैरूप्याण्युपपद्यन्ते। वाक्यप्रतिग्रहेष्टलौकिकवैदिकोभयदाननिमित्तकत्वे क्रत्वर्थपुरुषार्थवैरूप्यम्। पशुचतुर्थकादशो च। तत्र हि यः सत्रायावगुरेत् स विश्वजिता यजेतेति विश्वजितः सत्र प्रवृत्तमप्रवृत्तं च प्रतिसाधारण्येन विधौ प्रवृत्तं प्रति क्रत्वर्थत्वादप्रवृत्तं च प्रति पुरुषार्थवैरूप्यं स्यादित्युक्तम्। तथावघातस्याज्यौषधसान्नाय्यार्थत्वे दृष्टादृष्टार्थत्ववैरूप्यम्। तथा सोमवमने लौकिकवैदिकसोमवमननिमित्तकत्वेऽपेक्षितानपेक्षितविधिवैरूप्यम्। तथा पूर्वोदाहृते यः सत्रायावगुरेदित्यत्रापि। तथा यद्येऽभ्युदितेऽपि तण्डुलार्पणपक्षायां दधिशृतयोर्देवतापनयाद्देवताविधानाकाङ्क्षिताकाङ्क्षितविधिवैरूप्यम्। तथा मातुलकन्यापरिणयने स्मृत्याचारतुल्यबलत्वं दोषजनकन्याजनकत्वविरोधाद्वस्तुवैरूप्यम्। इदं

च विधिभेदादावृत्त्यभावे ऽपि वैरूप्यप्रसङ्गादुदाहृतम्। तथान्यदपीष्टमथ वैश्वदेवस्याग्निसंस्कारकर्मत्वे पुरुषार्थत्वे चैकमेव कर्म प्रत्येकमेवात्र द्रव्यं गुणभूतं प्रधानभूतं चेति । तथा कृष्णलचरौ घृते श्रपयतीति श्रपणाप्रतिप्रसवघृतनियमविधिवैरूप्यम् । तथा "पूषा प्रपिष्टभाग" इति पेषणस्य चरुपशुपुरोडाशार्थत्वे चरौ प्रतिप्रसवात् पशुपुरोडाशयोश्चापूर्वविधित्वाद्वैरूप्यम् । तथा नवमे पत्नीसंयाजान्तान्यहानीत्यत्रापूर्वविधिनियमविधिवैरूप्यादन्त्याहर्यजं प्रवृत्तिरित्युक्तम् । तथा ग्रहैकत्वविवक्षायामपूर्वविधिपरिसंख्यावैरूप्यम् । तथोभयार्थाधिकरणे ऽपि । तथा दशमतृतीयोपान्त्ये सोमचमसो दक्षिणेत्यत्रैकवाक्यत्वे सोमचमस एवेति नियमात्स ब्रह्मण एवेति परिसंख्यापत्तेश्च वैरूप्यम् ।

तथा नित्यानित्यसंयोगविरोधात्मकं च वैरूप्यम् । तदपि भाष्यस्वरूपे द्वारे वा ।

अथ सप्तमसामानविध्ये ।

द्वितीये फलचमससामानविध्यधिकरणे ।

तथा षष्ठचतुर्थे एकस्यैवोपलक्ष्योपलक्षणत्ववैरूप्यम् । तत्र हि होमार्थचतुरवत्तनाशे शेषादेव पुनरवदेय "यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयु"र्वा आज्येनैता देवताः परिसंख्याय यजेतेति हविर्नाशे निमित्ते विहिते त्वाज्ये निःशेषनष्टे हविष्युतान्यथा सपुरोडाशान्तरोत्पादने प्रसक्ते हविर्नाशनिमित्तविहिताज्येन यष्टव्यमिति संशय्य पूर्वकोटिं पूर्वपक्षीकृत्य सिद्धान्तितं तन्त्ररत्ने । कृत्स्नस्यात्रिकलस्य पुरोडाशस्य मध्यपूर्वार्धे अवदानोपलक्षणमित्येव शास्त्रार्थं । कृत्स्नस्यैव शास्त्रवेलायां प्रकृतत्वात् । इतरथा यदि कृत्स्नपुरोडाशमध्यपूर्वार्धलक्षितमवदानद्वयं शास्त्रार्थ इति न गृह्यते ततो द्व्यवदाननाशे सति इतरत्सर्वमवशिष्टं तस्योपलक्ष्यस्य नाशे तु सति तदेवोपलक्षणभूतमेव शिष्टम् । पुनरवदीयमानमुपलक्ष्यं प्रसज्यतेति वैरूप्यं शास्त्रस्य स्यात् । एकरूपेण च शास्त्रेण भाव्यम् । तस्मादुपादानत्वतात्विपञ्चमीवलाद्यागाङ्गभूतद्व्यवदानोपलक्षणमेवैतत्र तु स्वयं यागाङ्गभूतमुपलक्ष्यमिति । यथा विधिप्रत्यये ऽपि विध्यनुवादवैरूप्यम् । तद्यथा द्वितीये "वायव्यं श्वेतमालभेत सौर्यं चरुं निर्वपेदि"ति । दार्शपौर्णमासिकाग्नीषोमालभत चतुरो मुष्टीन्निर्वपतीत्यालम्भनिर्वापावनूद्य श्वेतचरुगुणौ विधीयेते वायव्यमितीयाया श्वेतप्रभत्वाद् श्वेतस्य च वायुसम्बन्धात्सौर्यमिति च चरौ स्थाल्यास्तेजःस्थितत्वं सूर्यसादृश्यात्कथं चिदनुवाद

इति पूर्वपक्षिते आलम्भनिर्वापयोर्लोके ऽपि सत्त्वेन व्यभिचाराच्च दार्शपौर्णमासिकयोरेवोपस्थितिः सम्भवतीति सिद्धान्तिनोक्ते लिङ्गाद्विहितौ यावालम्भनिर्वापाविति विशेषणाश्रयं दोष इत्याशङ्क्य एवं तर्हि लिङ्गा ऽनुवादकत्वाद् गुणविधिर्न लभ्यते उभयाश्रयणे च युगपद्विध्यनुवादविरोध इत्युत्तरितमिति ।

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीमद्दशङ्करकृते
मीमांसाबालप्रकाशे द्वादशाध्यायार्थमङ्ग्रहः ।

